कनकश्रियं कनकवत्कान्तिमती तन्नाम्नी च, स्वपुत्रीम्, ताभ्यां चेटीभ्याम्, नाटकसारस्य नाटकतत्त्वस्य श्रेष्ठनाटकस्य वा शिक्षणे शिक्षणनिमित्तं समर्पयत् दत्तवान् ॥७१॥

निरीक्ष्य तां कृत्रिमचेटिके पटु-श्रिया जयन्तीममराङ्गना अपि ।
सुशिक्षितां शिक्षयतः स्म नाट्यकं, समग्रकं साभिनयं क्रमेण ते ॥७२॥

कृत्रिमचेटिके ते द्वे अपि पटुश्रिया चारुशोभया अमराङ्गनाः पटुश्रीषु प्रसिद्धाः देवाङ्गना-अपि, किमुतान्या इत्यपेरर्थः, जयन्तीमधःकुर्वतीम्, सुशिक्षिताम् शास्त्रेतरशिक्षासमन्विताम्, तां कनकश्रियम् निरीक्ष्य, साभिनयं समग्रकं सम्पूर्णं नाट्यकं नाट्यम् क्रमेण शिक्षयतः स्म, न तु युगपत्, शनैर्हि विधेति भावः ॥७२॥

अगायतां ते च गुणैकसेवधिं, सदैव नाट्यान्तरनन्तवीर्यकम् ।
गुणांस्तदीयान् श्रुतिगोचरं नयन्त्यपृच्छदेते नृपतेः सुताऽन्यदा ॥७३॥

ते कृत्रिमचेट्यौ च, नाट्यान्तः नाट्यशिक्षणमध्ये सदैव अनन्तवीर्यकमनन्तवीर्यम् गुणानामेकोऽद्वितीयः सेवधिर्निधिः अनन्तवीर्यः गुणनिधिरित्येव, अगायताम् गाते स्म, अन्यदा, नृपतेः सुता कनकश्रीः, तदीयान् अनन्तवीर्यसम्बन्धिनो गुणान् श्रुतिगोचरं नयन्तीं शृण्वन्तीं सती, एते चेटिके अपृच्छत् ॥७३॥

तत्पृच्छामेवाह—

युवा युवाभ्यामपि गीयते नृपः, सदा वयस्ये ! क उदग्ररागतः ? ।
इदं निशम्याभ्यधितापराजितः, स चेटिकारूपधरोऽथ तां प्रति ॥७४॥

वयस्ये ! सख्यौ ! युवाभ्यां द्वाभ्याम्, सदाऽपि, नतु जातुचित्, उदग्ररागतः उच्चैरागतः उत्कृष्टप्रीतेर्वा कः युवा तरुणो नृपः गीयते गानं विषयः क्रियते ? अथ प्रश्नानन्तरम्, इदं पृष्टं निशम्य चेटिकारूपधरः सः कनिष्ठः अपराजितः तदाख्यः तां कनकश्रियम् प्रत्यभ्यधितोदतरत् ॥७४॥

तदुत्तरमेवाह—

शुभाशयेऽस्मिन्विजये शुभापुरी, समृद्धिसंकेतनिकेतमस्ति ताम् ।
समागता यत्र विहारलीलया, पुलोमजाऽमंस्त न चामरावतीम् ॥७५॥

शुभाशये ! शुभचित्तवृत्ते ! अस्मिन् विजये रमणीयाख्यविजये समृद्धेः सम्पदः सङ्केतनिकेतं सङ्केतगृहमिव शुभापुरी अस्ति, समृद्धिमतीत्यर्थः । यत्र शुभापुर्याम्, विहारलीलया विहरण-

क रे, समागता पुलोमजा इन्द्राणी, ताम् समृद्ध्यादिप्रसिद्धाम्, अमरावतीं देवनगरीम्, च अमंस्त सत्करोति स्म, अमरावत्यपेक्षयाऽपि सा नगरी समृद्धा उत्कृष्टा चेति उपमानादुपमे- ...नि व्यतिरेकाऽलङ्कार ॥७५॥

अभूदिह क्षत्रियवंशमौक्तिक,– प्रभोनरेन्द्रः स्तिमितादिसागरः ।
व्रतं समादाय नृजन्मसार्थकं, चकार कारुण्यरसाम्बुधिश्च यः॥७६॥

इह शुभापुर्याम्, क्षत्रियस्य वंशोऽन्वयः स एव वंशस्त्वक्सारस्तत्र मौक्तिकप्रभः मुक्ता- ...ः, स्तिमितादिसागरः स्तिमितसागरनामा नरेन्द्रः अभूत् । यश्च, कारुण्यमेवरसः तस्य ...: रसस्य अम्बुधिरिव कारुण्यनिधिः, व्रतं पञ्चमहाव्रतं समादाय स्वीकृत्य, नृजन्मसार्थकं कार, व्रतग्रहणेनैव जन्मनः साफल्यमितिभावः । यदुक्तं "तेन सुलब्धं भवति जन्मे" ति ॥७६॥

तदङ्गजन्माऽजनि चापराजितः, सपत्नसङ्घैरपराजितः सदा ।
अनन्तवीर्यः कमलाक्षि ! सान्वयः, समस्ति तस्यानुज उत्तमोत्तमः ॥७७॥

कमलाक्षि ! तस्य स्तिमितसागरस्य अङ्गजन्मापुत्रः, सपत्नसङ्घैः शत्रुभिः सदा, ...जितः अनभिभूतः अपराजितः तन्नामा, तस्य अपराजितस्यानुजः कनिष्ठः अनन्तवीर्यः । चाजनि जातवान्, स इत्यर्थाल्लभ्यते, सान्वयः सपरिवारः, उत्तमोत्तमः । सर्वोत्तमः ...॥७७॥

स मुख्यवृत्त्या सुभगे ! कलानिधिः, कलानिधिग्लौरुपचारवृत्तितः ।
गुणाश्रयोऽसौ परमार्थवृत्तितो, गुणाश्रयो द्रव्यमवास्तवी श्रुतिः ॥७८॥

सुभगे ! स अनन्तवीर्यः मुख्यवृत्त्या अभिधाख्यशब्दशक्त्या कलानिधिः कलानां चतु- ...१४ क... निधिराकरः अतः कलानिधिसङ्केतस्तत्रैव, नतु तन्त्रे, ग्लौश्चन्द्रः उपचारवृत्तितः ...ा वृत्त्या, तत्र सङ्केताभावादिति भावः, कलानिधिः कलानां षोडशकिरणांशानां निधिः; ...शे कलाशब्द औपचारिकः, आह्लादकत्वादिना कलासाधर्म्यादितिभावः । तथा, परमार्थवृत्तितः ...तः असौ अनन्तवीर्यः गुणाश्रयः गुणानां शौर्यादीनामाश्रयः, 'गुणाश्रयोद्रव्यम्,' इत्येवं श्रुतिः ...त्रम्, अवास्तवी उपचारमूला, शौर्यादिगुणानामात्मनीव रुपरसादीनां द्रव्ये वृत्ते रूपादिषु गुण- व्यवहारः, न तु तानि गुणाः, ते तु तत्रैव सन्ति इति भावः ॥ गुणिषु कलावत्सु च स सर्व- ...ः ॥७८॥

क्वचिद्विवेदाकृतिरेव सुन्दरा, न चापि सौभाग्यमभङ्गुरस्थितिः ।
क्वचित्पुनः स्थेयसि तत्र न द्वता, विभाव्यते भाविनि!तत्र तत्त्रयम् ॥७९॥

भाविनि ! कचित् , आकृतिः स्वरूपमेव सुन्दरा भवेत् , एवकारव्यवच्छेद्यमाह–अभङ्गुरा स्थिरा स्थितिर्यस्य तादृशं सौभाग्यं न च अभङ्गुरा स्थितिः सौभाग्यं न च भवेदिति सम्बध्यते, तथा, पुनः तत्र सौभाग्यं, स्थेयसि स्थिरतरे सत्यपि, ज्ञता विद्वत्वम् न भवेत् , तत्रानन्तवीर्यें तत्त्रयमेवेत्यर्थः ॥७९॥

विभर्तु किं तद्गुणवर्णनाविधौ, विदग्धतां मादृगवोधविक्लवा ।
चतुर्मुखीभूय विरञ्चिरात्मना, विधाय यत्र प्रभुतां व्यधत्त न ॥८०॥

तस्यानन्तवीर्यस्य गुणानां वर्णनायाः कीर्तनस्य विधौ क्रियायाम्, अवोधविक्लवा अज्ञानोपहता मादृक् चेटी जातीया, किं कुतः विदग्धतां नैपुण्यं विभर्तु, अज्ञस्य गुणातिशयवर्णनं सामर्थ्यभावाद्दुष्करमित्यर्थः । यत्र च ज्ञानवतामपि न गतिरित्याह–यत्रानन्तवीर्यगुणवर्णने, विरञ्चिः वेदाधिकर्तृत्वेन ज्ञानातिशयवानपि, आत्मना स्वयम् , चतुर्मुखीभूय एकेन मुखेन न गुणातिशयो वर्णयितुं शक्य इति मुखचतुष्टयेन न तच्छक्यतेति चतुर्मुखीभूयाऽपि प्रभुतां सामर्थ्यं न व्यधत्त दधौ इति अतिशयोक्तिः ॥८०॥

गुणांस्तदीयान् श्रवणावतंसतां, यथा यथा सा नयति स्म तन्मुखात् ।
तथा तथा तामदुनोत् मनोभवः, प्रक्लृप्तनालीकशरैः स निष्ठुरम् ॥८१॥

सा कनकश्रीः, तस्यापराजितस्य मुखात् , तदीयान् अनन्तवीर्यसम्बन्धिनः गुणान् गुणगाथाः, यथा यथा, श्रवणयोरवतंसतां भूषणतां नयतिस्म, सादरं शृणोति स्म, स सर्वत्राप्रतिहतप्रसरः मनोभवः कामः तथा तथा प्रवक्लृप्ताः प्रहारार्थमेव नियोगेच्छा विषयी कृताः नालीकशब्दाः कमल पुष्पाण्येव बाणास्तैः निष्ठुरं यथा स्यात्तथा अदुनोत् पीडयतिस्म, नितरां तदाभिलाषिणी जातेत्यर्थः ॥८१॥

**अथ श्लोकचतुष्टयेन तस्याः स्थितिमाह—**

शुभापुरीभूमिरियं प्रशस्यते, स एव यस्याः पतिरास्थितस्थितिः ।
महीभृतं तं हृदयेन बिभ्रती, शिरीषमृद्वी श्रममागमं परम् ॥८२॥

इयं सद्यःश्रुता शुभापूरीभूमिः प्रशस्यते बहुमन्यते, तत्र हेतुमाह-यस्याः भूमेः सोऽनन्तवीर्य एव पतिरीशिता आस्थितस्थितिः, पतिसङ्गेनैव चेतनाचेतनसाधारणेन प्रशस्या नतु चेतनाऽप्यहमित्येवम् , तं महीपतिमनन्तवीर्यं हृदयेन बिभ्रती मनसा ध्यायन्ती, शिरीषवन्मृद्वी मृद्वङ्गी सा कनकश्रीः परमत्यन्तं श्रमं खेदमगमत् , विरहव्यथार्ता जातेत्यर्थः ॥८२॥

विलोक्य तं मध्यमलोकनायकं विलोचने पायसपारणाविधिम् ।
अमूदृशाऽनीक्षणिकोपवासिनी, चिराय ते मेऽपि कदा विधास्यतः ? ॥८३॥

चिराय चिरकालात्, अमूदृशा या अनीक्षणिका तन्नृपानवलोकनम् तेन उपवासिनी कृतानशना, इष्टादर्शनेन तदुत्सुकं चक्षुरूपोषितं वर्ण्यते इतिभाव । ते तव चेट्याः मेऽपि विलोचने नेत्रे, मध्यमलोकस्य मर्त्यलोकस्य नायकं स्वामिनं तमनन्तवीर्यं विलोक्य कदा, पायसेन दुग्धसिद्धान्नेन पारणाविधिमुपवासान्तभोजनम् विधास्यतः करिष्यतः सखीं चेटीं प्रति प्रश्नः अत्युत्कण्ठया । उपोषितस्य पायसपारणावत् प्रियदर्शनोत्कण्ठितस्य लोचनप्रियदर्शनमित्यर्थः ॥८३॥

समीहितं पुण्यमृते न लभ्यते, कदाचन स्फीतिमताऽपि सम्पदाम् ।
न चापि पुण्यं विहितं मया हितं, विलोकिताहे वरमेव तं कथम् ! ॥८४॥

सम्पदां स्फीतिमतां अतिशयवताऽपि पुण्यमृते विना, समीहितमिष्टं कदाचन न लभ्यते, इष्टलाभे पुण्यं हेतुरिति भावः । स्वस्य तदभावादिष्टासिद्धिरित्याह—मया कनकश्रिया पुण्यं न चापि नैव विहितम् , इष्टाप्राप्तिर्हि पुण्याभावं साधयतीति भावः । ततः, कथं केन प्रकारेण हितमिष्टम् , वरम् , गुणानुरागाद्वरतया मनसि कल्पितम् , तमनन्तवीर्यं विलोकिताहे द्रक्ष्यामि ? न कोऽप्यन्य उपाय इत्यर्थः ॥८४॥

विचिन्तयन्तीति नरेन्द्रकन्यका, भुजिष्ययाऽवाचि तयैव धूर्तया ।
विचक्षणे ! तस्य समीक्षणे मनः, समुत्सुकं किं तव वर्तते मनाक् ? ॥८५॥

इत्युक्तप्रकारेण विचिन्तयन्ती नरेन्द्रकन्यका राजपुत्री कनकश्रीः तया प्रस्तुतया धूर्तया कृत्रिमवेषेण छलनापरया भुजिष्यया चेट्या अवाचि पृष्टा, प्रश्नमेवाह- विचक्षणे ! बुद्धिमति ! तव तत्र लग्ना बुद्धिरिति त्वं बुद्धिमतीति चाटुकृतं सबोधनम् । तस्यानन्तवीर्यस्य समीक्षणे तव मनः, मनाक् किञ्चिदुत्सुकं वर्त्तते किम् ? तदाशयस्य स्पष्टतरज्ञानार्थं तत्प्रश्नः ॥८५॥

अवोचदेतामिति राजनन्दिनी, विमुच्य निःश्वासपरम्परामियम् ।
तदीक्षणे धावति मामकं मनो, विधौ प्रसन्ने सखि ! वीक्ष्यते परम् ॥८६॥

इयं तदा राजनन्दिनी, निःश्वासस्य परम्पराम् दीर्घनिःश्वासमित्यर्थः । एतेनाऽपूर्वरागः सूच्यते । विमुच्य, एतां चेटीमित्यवोचत् , इतीति किमित्याह—सखि ? तस्यानन्तवीर्यस्येक्षणे दर्शने, निमित्ते सप्तमी, मामकं मनः धावति उत्कण्ठते, परं किन्तु, विधौ भाग्ये प्रसन्नेऽनुकूले सति वीक्ष्यते, तादृशगुणवतो दर्शनं भाग्यादेव सम्भवति उपयान्तराभावात् ॥८६॥

तदुक्तमाकर्ण्य समुच्छ्वसन्मनाः, पुनर्जगौ कृत्रिमचेटिकाऽपि सा।
त्वयोच्यते सुन्दरि! चेन्मदग्रतः, समानयाम्येव तदाऽत्र तं नृपम् ॥८७॥

तस्याः कनकश्रिया उक्तं वचनमाकर्ण्य, समुच्छ्वसन्मनाः प्रसीदच्चित्ता चेटिकाऽपि पुनर्जगौ, किमित्याह-सुन्दरि? मदग्रतः, त्वया आत्मना ननु परमुखेन, उच्यते चेत्तदा तं नृपमनन्तवीर्यम् अत्र तवान्तिके समानयाम्येव, ममैवं निश्चयः; त्वदुक्तं मयाऽवश्यं कर्त्तव्यम्; भक्त्यतिशयादिति स्वं हितं दर्शयन्त्याः चाटूक्तिः वशीचकारश्च फलम् ॥८७॥

जगाद चैनां दमितारिकन्यका, सखि! क्व वैताढ्यमहामहीधरः।
शुभापुरी सा क्व दवीयसी यतः, किमाम्रपाकोऽपि भवेदपेक्षया! ॥८८॥

दमितारिकन्यका कनकश्रीः, एनां चेटीं जगाद च, किमित्याह-वैताढ्यमहीधरः क्व, बहुदूरवर्त्तीत्यर्थः, दवीयसी दूरतरा, सानन्तवीर्याऽधिष्ठिता शुभापुरी क्व? चेट्यास्तवाल्पसाधनायास्तत्र गतागतयोः सामर्थ्याभावः, न केवलं वाङ्मात्रेण कार्यं सिध्यति, न वेच्छामात्रेण, तत्र दृष्टान्तमाह-यतः, अपेक्षया स्वोत्कण्ठामात्रेण आम्रस्य तदाख्यफलविशेषस्य पाकः भवेदपि किम्? नैव भवेदित्यर्थः, लोकोक्तिरियम्, यथा स्वेच्छामात्रेण नाम्रपाकः, तथा त्वया तदानयनं न सम्भवतीत्यर्थः ॥८८॥

मज्जतस्तृणमवलम्ब इति सम्भाव्याह—

परं तदभ्यासजुषि प्रसादना, परायणे त्वय्युपपद्यतेऽखिलम्।
प्रसादमासेदुषि वा विधौ नृणां, न दुर्घटं किञ्चन सम्भवत्यपि ॥८९॥

परमथवा तस्यानन्तवीर्यस्य अभ्यासजुषि समीपस्थाया प्रसादना परायणे तत्प्रसादपरायाम् त्वयि, अखिलम् तदानयनादिकमुपपद्यते सयुक्तिकं प्रतिभाति, अत्र युष्मच्छब्देन चेटिकपरामर्शात्प्रसादनापरायणे इति पुल्लिङ्गविशेषणं न सङ्गच्छते, ततः प्रमादोऽत्र कवेरिति ध्येयम्, यद्वा प्रसादना परायणे इति चेटिका सम्बोधनम्, ममेति शेषः मम प्रीतिकरकार्यतत्परे इत्यर्थः। वा अथवा, विधौ भाग्ये, प्रसादमासेदुषि अनुकूले सति, नृणां किञ्चन स्वदृष्ट्या असाध्यमपि, दुर्घटम् दुःसाध्यं न सम्भवति, यदुक्तम्—"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः" इति ॥८९॥

कृतप्रतिज्ञाऽनुगते! त्वमात्मनः सखि! प्रतिज्ञां परिपूरयेति सा।
तयोदिता स्वीयवयस्यया समं,—निसर्गरूपं प्रकटीचकार तत् ॥९०॥

कृतां प्रतिज्ञामनुगता वा कृता या प्रतिज्ञा तयाऽनुगता प्रतिज्ञातार्थविधायिनी तत्सम्बोधने, सखि ! त्वम् आत्मनः प्रतिज्ञां तदानयनरूपी परिपूरय पालय, इति इत्थं तया कनकश्रिया उदिता कथिता सा कृत्रिमचेटी, स्वीयवयस्यया कृत्रिमवेषधारिण्या द्वितीयया चेट्या समम् यथयथास्वं निसर्गरूपम् स्वाभाविकपुंवेषं प्रकटीचकार ॥९०॥

विलोक्य तां विस्मितमानसामसा,–विमामवादीदपराजितो बलः ।
अनन्तवीर्यः सुमुखि ! त्वदग्रतः, कृतं यदीयं गुणवर्णनं मया ॥९१॥

विलोक्य पुरुषरूपेण तौ दृष्ट्वा, विस्मितमानसाम् अतर्कितघटनाप्राप्ताश्चर्याम्, तामिमां कनकश्रियम् बलः बलदेवोऽपराजितः अवादीत्, किमित्याह–सुमुखि ! त्वदग्रतः मया यदीयं गुणवर्णनं कृतम्, असौ अनन्तवीर्यः, अयमेव सोऽनन्तवीर्यः इति वृद्धि इत्यर्थः ॥९१॥

विलोचनेन्दीवरयोर्विकाशिनो–र्विलोकनादस्य कलानिधेर्ननु ।
फलं समादत्स्व तथा कृतार्थतां, स्वजन्मनः साध्वि ! विधत्स्व साम्प्रतम् ॥९२॥

साध्वि ! सरले ! अस्य पुरःस्थस्य कलानिधेः कलाविदः अनन्तवीर्यस्य विलोकनात्, विकासिनोः उत्फुल्लयोः विलोचनेन्दीवरयोः प्रफुल्लनीलकमलतुल्यनेत्रयोः फलम् समादत्स्व प्राप्नुहि । एतद्दर्शनेनैव तादृशनेत्रसाफल्यमिति भाव, तथा साम्प्रतम्, स्वजन्मनः कृतार्थतां साफल्यं विधित्स्व कुरु । एतद्दर्शनाभावदशायां नेत्रजन्मद्वन्द्वं निष्फलमेवेत्यर्थः ॥९२॥

निरीक्ष्य तं सा दमितारिपुत्रिका, समालिलिङ्ग प्रथमं सखीमिव ।
त्रपामियं संमदसं विभाजनं, ततो रतिं कर्तुमिवैकसौहृदम् ॥९३॥

सेयं पूर्वोक्तप्रकारा दमितारिपुत्रिका कनकश्रीः सम्मदस्य हर्षस्य संविभाजनमास्पदम् एकसौहृदम् अभिन्नाशयं तमनन्तवीर्यं प्रथमं पुरा कदाप्यदृष्टम् विलोक्य ततः पश्चात्, रतिं कर्तुमिव रतिक्रीडायामिव त्रपां लज्जां समालिलिङ्ग प्राप्ता, प्रथमदर्शने स्त्रीसुलभा लज्जा इति भावः ॥९३॥

अनन्तवीर्योत्तमराजदर्शनाद्बभूव तद्दृक्कमलं विकस्वरम् ।
तदीयतातस्य महान्वयक्षये, परं किमुत्पातनिबन्धनं भवेत् ॥९४॥

अनन्तवीर्य एवोत्तमराजः उत्कृष्टनृपः चन्द्रश्च "राजा प्रभौ नृपे चन्द्रे" इत्यमरः, तस्य दर्शनात्तस्याः कनकश्रियाः दृक्कमलं नेत्रपद्मं विकस्वरं प्रफुल्लम् हर्षादितिभावः, बभूव तदीयता तस्य दमितारेः महान्वयस्य प्रख्यातकुलस्य क्षये नाशे, परमन्यत् किम् उत्पातस्यानिष्टसूचकाऽद्भुतविशेषस्य निबन्धनम् हेतुः भवेत् ? न किमपि, चन्द्रं दृष्ट्वा कमलविकासः सर्वमहानुत्पातः, अथ च कुलीनकन्यायाः स्वैरवृत्तिः पितृकुलं कलङ्कयति इति तत्कुलस्य एवेत्यर्थः ॥९४॥

इयं समीक्ष्य स्वसरं नरेन्द्रजा, स्वयं पुरस्तादपराजितं नृपम् ।
व्यधत्त वक्त्रं यदि वा कुलाङ्गनाः, कुलाङ्गनानां न विदन्ति किं स्थितिम्? ।९५।

इयं नरेन्द्रजा कनकश्रीः स्वयम् पुरस्तादग्रे स्वसरं पत्युभ्रातृत्वाद् भ्रातरम् नृपमपराजितम् समीक्ष्य वक्त्रं स्वमुखम् व्यधत्त अवगुण्ठनेन आच्छादयामास, वक्त्रापिधानं समर्थयति–यदिवा, कुलाङ्गनाः कुलाङ्गनानां स्थितिं मर्यादां किं न विदन्ति ? अपितु विदन्त्येवेत्यर्थः, कुलाङ्गना गुरुजनसमीपे लज्जया तिष्ठन्तीति ॥९५॥

# अनन्तवीर्यं निजघानवल्लभं, कटाक्षबाणैर्निशितैर्यदेषिका ।
अनन्तवीर्यस्य तदाशये पुरा, स्थितस्य कामस्य न किं तदीहितम् ! ॥९६॥

एषिका नकश्रीः, निशितैः भावसूचनपटुत्वात्तीक्ष्णैः हृदावर्जकैः कटाक्षाणि बाणा इततैः कटाक्षावलोकनैः कृत्वा, वल्लभमनन्तवीर्यम् यन्निजघान सप्रेम ददर्श, तदहननम्, अनन्तवीर्यस्य आशये हृदये पुरा प्रथमत एव स्थितस्य कामस्य, ईहितमभिलषितम्, किंन ! अपित्वभिलषितमेवेत्यर्थः कामी हि प्रियायाः कटाक्षावलोकनं कामयत एवेति भावः, सम्भोगशृङ्गारः ॥९६॥

शिशुत्वमारभ्य मयैव पालिता, समेधितप्रौढिरियं निषेधति
ममैव पत्या सह भाषणं मिथो निरस्य लज्जामिति सेति तं जगौ ॥९७॥

मया एव शिशुत्वमारभ्य बाल्यावस्थात एव ज्ञानविकासेन सहैव लज्जापि वर्धेत इति भावः, मम पालिकाया एव, पत्या सह मिथः रहसि परस्परं वा भाषणं निषेधति कर्तुं न ददाति, इति हेतोः लज्जां निरस्य त्यक्त्वा सा कनकश्रीः तमनन्तवीर्यम् इति वक्ष्यमाणप्रकारेण जगौ पूर्वं लज्जया अभाषमाणाऽपि रागातिरेकाल्लज्जां त्यक्त्वा आलापवृत्ताऽभूदित्यर्थः । अत्र विशेषणसाम्याद् भृत्ये स्वामिव्यवहारप्रतीतेः समासोक्तिरलङ्कारः ॥९७॥

तदुक्तिमेवाह--

कुमुद्वती चन्द्रमसेव पद्मिनी, दिवाकरेणेव रमेव विष्णुना ।
बलाहकेनेव तडिद् गुणालय !, त्वया सनाथाऽस्मि परं महीपते ! ॥९८॥

गुणालय ! महीपते ! चन्द्रमसा कुमुद्वती कुमुदिनीइव, दिवाकरेण सूर्येण पद्मिनी इव विष्णुना रमा लक्ष्मीव, बलाहकेन मेघेन तडिद्विद्युदिव, त्वया परमत्यन्तं सनाथा कृतकृत्या जातप्रहर्षा वा अस्मि । मालोपमाऽलङ्कारः ॥९८॥

मदीयभाग्यैरसमैरिहागमत्, स नारदः शारदमेघपाण्डुरः ।
प्रदातुमेव प्रियमन्यथा कथं, समागमः स्याद्भवतोऽत्र मद्गृहे ! ॥९९॥

शारदमेघ इव पाण्डुरः गौरः स नारदः, प्रियं त्वां प्रदातुं मह्यमर्पयितुमेव, असमैः अनुपमैः मदीयभाग्यैः इहात्र नगरे आगमत्, भवतु नाम तस्य कार्यान्तरमपि, किन्तु ममैव महान् लाभ इति मदर्थमेव स आगतः, नच प्रकारान्तरेण तत्सम्भवतीत्याह–अन्यथा तदनागमने, भवतः अत्र मद्गृहे समागमः समागमनं कथं केन प्रकारेण भवेत्? नान्यः समागमोपाय इत्यर्थः ॥९९॥

**ममैव दुर्गे हृदये वसन्नयं, विजित्य कामं विषमायुधस्त्वया ।**
**यथा स्वदासत्वपदेऽभ्यषिच्यताऽभिषिच्यतां नाथ ! तथा द्विषज्जनः ॥१००॥**

नाथ ! मम एव हृदये तदात्मके दुर्गे कोट्टे वसन् अयं प्रत्यक्षवदनुभूयमानः विषमायुधः कामः, काममनायासेन त्वया विजित्य वशीकृत्य, यथा, स्वदासत्वपदे अभ्यषिच्यत, मदीयां कामपीडां स्वसमागमेन दूरमकरोः, तथा, द्विषज्जनः आवयोः प्रीतिपरिपन्थित्वेन सम्भाव्यमानः शत्रुश्च, अभिषिच्यताम्, स्वदासत्वपदे इति सम्बध्यते, आगामिप्रत्यूहं मिथः सङ्गमविरोधिनं दूरीकुर्वित्यर्थः ॥१००॥

**अनन्तवीर्योऽवददाहतं न चे–दिदं वचश्चम्पकपत्रगौरि ! ते ।**
**श्रियो गृहं तर्हि शुभां शुभाशये, पुरीं मदीयामुररीकुरु द्रुतम् ॥१०१॥**

अनन्तवीर्यः अवदत्, किमित्याह–चम्पकस्य पुष्पविशेषस्य पत्रमिव गौरी गौरवर्णा तत्सम्बोधने । इदमुक्तप्रकारं ते वचः, आहतं मृषार्थकम् मिथ्येति यावत्, "आहतं तु मृषार्थकमि"त्यमरः । न चेत्, तर्हि, शुभाशये ! श्रियः लक्ष्म्याः गृहमावासमिव, एतेन नित्यं सर्वविधश्रीसम्पन्नत्वमुक्तम्, मदीयां मत्पालितां शुभांपुरीं शुभापुरीम्, द्रुतमुररीकुरु स्वीकुरु, गत्वा तत्रैव वसेत्यर्थः ॥

**निधाय वाक्यं हृदये हृदीशितुस्ततो बभाषे दमितारिनन्दिनी ।**
**मया निजाकूतमुदाहृतं पुरा, त्वमेव मे नायक ! जीवितेश्वरः ॥१०२॥**

ततः अनन्तवीर्यकथनान्तरम्, हृदीशितुः प्रियस्य तस्य, वाक्यं शुभापुरीगमनप्रस्तावरूपं हृदये निधाय मनसि निर्धार्य, दमितारिनन्दिनी कनकश्री बभाषे, किमित्याह–नायक ! स्वामिन् मया निजाकूतं स्वाभिप्रायः पुरा उदाहृतम् पूर्वमेव सूचितम्, किमित्याह–त्वमेव मे जीवितेश्वरः इति त्वदधीना मत्स्थितिरिति यावत् ॥१०२॥

**परं मदीयः कुपितः कृतान्तवत्, पिता स वां वाञ्छितविघ्नकारकः ।**
**वलैश्च विद्याभिरयं महाबलो, महौजसौ वामपि निष्परिग्रहौ ॥१०३॥**

परं किन्तु, कुपितः सन् कृतान्तवत् यमतुल्यः, यम इव क्रूरः दुष्प्रतीकारश्च मदीयः स पिता दमितारिः, वां युवयोः वाञ्छितविघ्नकारकः इष्टनिरोधकः, तस्य दुष्प्रतीकारत्वहेतुमाह–

अयं मम पिता, बलैः सैन्यैः विद्याभिश्च महाबलः स्वयं बलवान् सहायैः महाबलः तथा च कथं प्रतिकार्यः ?, साधनसम्पन्नेनाऽपि साधनरहितस्य तु किमु वक्तव्यमित्याह—वाम् युवाम् महौजसौ महापराक्रमावपि, निष्परिग्रहौ परिग्रहैः सैन्यादिसाधनैः रहितौ, तथा च तत्प्रतीकारः सर्वथा अशक्य एवेत्यर्थः ॥१०३॥

**स्मितं वितत्याऽभ्यधिताथ माधवः, प्रियेऽभिधानादपि तस्य मैव भैः ।**
**न सांयुगीनत्वमयं परिस्पृशेद्, ममाग्रजे संयुगसीमभागिनि ॥१०४॥**

अथ कनकश्रीवाक्यं श्रुत्वा, स्मितं वितत्य स्मित्वा एतेन त्वदुक्तविघ्नोऽकिञ्चित्कर इति सूचितम् । माधवो वासुदेवः, अनन्तवीर्यः अभ्यधितावदत्, किमित्याह–प्रिये ! तस्य दमितारेः अभिधानात् कथनादपि, मैव भैः भीतिमगाः, न ततः पराभवशङ्का इत्याह—मम अग्रजे ज्येष्ठे भ्रातरि अपराजिते, संयुगस्य युद्धस्य सीमभागिनि पर्यन्तस्थायिनि सति, अयं तव पिता, सांयुगीनत्वं युद्धस्थायित्वम् न परिस्पृशेत् युद्धे न तिष्ठेदित्यर्थः एवञ्च न भयकारणं किञ्चिदपीत्यर्थः ॥१०४॥

**निपीय वाचं दयितस्य तामियं, तमन्वचालीद्दमितारिजा ततः ।**
**उदस्तहस्तः करटीव दुर्धरोर्जितां गभीरां गिरमुज्जगार सः ॥१०५॥**

ततः अनन्तवीर्यवचनं श्रुत्वा दमितारिजा इयं कनकश्रीः, दयितस्य प्रियस्यानन्तवीर्यस्य ताम् निर्भयत्वापादिकां वाचं निपीय सहर्षं सादरं च श्रुत्वा तमनन्तवीर्यमन्वचालीत्, सोऽनन्तवीर्यः करटी हस्तीव, उदस्तहस्तः उन्नामितकरः, पक्षे उत्थापितशुण्डः, सन् दुर्धरोर्जिताम्, अप्रधृष्यौजस्विनीम् गभीराम् गिरमुज्जगारोचे ॥१०५॥

**अहो ! नु विद्याधरमण्डलेश्वराः, भटावतंसाः दमितारिगृह्यकाः ।**
**कृतावधानाः मम वाचमुच्चकैः, श्रवः पथे धत्त महाभिमानिनः ! ॥१०६॥**

अहो ! नु भो ! भो महाभिमानः भटावतंसाः योधश्रेष्ठाः, दमितारेः गृह्यकाः पक्षाश्रिताः, विद्याधरमण्डलेश्वराः ! कृतावधानाः सावधानाः सन्तः, यथा मया न श्रुतमिति व्याजावसरो न भवेदिति भावः । मम उच्चकैः नतु मन्दां कतिपयश्रव्याम्, वाचम् श्रवः पथे धत्त शृणुतेत्यर्थः ॥१०६॥

**इमां भवत्स्वामिसुतामहं बला–दनन्तवीर्यस्त्वपराजिताश्रयः ।**
**हरामि यद्यस्ति बलं भवत्स्वपि प्रदर्श्यतां तद्दलनाय तत्परम् ॥१०७॥**

अपराजितः तदाख्यभ्राता आश्रयः यस्य स तादृशः, अनन्तवीर्यस्तु, तुश्चार्थे, तेन स्वयमपरिमितपराक्रमः अपराजितसहायश्चेति सर्वथा युष्माभिरगम्य इति स्वप्रशस्तिः सूचिता । अहम्

बलात् प्रसह्य, ननु प्रार्थनादिनेति स्वौजस्वित्वं प्रदर्शितम् , इमां भवत्स्वामिनो दमितारेः सुतां कनकश्रियम् हरामि, यदि भवत्स्वपि बलमस्ति, परमुत्कृष्टं तद्बलम् , तस्याः कनकश्रियाः बलनाय मत्सकाशाद् ग्रहणाय प्रदर्श्यताम् भवद्भिरितिशेषः ॥१०७॥

स एवमुच्चार्य विधूतसाध्वसं, विमानमास्थाय विहायसि स्थितः ।
द्विधाऽपि रामाऽनुगतः पराक्रमं प्रयोजयन् प्रास्थित विष्टरश्रवाः ॥१०८॥

स विष्टरश्रवाः वासुदेवः, विधूतसाध्वसं निर्भयं यथास्यात्तथा, एवमुक्तप्रकारमुच्चार्य, विमानमास्थायाध्यास्य विहायसि व्योम्नि स्थितः, द्विधा प्रकारद्वयेनापि रामया स्त्रिया कनकश्रिया रामेण बलरामेणापराजितेन, चानुगतः संगतः पराक्रमं स्वपौरुषम् , प्रयोजयन् प्रदर्शयन् प्रास्थितः चलितः ॥१०८॥

निशम्य तत्खेचरवर्गनायकः, प्रकोपताम्राधरपल्लवोऽभ्यधात् ।
क एष भूमिचर उग्रसाहसः, स्वरूपसंवेदनता जडस्थितिः ॥१०९॥

तदनन्तवीर्योक्तं निशम्य खेचरवर्गनायकः विद्याधरेश्वरः, प्रकोपेन ताम्रः रक्तोऽधरपल्लवो यस्य स तादृशः सन् अभ्यधात् जगाद, अत्र प्रकोपेन मुखनेत्रलौहित्यं कविसमयप्रसिद्धम् , अधरस्य च स्फुरणम् , एवञ्चाधरस्य प्रकोपताम्रत्वं कविसमयविरुद्धमित्यनुसन्धेयम्, किञ्जगादेत्याह-उग्रः उत्कटः निर्मर्यादः साहसोऽविमृश्यकारित्वं यस्य स तादृशः तथा, स्वरूपसंवेदनतायामात्मबलादिपरिचये जडस्थितिरज्ञानोपहतः, क एष भूमिचरः मर्त्यः, एतेन स्वापेक्षया तस्मिन् नितरामपकर्षः सूचितः ॥१०९॥

निहत्य चैनं हतकं सबान्धवं, वधार्हमुद्बन्धनदुष्टमृत्युना ।
समानयध्वं विनिवर्त्य पुत्रिका,-मिति स्ववीरान् नृपतिः समादिशत् ॥११०॥

नृपतिः दमितारिः, स्ववीरान् स्वभटान् इति समादिशत्, इतीति किमित्याह-एनम् हतकं नीचम् वधार्हम् वधयोग्यम् , कन्याहरणरूपजघन्यकर्मप्रवृत्तत्वादितिभावः, सबान्धवं नत्वेककम्, उभयोरेव सापराधत्वादितिभावः, उद्बन्धनेन दुष्टो निकृष्टः, यः मृत्युः तेन रूपेण, ननु युद्धादिनोत्कृष्टेन नीचपात्रस्य तदयोग्यत्वादिति भावः, निहत्य, पुत्रिकाम् सुताम् कनकश्रियम् , निवर्त्य समानयध्वम् ॥११०॥

निदेशमात्रेण महीपतेर्भटा-विनिःसृताः स्वस्वपदात् सरंहसः ।
कलम्बकोदण्डकृपाणपाणयो-रणाय तावन्नसरन् महौजसः ॥१११॥

महीपतेः दमितारिनृपस्य, निदेशमात्रेणाज्ञामात्रेण, एतेन तस्याप्रतिहताज्ञत्वमुक्तम् , स्व-स्वपदात् स्वस्थानात् विनिःसृताः बहिरागताः कलम्बाः शराः, "कलंब मार्गणशराः" इत्यमरः,

कोदण्डानि धनूंषि "धन्वशरासनकोदण्डे" त्यमरः, कृपाणानि असयः, पाणिषु येषां ते तादृशाः सायुधपाणयः, महौजसः महापराक्रमाः भटाः योधाः, सरंहसः-वेगवन्तः, एतेन तेषामत्युत्साहः सूचितः, रणाय युद्धाय, तावपराजितानन्तवीर्यौ अन्वसरन् अनुधाविता इत्यर्थः ॥१११॥

प्रतीपभूमीपतिधर्मराड्गृह-प्रकाशदीपप्रतिमानि जज्ञिरे ।
हलोग्रशार्ङ्गप्रमुखानि भास्वर-प्रभाणि रत्नानि तदा यतोस्तयोः ॥११२॥

तदा रणप्रस्तावे यतोः गच्छतोस्तयोरपराजितानन्तवीर्ययोः भास्वरप्रभाणि प्रकाशिकान्तीनि हलोग्रशार्ङ्गप्रमुखानि रत्नानि बलदेवस्यापराजितस्य प्रतीपभूमिपतिभ्यः शत्रुपतिभ्यः आभ्यामवश्यं तेषां नाशम्भाव्यहं यमसदनम् तत्प्रकाशाय ये दीपास्तत्प्रतिमानि तत्तुल्यानि जज्ञिरे जातानि' अरिषु कृतान्तवदिमावित्यर्थः । एतेन दमितारेः पराजयः सूचितः ॥११२॥

यथैव गन्धद्विपदानगन्धतः प्रणश्यति क्षुद्रमतङ्गजावली ।
तथैव तन्मुक्तशरौघपाततो ननाश सर्वारिपताकिनी स्यात् ॥११३॥

क्षुद्रमतङ्गजानां वपुर्वयोजातिप्रभृत्तिभिर्हीनगजानामावली श्रेणिः, गन्धद्विपस्य मदस्रावि गजस्य दानस्य मदजलस्य गन्धतः गन्धं प्राप्य, पराभवभिया यथैव प्रणश्यति पलायते, तथैव ताभ्यां भ्रातृभ्यां मुक्तानां शरौघाणाम् पाततः वर्षणतः तत्सोढुमसमर्थाः सर्वा एवारिपताकिनी शत्रुसेना स्यात् झटितिननाश-पलायांचक्रे ॥११३॥

पलायितान् स्वान् विनिशम्य सैनिकान्, मुखं ह्रियेवेक्षयितुं किलाऽक्षमान ।
युगान्तकालार्कवदुद्धतद्युति-श्चचाल, योद्धुं दमितारिरप्यथ ॥११४॥

अथ सैन्यपराभवानन्तरम्, दमितारिरपि, स्वान् सैनिकान् पलायितान् भयद्रुतान्, अत एव ह्रिया लज्जया इव, मुखमीक्षयितुं दर्शयितुमक्षमानसमर्थान्, भया लज्जा च समक्षमनागतानित्यर्थः । विनिशम्य ज्ञात्वा, युगान्तकालार्कवत् उद्धता कोपेनात्युग्रा द्युतिः कान्तिर्यस्य स तादृशः सन् कोपेन प्रज्वलन्नित्यर्थः योद्धुं चचाल ॥११४॥

प्रयाणभेरीध्वनिरुद्भवंस्तदा दिगन्तरेषु प्रतिशब्दमूर्च्छितः ।
परः प्रभुः कोऽपि बभूव नेदृ-गित्युदीरणाय प्रययौ जवेन किम् ॥११५॥

तदा दमितारिप्रस्थानकाले, उद्भवन् जायमानः प्रयाणस्य भेरीध्वनिः दुन्दुभ्यादिशब्दः, दिगन्तरेषु दिग्विदिक्षु; प्रतिशब्देन प्रतिध्वनिना मूर्च्छितः द्विगुणीभूयेव प्रसृतः परोऽन्यः कोऽपि ईदृक् दमितारितुल्यः प्रभुः समर्थो न बभूवेति उदीरणाय कथनाय, जवेन झटिति प्रययौ किम् । एवं संभावनेत्यर्थः । रणवाद्यशब्दः दिशासु व्याप्तः, एतेन महान् उद्योगः सूचितः ॥ उत्प्रेक्षाऽलङ्कारः ॥११५॥

विमुच्य नः स्वामिसुतामिमामरे ! युवां प्रयातं प्रपलाय्य कातरौ।
न चेत् प्रकोपज्वलिता शुशुक्षणौ, क्षणात्प्रभोर्नः शलभौ भविष्यथः ॥११६॥

अरे ! निकृष्टामन्त्रणे, कातरौ ! हीनप्रकृतिकौ ! इमां बलाद् गृहीताम् नः अस्माकं स्वामिनः सुतां पुत्रीम् विमुच्य त्यक्त्वा, युवाम् द्वौ प्रपलाय्य प्रयातम् गच्छतम् , नचेदन्यथा, नः प्रभोः स्वामिनो दमितारेः प्रकोप एव ज्वलितः आशुशुक्षणिरग्निस्तस्मिन् क्षणात् , शलभौभविष्यथाः, शलभ इव नाशं प्राप्स्यथः ॥११६॥

इतीरितां तस्य पुरःसरैर्भटै,-र्निशम्य वाचं वलतः स्म तावपि।
वधूमधीरां वचनैः समुद्धतै-र्विधाय धैर्यप्रतिवद्धकञ्चुकाम् ॥११७॥

पुरस्सरैः अग्रतो गच्छद्भिः तस्य दमितारेः भटैः सैन्यैः इति पूर्वोक्तप्रकारामीरितां कथितां वाचं निशम्य, तौ द्वावपि, अधीरां भयविह्वलां वधूं कनकश्रियम् , समुद्धतैरोजोव्यञ्जकैः वचनैः धैर्यमेव प्रतिवद्धकञ्चुकम् यस्यास्ताम् तादृशीं निर्भयां विधाय कृत्वा वलतः स्म युद्धाय परावृत्तौ ॥११७॥

निरीक्ष्य विद्वेषिवलं वलोत्तरं, वलानुजोऽप्युग्रवलारिविक्रमः।
वलेन विद्याप्रभवेण चात्मनो, वलं ससर्ज द्विगुणं स सद्गुणः ॥११८॥

विद्वेषिणः शत्रोर्वलं सैन्यम् , वलोत्तरमुत्कृष्टवलं निरीक्ष्य, सद्गुणः गुणसम्पन्नः बलस्य बलदेवस्यापराजितस्याऽनुजः कनिष्ठोऽपि भ्राता उग्रः बलारेश्शचीपतेर्विक्रमइव विक्रमः पराक्रमो यस्य तादृशः "वलारातिः शचीपतिः" इत्यमरः, विद्याप्रभावेन बलेन तामिर्विद्याभिर्विहितेन-चतुरससैन्येन, विद्याप्रभावेन बलेन सामर्थ्येन आत्मनः स्वस्य बलं सैन्यं द्विगुणं शत्रुसैन्यापेक्षया द्विगुणं च ससर्ज निर्मितवान् ॥११८॥

उपक्रमन्ते स्म युधि द्विषद्भटा,-स्तयोः परावृत्तिमवेक्ष्य तत्क्षणम्।
चिरोपभुक्तं दमितारिवेतनं, कृतार्थतां नेतुमभीप्सवोऽभयाः ॥११९॥

तयोरपराजितानन्तवीर्ययोः परावृत्तिं पश्चाद् वलनमवेक्ष्य, चिरोपभुक्तं दमितारिवेतनम् कृतार्थतां साफल्यम् , नेतुं प्रापितुमभीप्सवोऽभिलाषुकाः, उपभुक्तवेतनस्य भटानां युद्धे साहाय्यमेव फलमितिभावः। अभया निर्भयाः, द्विषद्भटाः दमितारियोधाः तत्क्षणम् , न तु विलम्ब्य एतेन तेषामुत्साहः सूचितः, युधि उपक्रमन्तेस्म युद्धारम्भवन्तो बभुवुः ॥११९॥

पदातिमुद्दिश्य पदातिरिङ्गितः, तुरङ्गसादी तु तुरङ्गसादिनम्।
रथी रथस्थं गजयुग् निषादिनं, बभूव तत्राजिरवर्णसङ्करम् ॥१२०॥

पदातिः पत्तिः पदातिम्, तुरङ्गसादी अश्वारूढः तु तुरङ्गसादिनम्, रथी रथारूढः रथस्थं गजयुक् गजारूढः निषादिनम्, "हस्त्यारोहा निषादिनः" इत्यमरोक्तेः । गजस्थमुद्दिश्य इङ्गितः अभिप्रायोनुरूपचेष्टितः, एवं प्रकारेण तत्र आजिर्युद्धम् अवर्णसङ्करम्, यथा स्वजातीयम् बभूव, रणनीतिः सर्वथा पालितेत्यर्थः ॥१२०॥

**रणापणे येन यशःक्रयाणकं, समर्थमादायि न काङ्क्षता श्रियम् ।**
**विनश्वरप्राणपणेन दौस्थ्यभाक्, स एवमूचुः समरेऽत्र बन्दिनः ॥१२१॥**

रणमापणं हट्टमिव तस्मिन्, श्रियं लक्ष्मीकाङ्क्षता इच्छता येन सा कर्त्रा विनश्वरेण अनित्येन प्राणाः पणं मूल्यमिव "मूल्यं पण" इत्यमरः । तेन कारणेन समर्थं स्थिरम् सारवच्च यशः क्रयाणकं क्रय्यमिव तत् न आदायि क्रीतम्, स दौस्थ्यभाक् मन्दभाग्यः कातरताकलङ्क-दूषितश्च, एवमुक्तप्रकारेण, अत्र समरे युद्धे, बन्दिनः स्तुतिपाठकाः ऊचुः उत्साहोत्तेजनाय पेठुः । रूपकाऽलङ्कारः ॥१२१

**शरं समुद्धृत्य विलग्नमङ्कके, द्विषद्भटेन प्रहितं स्वपाणिना ।**
**वहन्नमर्षं हृदि तेन तं तथा, न्यहन् यथा कोऽपि ययौ स पञ्चताम् ॥१२२॥**

द्विषद्भटेन प्रतिपक्षसैन्येन प्रहितम् प्रक्षिप्तम् अङ्कके स्वाङ्के विलग्नं प्रविष्टं शरः स्वपाणिना महासाहसिकत्वात् स्वकरेणैव समुद्धृत्य समाकृष्य, तेन समुद्धृतेन शरेणैव, अमर्षं क्रोधं वहन् भटः, तं शरप्रक्षेपकं हृदि तथा न्यहन् यथा स कोऽपि अनिर्दिष्ट नामा पञ्चतां मृत्युं ययौ प्राप ॥१२२॥

**पलायमानस्य न कोऽपि सात्त्विकः, शरप्रहारेण जहार जीवितम् ।**
**तदीयवंश्यैश्च कृतं यशश्चयं, शरत्सुधादीधितिदीधितिप्रभम् ॥१२३॥**

कोऽपि सात्त्विकः रणनीतिपालकः वीरशिरोमणिः शरप्रहारेण, पलायमानस्य भयद्रुतस्य जीवितं न जहार, तद्विधेः वीरता विरुद्धतया शास्त्रे उक्तेरिति भावः, तदीयवंश्यैः तादृशसा-त्त्विकगोत्रैश्च, यशश्चयं यशोराशिः शरदि यः सुधादीधितिश्चन्द्रः तस्य दीधितिर्मरीचिरिव प्रभा यस्य तत्तादृशं कृतम्, तद्वंश्यैः एतद्वंश एव महान् वीरः समजनि, इत्येवं यशः प्राप्तमित्यर्थः । अत्र चयशब्दस्य पुँल्लिङ्गत्वम् "कृतोयशश्चयः शरत्सुधादीधिति दीधिति प्रभ इति पाठः साधीयान् । नपुंसकपाठस्तु संशोधकप्रमादादिति प्रतिभाति ॥१२३॥

**पराक्रमेणोद्भटतां दधत्तमान्, कटाक्षितान् किञ्चन तज्जयश्रिया ।**
**रणाङ्गणे वीक्ष्य विरोधिनो भटांस्तदैव दध्मौ जलजं जनार्दनः ॥१२४॥**

पराक्रमेण उद्भटतां भटोपरिवर्तित्वम् भटश्रेष्ठत्वमिति यावत्, दधत्तमान् अलमाश्रयतः विरोधिनः प्रतिपक्षस्य भटान् योधान् तेनानन्तवीर्येण कृतो यो जयः तस्य श्रिया कटाक्षितान् हतप्रभान् वीक्ष्य, जनार्दनोऽनन्तवीर्यः, तदैव रणाङ्गणे जलजं पाञ्चजन्यशङ्खम् दध्मौ हर्षाद् वादयामासेत्यर्थः ॥१२४॥

न पाञ्चजन्यध्वनिना प्रसर्पता, न पाञ्चजन्यं गलितं विरोधिनाम्।
इहापि जन्ये प्रतिरूपवर्तिनां, विचेतनानामुपलब्धमूर्च्छया ॥१२५॥

इह जन्ये युद्धे "युद्धमायोधनं जन्यं प्रधानं प्रविदारणमि" त्यमरः। अपि प्रसर्पता व्याप्नुवता पाञ्चजन्यध्वनिना तदाख्यशङ्खशब्देन, उपलब्धा प्रापिता या मूर्छा तया कृत्वा, विचेतनानां नष्टसंज्ञानाम् प्रतिरूपवर्तिनाम् प्रतिपक्षवर्तिनाम् अतएव विरोधिनाम्, पञ्चजनस्य पुरुषस्य कर्मभावश्च पाञ्चजन्यम् पौरुषमिति यावत् न गलितं न, अपितु गलितमेवेत्यर्थः। "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा जना" इत्यमरः। शङ्खशब्देन सर्वे हतपौरुषाः जाता इत्यर्थः ॥१२५॥

स्वयं समालोक्य महारथस्तथा, रथाधिरूढो दमितारिरञ्जसा।
प्रचक्रमे योद्धुमतन्द्रिताशयो-ऽभिसृत्य नागान्तकलक्ष्मणा समम् ॥१२६॥

महारथः दमितारिः, स्वयम्, तथा हतपौरुषान् भटान् समालोक्य, रथाधिरूढः, अञ्जसा शीघ्रम् अभिसृत्य सम्मुखमागत्य, अतन्द्रिताशयः सावधानः, नागान्तकः गरुडः "खगेश्वरः नागातकः विष्णुरथः" इत्यमरः। लक्ष्म चिह्नं यस्य तेन विष्णुनाऽनन्तवीर्येण "गोविन्दो गरुडध्वजः" इत्यमरः। समं योद्धुं प्रचक्रमे प्रवृत्तः ॥१२६॥

मुमोच यद्यद्दमितारिरायुधं, प्रकोपदष्टाधरपल्लवोऽरये।
अनन्तवीर्यश्च भयं दिशन् द्विषां, विहस्य तत्तत्प्रतिकूलमीश्वरः ॥१२७॥

दमितारिः, प्रकोपेन दष्टः अधरः पल्लव इव येन स तादृशोऽतिकुपितः सन्, यद्यदायुधं शस्त्रमरये शत्रुं प्रति मुमोच चिक्षेप, ईश्वरः समर्थः अनन्तवीर्यश्च द्विषां शत्रूणां भयं दिशन् प्रापयन्, विहस्य, एतेन रणे तस्यानायासः शत्रुं प्रति लघुभावश्च सूचितः, तत्तत्प्रतिकूलं, मुमोचेति सम्बद्धते ॥१२७॥

अवेत्य विद्वेषिणमन्यथा निजं, सुदुर्जयं श्रीदमितारिरस्मरत्।
समग्रदिक्चक्रतमोऽपहारकं, महोदयं चक्रमरेर्जिघांसया ॥१२८॥

श्री दमितारिः निजं विद्वेषिणं शत्रुम्, अन्यथा प्रकारान्तरेण सुदुर्जयमपराजेयमवेत्य ज्ञात्वा अरेः शत्रोः, जिघांसया हननेच्छया, समग्राणाम् अखिलानां दिक्चक्राणां दिशां तमसोऽन्धकारस्यापहारकं महातेजस्विनं महोदयं महाशक्तिम् चक्रमस्मरत् ॥१२८॥

**प्रभापराभूतपरप्रभाभरं, तदीयपाणौ विरराज चक्रकम्।**
**यथाऽस्तभूमीधरतुङ्गशृङ्गके, दिनेशितुर्मण्डलमच्युतांशुकम् ॥१२९॥**

प्रभाभिः स्वतेजोभिः पराभूतः मन्दीकृतः परेषामन्येषां परासामन्यासां प्रभाणां भरोऽतिशयो येन तत्तादृशं चक्रकम् चक्रम् तदीयपाणौ दमितारिकरे विरराज शुशुभे, अस्तभूमीधरस्यास्ताचलस्य तुङ्गे उन्नते शृङ्गके शिखरे, अच्युतांशुकम् सकिरणं दिनेशितुः सूर्यस्य मण्डलं बिम्बं यथा, अस्ताचले सूर्यबिम्बवत् तत्पाणौ चक्रं विरराज शुशुभे इत्यर्थः ॥१२९॥

**उवाच चैनं दमितारिरुल्लसन्, महाभिमानं करुणां स्पृशन्निव।**
**वृथा मृथा मा तनयापरिग्रहा-ग्रहं विहाय व्रज रे ? विनिःश्वसन् ॥१३०**

दमितारिः करुणां स्पृशन् सकरुण इव, उल्लसन् महाभिमानम् अभिमानितममेनमनन्तवीर्यमुवाच च, किमित्याह–रे, निकृष्टामन्त्रणे, वृथा निष्प्रयोजनम् मा मृथाः, न म्रियस्व, किन्तु तनयायाः मत्पुत्र्याः परिग्रहे ग्रहणे आग्रहं हठं विहाय विनिःश्वसन् जीवन् व्रज गच्छ, तनयां मुञ्चसि चेत् त्वं जीवितुं शक्नोषि नान्यथेत्यर्थः ॥१३०॥

**अनन्तवीर्योऽपि जगाद तं द्विषं, तवाङ्गजां मूर्तिमतीं जयश्रियम्।**
**श्रियं समादाय तथा च जीवितं, यशश्च यास्यामि निरूपणादृते ॥१३१॥**

अनन्तवीर्यः अपि तं द्विषं दमितारिं जगाद, तदुक्तिमेवाह–मूर्तिमतीं जयश्रियं जयश्रीस्वरूपां तवाङ्गजां पुत्रीं, श्रिय राजलक्ष्मीम्, तथा, जीवितम् तव जीवनञ्च, निरूपणाद् ऋते व्यापारं विनैव, अनायासेनैव, यशः च समादाय यास्यामि ॥१३१॥

**असौ परिभ्रम्य मुमोच शक्तितस्तदेव चक्रं शमनाय विद्विषः।**
**परे समालिङ्गति वा जयश्रियं, किमौचिती रक्षितुमस्त्रमङ्गिनाम् ॥१३२॥**

असौ दमितारिः, विद्विषः शमनाय शान्त्यै, निग्रहायेत्यर्थः, तत्करस्थमेव चक्रं शक्तितः शक्तिपूर्वकं, यथाशक्तिरिति यावत्। परिभ्रम्य, मुमोच चिक्षेप, ननु प्राणापहरणाद्बन्धनं वरमिति तादृशप्राणापहारकचक्रं प्रक्षेपो न युक्त इति चेत्तत्राह,–परे शत्रौ जयश्रियं समालिङ्गति जयति सति, स्वपराजयनिवारणाय, अङ्गिना देहिनाम् अस्त्रं पराजयनिवारकमस्त्रं रक्षितुमप्रयोक्तुम् औचिती उचितं किम्! नैवेत्यर्थः, जयार्थमेव शस्त्रादि धारणम्, तथा च तदर्थमवसरे तदप्रयोगे तद्वैयर्थ्यमेव स्यादिति भावः ॥१३२॥

**चुचुम्ब चक्रं हृदि चक्रधारिणं, प्रवर्त्तयत् तुम्बकघातयातनाम् ।**
**बलेन चेलाञ्चलवीजितः क्षणं, मुदा सहोत्तिष्ठति स स्म सस्मयः ॥१३३॥**

चक्रं दमितारि मुक्तं चक्रम्, तुम्बकस्य घातेन या यातना पीडा ताम् अत्यल्पव्यथाम्, प्रवर्तयत् कुर्वत् हृदि वक्षःप्रदेशे, चक्रधारिणमनन्तवीर्यम् चुचुम्ब परस्पर्श, नतु जघान, अनन्तवीर्यस्य विशाले वक्षसि तच्चक्रमुरुनाभिना लगतिस्म न तु धारया एतेन तस्यालौकिकबलवत्त्वं सूचितम्, बलेन बलदेवेनापराजितेन भ्रात्रा क्षणम् किञ्चित्कालम्, चेलाञ्चलेन वस्त्रप्रान्तेन वीजितः कृतानिलः सोऽनन्तवीर्यः, सस्मयः सस्मितः मुदा सह सहर्षम् उत्तिष्ठति स्म ॥१३३॥

**शतारमेवप्रथमं बभूव यत्, तदा सहस्रारमितं हरेः करे ।**
**महीयसां सङ्गमतो लघीयसां, प्रवर्धते किं महिमा महान्नहि ? ॥१३४॥**

यच्चक्रम्, प्रथमं पुरा शतारं शतमराण्यस्य तादृशं चक्रमेव, तदा हरेरनन्तवीर्यस्य करे, सहस्रारमितं सहस्रारं बभूव, तत्प्रभावादिति भावः । ननु शतारस्य कुतः सहस्रारत्वमिति चेत्तत्राह—महीयसामतिमहतां सङ्गमतः सङ्गात्, लघीयसामतिलघूनामपि, किं महान् महिमा नहि प्रवर्धते ? अपितु प्रवर्धतएव, एवञ्च शतारस्य सहस्रारभावः तादृशमहीयः सङ्गात्सम्भवत्येवेति भावः ॥१३४॥

**अनन्तवीर्यो दमितारिमूचिवान्, स्मितश्रिया विच्छुरिताधरस्ततः ।**
**हृदीश्वरायाः कनकश्रियो भवान्, पितेति मुक्तो मयका प्रयाहि तत् ॥१३५॥**

ततः तादृशचक्रधारणानन्तरं स्मितश्रिया विच्छुरितौ स्फुरितौ अधरौष्ठौ यस्य स तादृशः स्मयमानः अनन्तवीर्यः, दमितारिमूचिवान् किमित्याह हृदीश्वरायाः प्रियतमायाः कनकश्रियः भवान् पिता इति हेतोः प्रियायाः पिता प्रिय एवेति श्वसुर इति वा मान्यत्वात्, मुक्तः निग्रहीतुं नेष्टः तत्तस्मात् प्रयाहि याहि ॥१३५॥

**जगौ सधैर्यं दमितारिरीदृशं परस्य शस्त्रेण च शस्त्रितां वहन् ।**
**न लज्जसे किं धनितामिवाल्पधीरहो ! परन्यासविलोपकर्मणा ॥१३६॥**

दमितारिः, सधैर्यं धैर्यपूर्वकमीदृशं वक्ष्यमाणं जगौ तदुक्तिमेवाह—अहो अल्पधीः ! मूर्ख ! परस्यान्यस्य शस्त्रेण च शस्त्रितां शस्त्रधारित्वम्, चः स्वार्थे, न तु स्वशस्त्रेणेत्यर्थः । एतच्च न तव स्वकीयं शस्त्रं किन्तु विद्यादत्तमित्यर्थः । परस्य परकीयस्य न्यासस्य रक्षितधनस्य विलोपकर्मणा अपहरणेन धनितामाढ्यत्वमिव वहन्, किं कुतो न लज्जसे, एतादृश निकृष्टकर्मणा अवश्यं लज्जितव्यं न तु श्लाघनीयमित्यर्थः ॥१३६॥

तदाशु मुञ्चेदमपत्रपाकरं, ममेव ते चापि भविष्यति ध्रुवम्।
विरोधिसंरोधनकारी पौरुषं, ममापि जागर्ति परार्तिभञ्जनम् ॥१३७॥

तत्तदुक्तहेतोः इदं चक्रमपत्रपाकरं लज्जाकरम्, चक्रमाशु मुञ्च त्यज, क्षिप वा, मम चक्रमिव तेऽपि च तव चक्रस्यापि ध्रुवं भविष्यति, यथा त्वयि मम चक्रमकिञ्चित्करं जातं तथा तवापि भविष्यतीत्यर्थः। तादृशबलसत्त्वात्तदेवाह-ममापि विरोधिनः संरोधनकारि निवारकं, तथा पराया अर्तेः पीडाया भञ्जनं पौरुषं जागर्ति ॥१३७॥

नृपेण तेनेति स तर्जितो विधुः, घृताक्तवैश्वानरवत् क्रुधा ज्वलन्।
मुमोच चक्रं दमितारयेऽरये, शिरोऽच्छिनत्तच्छरकाण्डलीलया ॥१३८॥

तेन नृपेण दमितारिणा इति पूर्वोक्तप्रकारेण तर्जितः वाचा हतः स विष्णुरनन्तवीर्यः, घृताक्तवैश्वानरवत्, घृतसिक्तवत् क्रुधा ज्वलन् उग्रकोपः सन्, अरये द्विषे दमितारये चक्रं मुमोच, तन्मुक्तं चक्रम्, शरस्य काण्डस्य नालस्य लीलया चेष्टया, शरकाण्डवदनायासेन, शिरः दमितारिशिरोऽच्छिनत् चिच्छेद ॥१३८॥

विवर्णयामो वरवर्णिनीष्विमां किमुत्तमां, नो कनकश्रियं वयम्!।
जयश्रियं भेजुषि वल्लभे तदा, प्रसन्नमन्तःकरणं चकार या ॥१३९॥

वयम् कवयः, इमां कनकश्रियं वरवर्णिनीषु स्त्रीषु उत्तमां किं न विवर्णयामः कुतो न स्तुमः। अपितु स्तुम एव, तत्र हेतुमाह—या कनकश्रीः जयश्रियं भेजुषि प्राप्ते वल्लभे प्रिये, तदा प्रसन्नमन्तःकरणं मनश्चकार, यद्यपि पितृवधः, तथापि वल्लभे प्रीतेति वीरपूजया गुणैकपक्षपातप्रदर्शनात्, गुणज्ञाश्च वर्णनीया एवेति भावः ॥१३९॥

विचित्रवर्णैः सुमनोभिरद्भुतैर्दिवोऽभिवृष्टिः सुमनोभिराहिता।
अनन्तवीर्येऽद्भुतवीर्यसेवधौ, जिनेशितुः पारणकारणे यथा ॥१४०॥

सुमनोभिर्देवैः दिवः आकाशात्, अद्भुतवीर्यसेवधौ अलौकिकपराक्रमनिधावनन्तवीर्ये, जिनेशितुः पारणकारणतपः पारणनिमित्तदावसरे यथा इव, अद्भुतैरलौकिकैः विचित्रवर्णैः नानावर्णैः सुमनोभिः पुष्पैः अभिवृष्टिराहिता पुष्पवर्षा कृतेत्यर्थः ॥१४०॥

अवादि तैः श्रोत्रपथे विधत्त नो, गिरं तु विद्याधरनायकाः? हिताम्।
अनन्तवीर्यो हरिरेष सान्वयो, हलायुधोऽसावपरोऽपराजितः ॥१४१॥

तैः देवैः अवादि उक्तम्, किमित्याह—विद्याधराः नायकाः। नोऽस्माकम् हितां पथ्यां गिरं वाचम् श्रोत्रपथे विधत्त, तु निश्चयेन सादरं सावधानाश्च शृणुत का सा गीरित्याह—

एषोऽनन्तवीर्यः सान्वयः सायुधपरिवारः हरिः विष्णुः, अपरोऽन्यः असावपराजितः हलायुधः बलभद्रः इति ॥१४१॥

बलाभिमानं तदपास्य चैतयोः, पदाम्बुजच्छायमुपाध्वमादरात् ।
यथा परातङ्कनिदाघजातप-प्रभूतसन्तापमहो न विन्दथ ॥१४२॥

ततस्तस्माद्धेतोश्च, बलाभिमानमहं सर्वबलवानित्येवमहङ्कारमपास्य त्यक्त्वा, आदरात् न तु बलात्, एतयोः भ्रात्रोः पदाम्बुजे एव च्छाया अनातपस्तामुपाध्वं सेवध्वम्, तादृशश्छायायाः लाभमाह–अहो इति हर्षे, यथा येन प्रकारेण, परेभ्यो द्विड्भ्यो य आतङ्को भयं तदेव स एव निदाघजः ग्रीष्मजो य आतपस्तज्जन्यः प्रभूत प्रचुरः सन्तापः तं न विन्दथ लभध्वे, छायया आतपवारणमुचितमेवेति भाव.। रूपकं स्पष्टम् ॥१४२॥

दिवौकसां वाचमवाप्य ते तत-स्तदंह्रियुग्मं शरणं समाश्रिताः।
प्रियाग्रजाभ्यां सहितः स तैः सहाचलद् विमानेन पुरीमथो निजाम् ॥१४३॥

ततः तदनन्तरं ते विद्याधराः, दिवौकसां देवानां वाचम् अवाप्यावधार्य, तस्यानन्तवीर्यस्य अंघ्रियुग्मम् चरणद्वयं शरणं रक्षकं समाश्रिताः, अथो अनन्तरम्, प्रियाग्रजाभ्यां सहितः सः, तैः विद्याधरैः सह विमानेन निजां पुरीमचलत् ॥१४३॥

सुवर्णशैलं परितो व्रजन्नयं, जनार्दनो व्यज्ञपि खेचरेश्वरैः।
अनेकशः सन्ति विभोऽत्र भूधरे, जिनेन्द्रचैत्यानि मुदां निबन्धनम् ॥१४४॥

अयं जनार्दनः अनन्तवीर्यः, सुवर्णशैलं मेरुशैलं परितः निकषा व्रजन् खेचरेश्वरैः व्यज्ञपि निवेदितः, निवेदनमेवाह विभो ! अत्र भूधरे पर्वते, मुदां निबन्धनम् प्रीत्यापादकम् अनेकशः जिनेन्द्रचैत्यानि सन्ति ॥१४४॥

विधेहि माऽऽशातनिकां तदीदृशां, प्रतिष्ठमानोऽनभिवन्द्य चाग्रतः।
इतीरितस्तैर्विधुरन्तरिक्षतो, रयेण तत्रावततार तारवाक् ॥१४५॥

तच्चैत्यानि च अनभिवन्द्य चैत्यवन्दनमकृत्वैव अग्रतः प्रतिष्ठमानः गच्छन्, ईदृशीमवन्दन-रूपामशातनिकां माविहि, तैः खेचरेन्द्रैः, इति उक्तप्रकारमीरितः निवेदितः तारवाक् उच्चैर्वाक् विधु-रनंतवीर्यः, तत्र पर्वते, अन्तरिक्षतः आकाशाद् रयेण अवततार ॥१४५॥

सुवर्णचैत्येषु सुवर्णपङ्कजेष्विवात्र कुर्वन् प्रयतः प्रदक्षिणाः।
न राजहंसश्रियमाप किं विधुः, श्रितो विवेकेन गुणेन तेजसा? ॥१४६॥

अत्र हेमाद्रौ सुवर्णपङ्कजेष्विव सुवर्णचैत्येषु सुवर्णमयचैत्येषु प्रयतः मनोयोगपूर्वकम्, प्रदक्षिणाः कुर्वन्, अतएव विवेकेन गुणेन तेजसा च श्रितः यो हि चैत्यप्रदक्षिणाकारी स विवेक्येव

भवितुमर्हति, तया च गुणतेजो लाभ इत्यपरमनुकूलमिति भावः। विधुः अनन्तवीर्यः चन्द्रश्च राजहंसश्रियम् किं नाप अपि तु प्रापैव। अत्र श्लेषेण मेरुं परितः चन्द्रभ्रमणस्य प्रदक्षिणात्वे-नाध्यवसानात्, ततश्च विवेकादि प्राप्त्युन्नयनात अतिशयोक्त्यनुप्राणितकाव्यलिङ्गाङ्गकोपमा-अनन्तवीर्ये चन्द्रोपमाध्वनिश्च ॥१४६॥

सुरद्रुमानेव विनेयतां नय-न्नवारिताकाङ्क्षितदानदीक्षया।
भ्रमन् गिरौ तत्र हरिः सविभ्रमं-तपोधनं कञ्चिदवेक्षतोत्तमम् ॥१४७॥

अवारितम् अस्मै देयमस्मै नेत्येवमनिषिद्धं यद् आकाङ्क्षितस्य यथेष्टस्य दानम् तस्य दीक्षया उपदेशेन सुरद्रुमान् कल्पवृक्षान् एव विनेयताम् शिष्यत्वं नयन्, एतेनोपदेष्टुः ततोऽप्यधिकमाचरणं ध्वन्यते। हरिरनन्तवीर्यः तत्र गिरौ मेरौ सविभ्रमं सविलासं भ्रमन् कञ्चित् उत्तममाकाराद्यनुमेयोत्कर्षं तपोधनं मुनिमवैक्षत ॥१४७॥

स को मुनिरित्याह—

अवाप यः केवलसंविदं शरत्,-प्रमोपवासप्रतिमां समाश्रितः।
अभिख्यया कीर्तिधरो मुनीश्वरः, सुवर्णशैलेऽत्र जगत् पवित्रयन् ॥१४८॥

यः मुनीश्वरः शरत्प्रमः वर्षप्रमाणः य उपवासः तस्य प्रतिमां समाश्रितः कृतवर्षोपवासव्रतः केवलं तदाख्यं संविदं ज्ञानमवाप, अतएव जगत् भुवनं पवित्रयन्, तादृशा भुवनपावका एवेति भावः। अभिख्यया नाम्ना कीर्तिधरः मुनीश्वरः स इति ॥१४८॥

अवाप्यमानं महिमानमुच्चकैरमानवैर्मानववृन्दसंयुतैः।
स तं ववन्दे विहितात्मनां गुरुं, हरिः स्फुरत्पुण्यसुपण्यताऽऽपणम् ॥१४९॥

स हरिरनन्तवीर्यः, मानववृन्दसंयुतैः अमानवैः सुरासुरनरैः उच्चकैः उत्कृष्टं महिमानं महत्वम् अवाप्यमानं नीयमानम् स्फुरतः वर्धमानस्य पुण्यस्य या सुपण्यता सुविक्रयता सुव्य-वहार्यत्वम् तस्याऽऽपणं पण्यरूपम्, यत्रापणे पुण्यं क्रय्यमिति यावत्, विहितात्मनां स्वात्मा-भिमुख्यानां गुरुं श्रेष्ठं तं मुनिं ववन्दे ॥१४९॥

चतुर्गतिद्वारनिपातुकाखिल,-प्रजासमुद्धारविधौ समुद्धताम्।
श्रितासने तत्र सुवर्णकेतने, व्यधत्त साधुः स च धर्मदेशनाम् ॥१५०॥

सुवर्णकेतने कनकधरापीठे तत्र श्रिते आसने उपविष्टः स कीर्तिधरः साधुश्च चतस्रो गतय एव द्वाराणि तत्र निपातुकानां पतन्तीनामखिलानां प्रजानां समुद्धारविधौ भवोच्छेद-विधौ समुद्धताम् उद्ग्राम् धर्मदेशनां व्यधत्त ॥१५०॥

तमन्वयुङ्क्तावसरे हरिप्रिया, प्रियाऽऽभिमुख्येन कृतावगुण्ठना।
पितुर्वधः किं समभूद् मम प्रभो ! सुदुःसहः किं विरहश्च बन्धुभिः ।॥१५१॥

अवसरे देशान्तरे, हरेरनन्तवीर्यस्य प्रिया कनकश्रीः प्रियस्य आभिमुख्येन सम्मुखत्वेन हेतुना कृतावगुण्ठनमर्यादारक्षणाय वस्त्रावृत्तमुखा सती, तं मुनिमन्वयुंक्त पप्रच्छ, प्रश्नमेवाह–प्रभो ! मम पितुर्वधः किं कुतो हेतोः समभूत् ! बन्धुभिः सुदुःसहः विरहश्च किं समभूदिति ॥१५१॥

**मुनीशिता व्याहरति स्म तामिदं, स घातकीखण्डमहाविभूषणे।**
**अदूषणे प्राग्भरते गवां कुलैरलङ्कृतं शङ्खपुरं तु विद्यते ॥१५२॥**

स कीर्तिधरः मुनीशिता, तां कनकश्रियं प्रति इदं वक्ष्यमाणं व्याहरति कथयति स्म, इदं किमित्याह–घातकीखण्डस्य महाविभूषणे उत्कृष्टभूषणरूपे अदूषणे दोषवर्जिते प्राग्भरते गवां धेनूनाम् कुलै उपलक्षणतया धनधान्यैश्चालङ्कृतं शङ्खपुरं नगरं विद्यते, तुः पादसमाप्तौ ॥१५२॥

**निरर्गलग्राम्यजनोपशोभिते, मनोहरे ग्रामशतेषु तत्र च ।**
**स्त्रीयोषितं श्रीपदपूर्वदत्तयाऽभिधानतोऽपुण्यवशेन दुःस्थया ॥१५३॥**

तत्र शङ्खपुरे च ग्रामशतेषु अनेकग्रामेषु मनोहरे उत्कृष्टे ग्रामे निरर्गलाः निराबाधा ये ग्राम्याः जनास्तैरुपशोभिते, अपुण्यवशेन दुःस्थया दुर्गतया अभिधानतो नाम्ना श्रीपदपूर्वद-त्तया श्रीदत्ताभिधया स्त्रिया उषितम् ॥१५३॥

**समानयन्त्यम्बु गृहेषु केषुचित्, पिनष्टि केष्वेव निरूपिता सती।**
**यदा तदा सा तनुते भुजिक्रियां, न दुःस्थताऽन्यत् पदमाससाद तत् ॥१५४॥**

सा श्रीदत्ता यदा, केषुचिद् गृहेषु जम्बुपानीयं समानयन्ती, केषुचित् निरूपिता नियुक्ता सत्येव पिनष्टि पेषणक्रियां करोति, तदा जलाहरणपेषणक्रियात एव, भुजिक्रियां तनोति जीवकां करोति, दुःस्थता दौर्गत्यम् सर्वं तत्रैवास्थात्, अतिदीना सेति यावत् ॥१५४॥

**ययौ भ्रमन्ती वनराजिराजिते, विलोकयन्ती तरुवल्लरीरियम् ।**
**अथान्यदा श्रीपदपूर्वके गिरौ, सुमेरुभे पर्वतनामनि श्रुते ॥१५५॥**

अथान्यदा इयं श्रीदत्ता, तरुवल्लरीः काष्ठार्थं वृक्षलताः विलोकयन्ती भ्रमन्ती, वन-राजिराजिते श्रुते ख्याते सुमेरुभे मेरुतुल्ये श्रीपदपूर्वके पर्वतनामनि गिरौ श्रीपर्वताख्ये पर्वते ययौ ॥१५५॥

**शिलातलासीनमहीनसन्निभं, क्षमामहाभारधृतौ धृतेः पदम् ।**
**निरीक्ष्य चेतोविनियन्त्रणक्षमं, ननाम सा सत्ययशोऽभिधं मुनिम् ॥१५६॥**

सा श्रीदत्ता, शिलातले आसीनमुपविष्टम्, क्षमा क्षान्तिः सैव क्षमा पृथिवी तस्या यो महाभारः तस्य धृतौ धारणे अहीनः शेषनागः तत्सन्निभं क्षमावन्तमित्यर्थः, धृतेः धैर्यस्य पदम् स्थानं धृतिमन्तम् अतएव चेतसो यद्विनियन्त्रणं वशीकरणं तत्र क्षमं समर्थं अशुभमनो योगनिवर्तकं सत्ययशोऽभिधं सत्ययशा इति नामानं मुनिं निरीक्ष्य ननाम १५६॥

सुधर्मलाभं शिवलाभकारकं, समासदच्चित्तविषादहारकम्।
इदंस्वदौस्थ्येन कदर्थिताशया, शुभाशया विज्ञपयाम्बभूव सा ॥१५७॥

सा श्रीदत्ता शिवस्य शर्मणो लाभकारकं प्रापकम् अतएव, चित्तस्य विषादस्य, खेदस्य हारकम् नाशकं सुधर्मलाभं तदाशिषम्, समासदत् प्राप्तवती, तथा, शुभाशया शुभभावाऽपि स्वदौस्थ्येन स्वदैन्येन कदर्थिताशया पीडितहृदया इदं वक्ष्यमाणं विज्ञपयाम्बभूव, मुनिं निवेदयामास ॥१५७॥

यथेन्द्रगोपप्रमुखा निरन्वया, मुनीश ! शब्दा विबुधैरुदीरिताः ।
तथा ममैषा गुरुभिः प्रकल्पिताऽभिधाऽपि तादृग् गुरुनिःस्वताजुषः ॥१५८॥

मुनीश ! विबुधैः विद्वद्भिः, यथा इन्द्रगोपप्रमुखाः इन्द्रगोपादयः शब्दाः निरन्वयाः अन्वयेन इन्द्रं गोपायतीत्याद्यर्थेनासम्बद्धाः उदीरिताः उच्चारिताः, यस्य हीन्द्रगोप इति नाम न स इन्द्रं गोपयतीति भावः। तथा, गुरुभिः पित्रादिभिः गुर्वी महती या निःस्वता दारिद्र्यं तज्जुषते सेवते इति तस्यास्तादृश्या ममाऽपि प्रकल्पिता एषा श्रीदत्तेत्यभिधा तादृक् निरन्वया, यदि सान्वया तर्हि श्रियादत्ता कथं निःश्रीका स्यादिति भावः ॥१५८॥

मनोरथाम्भोजकुलप्रकाशिता, दुरन्त्यदौर्विध्यघनोदये सति ।
प्रभो ! कदाचिद् मम या बभूव, नास्तु सा त्वदालोकशरत्समागमात् ॥१५९॥

प्रभो ! दुरन्त्यं दुरुच्छेद्यं यद्दौर्विध्यम्—दैन्यम् तदेव घनोदयः वर्षागमः तस्मिन्सति या मम मनोरथा एवाम्भोजानि तेषां कुलस्य प्रकाशिता विकासित्वं विकासनं कदाचिन्न बभूव, सा प्रकाशिता, त्वदालोकस्त्वद्दर्शनमेव शरत्समागमः ततः अस्तु, वर्षासु पद्मानि नश्यन्ति, शरदि च रोहन्ति, त्वत्प्रभावतो मनोरथः फलत्विति भावः ॥१५९॥

पुराकृतैः सम्पदवाप्यते शुभैः, कृतानि नो तानि मया भवान्तरे ।
ततोऽन्वभूवं च दरिद्रतासुखं, यदस्ति नाहेतुकमत्र हेतुमत् ॥१६०॥

पुराकृतैः शुभैः पुण्यैः सम्पदवाप्यते, तानि पुण्यानि मया भवान्तरे पूर्वजन्मनि न कृतानि, ततो हेतोश्च दरिद्रतासुखमिति सोल्लुण्ठनोक्तिः दैन्यप्राचुर्यमित्यर्थः अन्वभूवम्, अत्र हेतुहेतुमद्भावः दरिद्रताऽसुखं दुःखं प्रदर्शनायाऽह—अत्र लोके यदस्ति यद्विद्यमानम्, तत्सर्वं हेतुमत् सहेतुकम्, न अहेतुकम्, कारणत्वेन कार्यत्वेन च कार्यकारणभावः तथाच दैन्यंप्रति अपुण्यं विहाय किमपरं कारणं भवितुमर्हति यदुपादीयेत ! इति भावः ॥१६०॥

मुनीन्द्र ! दुष्कर्मरजः प्रभञ्जन-प्रभं ममैतर्हि किमप्युपादिश ।
इतीष्टविज्ञापनया तदीयया सचक्रवालाभिधमादिशत्तपः ॥१६१॥

मुनीन्द्र! मम एतर्हि अधुना, दुष्कर्म एव रजः तस्योद्धवने प्रभञ्जनप्रभं महावाततुल्यं किमपि व्रतादि उपदिश, तदीयया श्रीदत्ताकृतया इत्युक्तप्रकारयेष्टविज्ञापनया हेतुना स मुनिः चक्रवालाभिधं तप आदिशत् ॥१६१॥

शुभाशये ! त्रिंदशमाऽपिसप्तभि, र्वरं चतुर्थानि चतुर्गतिक्षये ।
तथा त्रिरात्रं कुरु पूर्वतोऽन्ततः, तपः समाराध्यमिदं महापदम् ॥१६२॥

शुभाशये ! चतुर्गतिक्षये गतिचतुष्टयक्षये वरं सप्तभिः त्रिदशमापि त्रिंशच्चतुर्थानि सप्तत्रिंशदुपवासानि तथा, त्रिरात्रं दिनत्रयमितं तपः अष्टमं तप इत्यर्थः पूर्वतोन्ततः आदावष्टमं तपः अन्ते चाष्टमं इदं महापदं समाराध्यम्—आचरणीयम् ॥१६२॥

यथेदृशं नाऽन्यभवे भवेत् पुन, स्तवाधिवाधाकृदशर्मभाविनी ।
इति प्रतीतां गिरमभ्युपेत्य सा, गुरोर्निजग्राममुपागमज्जवात् ॥१६३॥

यथा यत्तपःप्रभावेण, भाविनि अन्यभवे, तव ईदृशमनुभूयमानतुल्यम्, अधिवाधाकृत् अधिक--पीडाकरम् , यद्वा आधिवाधाकृदितिच्छेदः तथा आधिर्मानसीव्यथा तद्रूपबाधाजनकम् , अशर्म दुःखं पुनः न भवेत् , गुरोः मुनेः इति प्रकारं गिरं वाचमभ्युपेत्य स्वीकृत्य सा श्रीदत्ता जवात् सत्वरं निजग्राममुपागमत् ॥१६३॥

तपः समारब्धमवेत्य पारणा, दिनेषु तस्यै ददुरुत्तमस्त्रियः ।
निमन्त्र्य चाहूय भुजिक्रियाविधिं, विधाप्य वासांसि कृतप्रशंसनम् ॥१६४॥

तपः समारब्धं क्रियमाणमवेत्य ज्ञात्वा, पारणादिनेषु उत्तमाधर्मकार्येषु श्रद्धावत्यः स्त्रियः, निमन्त्र्य भोजनप्रार्थनां कृत्वा आहूय च भुजिक्रियाविधिं विधाप्य भोजनं कारयित्वा कृतप्रशंसनम् यथास्यात्तथा प्रशस्य तस्यै श्रीदत्तायै वासांसि ददुः ॥१६४॥

चकार कर्माणि गृहेषु येषु सा, भृतिं द्विरुक्तामपि तेष्वविन्दत ।
तपःप्रभावेण दिनैश्च कैश्चन, समृद्धिमत्वं कलयाश्चकार सा ॥१६५॥

सा श्रीदत्ता येषु गृहेषु कर्माणि जलाहरणप्रेषणादि कार्याणि चकार, तपः प्रभावेण, तेषु द्विरुक्तां द्विगुणितां भृतिं वेतनमप्यविन्दत लेभे, तथा च, कैश्चन दिवसैश्च समृद्धिमत्त्वं कलयाञ्चकार, सम्पन्ना जातेत्यर्थः ॥१६५॥

निकेतकुड्यैकतरप्रदेशकः, प्रचण्डवातप्रतिघाततोऽन्यदा ।
पपात तस्याः सुतरां जरत्तर,-स्तदन्तरे किञ्चिदवाप सा वसु ॥१६६॥

अन्यदा तस्याः श्रीदत्तायाः जरत्तरोतिजीर्णः निकेतकुड्यस्य गृहभित्तेरेकतरप्रदेशकः कश्चिद् भागः प्रचण्डवातस्य प्रतिघाततः आघातात्पपात, सा श्रीदत्ता तस्य कुड्यस्यान्तरे मध्ये किञ्चिद् वसु धनमवाप ॥१६६॥

निरन्तरायं तपसि प्रसाधिते, सहर्षमुद्यापनमाततान सा ।
चतुर्विधं सङ्घमपूपुजच्च सा, प्रमोदसङ्घप्रतिपादनक्षमम् ॥१६७॥

निरन्तरायं निर्विघ्नं तपसि चक्रवालतपसि प्रसाधिते समाप्ते सति सा श्रीदत्ता सहर्षम् उद्यापनं व्रतोद्यापनोत्सवम् आततान चकार, तथा सा श्रीदत्ता, प्रमोदसङ्घस्य हर्षपरम्परायाः प्रतिपादने करणे क्षमं समर्थम् चतुर्विधं सङ्घं अपूपुजत् पूजयतिस्म च ॥१६७॥

तया तपः पारणकान्त्यवासरो, भुजिक्रियायै विनिविष्टया पुरः ।
समैक्षि मासक्षपको महामुनिः, शमाचलः सुव्रतनामधेयकः ॥१६८॥

तया श्रीदत्तया, भुजिक्रियायै भोजनाय विनिविष्टया कृतारम्भया सत्या, पुरोऽग्रे तपः पारणकः गृहीततपसः पारणा यस्मिन् तादृशः, अन्त्यवासरः अन्तिमदिवसो तस्य स तादृशः, मासक्षपकः मासोपवासव्रती, शमस्य अचलः पर्वत इव सुव्रतनामधेयकः महामुनिः समैक्षि ॥१६८॥

अकल्पितैः प्राशुकपानभोजनै-रुदारभक्त्या प्रतिलाभ्य सा स्वयम् ।
अथापि धर्मं शिवशर्मकारणं जिनेश्वरोपज्ञमपृच्छदेव तम् ॥१६९॥

अथापि भोजनार्थं विनिविष्टाऽपि सा स्वयम् नतु दास्यादि द्वारा, उदारभक्त्या, अकल्पितैः साधुत्वार्थमसंकल्पितैः प्राशुकैः अविध्यैः पानैः पेयैः भोजनैः भोज्यैश्च प्रतिलाभ्य, तं सुव्रतमुनिं- जिनेश्वरोपज्ञं जिनेश्वरोपदिष्टमेव नत्वन्यत्, शिवशर्मकारणं धर्ममपृच्छत् ॥१६९॥

मुनिर्बभाषे गृहमेत्य साधवः, कदापि सौस्थ्यै सुकृतोपदेशनम् ।
न कुर्वते किं पुनरालयैषिणां, गृहीतुमाहारमुपागता हितम् ॥१७०॥

मुनिः सुव्रतमुनिः बभाषे, किमित्याह-साधवः आलयैषिणां गृहस्थानां सौस्थ्यै सुस्थतानिमित्तं गृहमेत्य, कदापि सुकृतोपदेशनं धर्मदेशनां न कुर्वन्ति, हितं निर्दुष्टमाहारं गृहीतुमुपागताः किं पुनः ? सुस्थतानिमित्तमागताश्चेन्न कुर्वन्ति, तर्हि भिक्षार्थमागताः कथं कुर्वन्तु नामेत्यर्थः ॥१७०॥

यदिच्छसि श्रोतुमुपाश्रयं श्रयेः, सुसाध्वि ! निश्रेयससाधनोन्मुखि ! ।
इतीष्टमुच्चार्यगते मुनीश्वरे, चकार सा पारणकं मुदञ्चिता ॥१७१॥

सुसाध्वि ! निःश्रेयससाधनोन्मुखि ! यदि श्रोतुम् धर्मदेशनां श्रोतुमिच्छसि, तर्हि उपाश्रयं साधुनिवासस्थानं श्रयेरागच्छेः, इतीत्थमिष्टं हितमुच्चार्योक्त्वा मुनीश्वरे गते मुदञ्चिता प्रसन्ना सा श्रीदत्ता पारणकं पारणां चकार ॥१७१॥

भुजिक्रियाऽनन्तरमेव सा रयाद्, मुनिं प्रणन्तुं सह नागरैरगात् ।
प्रणम्य तत्पादयुगं प्रदक्षिणा, पुरस्सरं च न्यषदत्तदग्रतः ॥१७२॥

सा भुजिक्रियायाः भोजनादनन्तरमव्यवहितकाल एव नागरैः नत्वैकाकिनी, निषेधादितिःभावः, सह, रयात्सत्वरं मुनिं प्रणन्तुमगात्, एतेन तस्या अत्युत्कण्ठा सूचिता । प्रदक्षिणापुरस्सरं तस्य मुनेः पादयुगं प्रणम्य तस्य मुनेरग्रतः न्यषददुपाविशच्च ॥१७२॥

उदीर्य तस्या गुरुराशिषं निजां समादिशद्धर्ममधर्ममर्मभित् ।
जगत्त्रयीनायकभूरिकामित-प्रदानचिन्तामणिमानतस्करम् ॥१७३॥

अधर्मस्य मर्मरहस्यं भिनत्तीति स तादृशः अधर्मबलहन्ता गुरुः मुनिः सुव्रतः तस्याः श्रीदत्तायाः निजामाशिषं धर्मलाभमुदीर्योच्चार्य, जगत्त्रयीनायकः त्रिभुवनश्रेष्ठः तथा भूरिप्रचुरं कामितप्रदानं यथेष्टदानं यतः स तादृशः यथेहितप्रदानः चिन्तामणिः तदाख्यः मणिश्रेष्ठः तस्य मानस्य महत्त्वस्य तस्करं तदप्रदेयस्वर्गापवर्गप्रदत्वाल्लोपकं धर्मं समादिशदुपदिदेश ॥१७३॥

धर्मदेशनामेव युग्मेनाह—

जलं तपर्तौ पिबतोऽपि शीतलं, पुनः पिपासाभवनाद् न शर्मणे ।
शुचिं हिमर्तौ भजतोऽपि केवलं, पुनः स्फुरज्जाड्यविधेर्न तुष्टये ॥१७४॥

तपर्त्तौ ग्रीष्मे पिबतः जलं पिबतोऽपि, पुनः पिपासाभवनात् तृषोदयात् शीतलं जलं शर्मणे आत्यन्तिकैकान्तिकसुखाय न, तथा, हिमर्तौ हेमन्तर्तौ शुचिमग्निं भजतः सेवमानस्यापि, केवलम् अन्ततः, पुनः स्फुरत् वर्धमानं यद् जाड्यं शैत्यं तस्य सद्भावात् तुष्टये इच्छाशान्तये न, अग्निरिति लभ्यते, अग्निसेविनस्तदभावे जाड्याधिक्यमेवेति भावः ॥१७४॥

महातपे छायभरं च विन्दतः, क्षणान्तरे तापभयान्न पुष्टये ।
इदं जिनाधीश्वरभाषितं यथा, निषेवमाणस्य शुभं विवेकिनः ॥१७५॥

महातपे उग्रातपे छायभरं गाढच्छायं विन्दतः लभमानस्य च क्षणान्तरे अन्यस्मिन् क्षणे तापभयात्, सर्वदा छायायामेव स्थितिनियमाभावादिति भावः, पुष्टये तापशान्त्यै न छायभरमित्यर्थः । अत्र पूर्वपदे छायाशब्दस्य छायरूपता चिन्त्या, छाय शब्दस्य च न सम्भव इत्येव

प्रयोगश्चिन्त्य इति ध्येयम्। इदमुपदिष्टं जिनाधीश्वरभाषितं निषेवमाणस्य विवेकिनः हेयोपादेयः ज्ञानवतः, यथा शुभम्, शुभानुष्ठानं तथा पूर्वोक्तं नेत्यर्थः। जिनोक्तेन तत्त्वेन कान्तात्यन्त-शुभ-लाभः नेतरेभ्यः, पूर्वोक्तदृष्टान्तेभ्य इति भावः ॥१७५॥

दुरापसम्यक्त्वपुरस्सरेण, तज्जिनेन्द्रधर्मेण सुखाय भावयेः।
निजास्थिमज्जाभवमज्जनोज्जिहीः, पुरा परिव्राडिव चूर्णयोगतः ॥१७६॥

तत् शुभहेतुत्वात्, सुखाय शाश्वतसुखाय दुरापम् दुर्लभबोधिनाऽसुलभ्यं यत् सम्यक्त्वं तत्त्वार्थश्रद्धानलक्षणं तत्पुरस्सरेण तत्पूर्वकेन जिनेन्द्रधर्मदृढानुरागधिवासिता अस्थिमज्जावि-धेया जिनेन्द्रधर्मेण निजानि अस्थीनि मज्जाश्च, भावयेः, स वात्मना जिनेन्द्रधर्मं भजेरित्यर्थः, पुरा पूर्वकाले, चूर्णयोगतः चूर्णविशेषभक्षणादिना, भवे यन्मज्जनं जन्मादिलाभः तस्य उज्जिहीः उच्छे-दकः परिव्राट् सन्नासीव ॥१७६॥

अयं परिव्राट् क इतीरितस्तया, मुनिः पुनः प्राह विशेषवित्तमः।
अवन्तिदेशस्य महाविभूषणं, पुरी विशालाऽस्ति समृद्धिशालिनी ॥१७७॥

तया श्रीदत्तया, अयं भवता निर्दिष्टः परिव्राट् कः ? इतीत्थमीरितः पृष्टः, विशेषवित्तमः विद्वद्वरः मुनिः पुनः प्राह तथाहि—अवन्तिदेशस्य महाविभूषणम् उत्तमालङ्कारस्वरूपं समृद्धिशा-लिनी विशाला तन्नाम्नी पुरी अस्ति ॥१७७॥

बभूव तस्यां जितशत्रुभूपतिर्नयोपदेष्टा जितशत्रुभूपतिः।
सधर्मचारिण्यपि तस्य धारिणी, शरत्सुधांशूज्ज्वलशीलधारिणी ॥१७८॥

तस्यां विशालानगर्यां, नयस्य नीतेरुपदेष्टा प्रवर्त्तकः नीतिमानित्यर्थः, जितः शत्रुभूपति-र्येन स तादृशः जितशत्रुः तन्नामा भूपतिः बभूव, तस्य नृपस्य, शरदि शरदृतौ यः सुधांशु-श्चन्द्रः तमिव उज्ज्वलं निर्मलं शीलं धरतीति सा तादृशी विशुद्धशीलवती धारिणी तदाख्या सधर्म-चारिणी भार्या अपि, बभूवेति सम्बद्ध्यते ॥१७८॥

निजाङ्कपर्यङ्कशयालुकेसरि, स्वरूपसत्स्वप्ननिवेदितोदयः।
सुतः प्रतीतो नरसिंहसंज्ञया नृसिंहवद्विक्रमसंक्रमस्तयोः ॥१७९॥

तयोः राजदम्पत्योः, नृसिंहवत् विष्णोरवतारविशेषवत् विक्रमस्य सङ्क्रमः संगतिर्य-स्मिन्स तादृशः नृसिंहतुल्यविक्रमः, निजाङ्के पर्यङ्के शयालुः यः केशरी तत्स्वरूपः तादृशः यः सत्स्वप्नः तेन निवेदितः सूचितः उदयः गर्भावतारो यस्य स तादृशः, नृसिंहसंज्ञया प्रतीतः नृसि-हनामा सुतः, बभूवेत्यर्थाल्लभ्यते ॥१७९॥

स षोडशापि द्विगुणीकृताः क्रमात्कला विभज्येव कलानिधेः कृती ।
नरेन्द्रकन्या परिणायितो युवा-नृपेण सौभाग्यगुणोपशोभिताः ॥१८०॥

स कृती अधीतविद्यः युवा नरसिंहः, नृपेण विजितशत्रुणा, सौभाग्येन गुणैः शीलादिभि श्चोपशोभिताः, कलानिधेश्चन्द्रस्य षोडश अपि कलाः विभज्य भागद्वयं कृत्वा इव द्विगुणीकृताः द्वात्रिंशत् सङ्ख्याकाः नरेन्द्रकन्याः चन्द्रकलासदृशीः राजपुत्रीः परिणायितः । अत्र चन्द्रकलाविभागासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिमूलोत्प्रेक्षाऽलङ्कारः ॥१८०॥

समं स ताभी रमते स्म भूपभूः, शशीव ताराभिरुदित्वरद्युतिः ।
रसैरनेकैः परिवीतविग्रहस्तरङ्गिणीभिर्निधिरम्भसामिव ॥१८१॥

ताराभिः रोहिण्यादिभिः शशी चन्द्र इव, तरङ्गिणीभिर्नदीभिरम्भसां निधिः समुद्र इव, चन्द्रस्य तारापतित्वात्सागरस्य सरित्पतित्वाच्च तथोक्तिरिति बोध्यम् । उदित्वरा वर्धमाना द्युतिः प्रकाशः कान्तिश्च यस्य स तादृशः वर्धमानकान्तिः अनेकैः रसैः शृङ्गारादिभिः परिवीता सम्बद्धा मूर्तिः स्वरूप यस्य स तादृशः रसिकः स भूपभूः राजपुत्रः नरसिंहः ताभिः परिणीताभिः नरेन्द्रकन्याभिः समं रमतेस्म ॥ मालोपमाऽलङ्कारः ॥१८१॥

नितान्तमन्तःपुरमध्यवर्तिनो-विनिर्मिमाणस्य मिथः प्रहेलिका ।
समं वधूभिर्नृपतेस्तनूभुवः कदाचिदासीच्छरदागमस्ततः ॥१८२॥

ततः अनिशं रमणाद्धेतोः, वधूभिः प्रियाभिः समम् नितान्तम् सदैव अन्तःपुरमध्यवर्तिनः, न तु कदाचित् । मिथः परस्परम् प्रहेलिकाः गुप्तवस्तुकारकक्रियादयः पद्यविशेषान्, उपलक्षणत्वात्, इतराण्यपि क्रीडासाधनानि विनिर्मिमाणस्य कुर्वतः, नृपतेः तनूभुवः नरसिंहस्य, कदाचित्, शरदागमः आसीत्, अन्तःपुरे सदैव क्रीडासक्ते राजपुत्रे सति शरदृतुराजगामेत्यर्थः ॥१८२॥

श्लोकयुग्मेन शरदमेव विशिनष्टि—

नभः सरश्चापि बभूव निर्मलं, स्फुटीभवद्धंसविनिर्मितस्थितिः ।
समुत्पतत्सारसभङ्गिसङ्गतं, न यत्र नो तारकराशिभासितम् ॥१८३॥

नभ आकाशं सरः तडागादि च, निर्मलं मेघाभावात्वर्षणाच्च अनाच्छादितमकलुषं च, तथा, स्फुटीभवन्-शरदि हंसागम इति कविप्रसिद्धेः दृश्यमानः मेघावरणाभावाच्च प्रकाशमानः हंसः पक्षिविशेषः सूर्यश्च तेन विनिर्मिता कृता स्थितिः यस्मिन् तत्तादृशम्, तथा-समुत्पततां तडागेपूड्डीयागच्छतां व्योम्नि चोड्डीयमानानां सारसानां तदाख्यपक्षिणां भङ्गिभिः पंक्तिवद्धोत्पतनादिरचना शोभाभिः सङ्गतं समन्वितम् बभूव, यत्र शरदि, तारकराशीनां नक्षत्रसमूहानां भासितं प्रकाशनं नो न अपि तु भासितमेव, वर्षासु मेघावरणात्तारका न भासन्ते इति भावः ।

अत्र प्रस्तुतयोर्नभःसरसोः एकधर्माभिसम्बन्धात्तुल्ययोगिताऽलङ्कारः, तल्लक्षणं तथा–"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ।। इति ॥१८३॥

**दिशोऽपि काशैः सह यत्र लेभिरे, विकाशमात्मोदयसङ्गतैरिव ।**
**नृपप्रतापप्रसरादिवाधिकं, दधाति यस्मिंच्छविसंचयं रविः ॥१८४॥ युग्मम्॥**

यत्र शरदि दिशः अपि, आत्मनः स्वस्योदयेनाविर्भविन सहैव सङ्गतैः मिलितैरिव, काशैः तदाख्यतृणपुष्पविशेषैः सह–विकासमेकत्र नैर्मल्यमपरत्र विकचतां लेभिरे, दिशः प्रसन्नाः काशाश्च प्रफुल्ला इत्यर्थः । तथा यस्मिन् शरदृतौ, रविः सूर्यः नृपस्य जितशत्रोः प्रतापस्य कोशदण्डजतेजसः प्रसराद् दूरव्यापनाद्धेतोरिव, अधिकं पूर्वापेक्षयोग्रं छविसञ्चयं प्रकाशपुञ्जं दधाति, शरदि रविरधिकं तपतीति प्रसिद्धिरिति भावः ॥१८४॥

**कृतान्तयानभ्रममादिशन् नृणां, कपोलपालीप्रसरन्मदोदकः ।**
**तदा गजः कश्चिदुपेत्य काननादुपाद्रवत्तत्पुरमस्तसाध्वसः ॥१८५॥**

तदा तस्मिन्नेव शरदृतौ, कश्चित् गजः काननात् वनादुपेत्यागत्य, कपालपाल्याः गण्डस्थलात् प्रसरत्स्रवन्मदोदकं दानवारि यस्य स तादृशः मदोन्मत्तः, अत एव, अस्तसाध्वसः निर्भीकः, मत्तस्य भयादिविवेकाभावादितिभावः । नृणाम् कृतान्तस्य यानम् वाहनम् तस्य भ्रममादिशन् कुर्वन्, जनमृत्युकरत्वादिति भावः । तत्पुरमुपाद्रवत् तद्विशालानगरमुत्सादयामासेत्यर्थः ॥१८५॥

**अथ राज्ञे पौराणां तन्निवेदनं युग्मेनाह —**

**उपायनं वाहनमात्मनो ध्रुवं, मतङ्गजस्ते प्रहितो बिडौजसा ।**
**नवाम्बुभृद्धौतमहेश भूमिभृत्, सवर्णवर्णः क्षितिपाकशासन ! ॥१८६॥**

क्षितिपाकशासन ! महीमहेन्द्र !, बिडौजसा इन्द्रेण, आत्मनः स्वस्य वाहनम्, नवाम्बुभृन्नवजलदः तेन धौतः वर्षणाच्चिक्कणः कृतः यः महेशस्य महादेवस्य भूमिभृत् पर्वतः कैलासः तस्य सवर्णो समानो वर्णः कान्तिर्यस्य स तादृशः श्वेतवर्णः मतङ्गजः करी ऐरावतः ते तव उपायनमुपहारः प्रहितः प्रेषितः, ध्रुवमित्युत्प्रेक्षायाम्, कथमन्यथेदृश इति भावः ॥१८६॥

**बहिः स्थितस्ते सकलं स पत्तनं, पराभवन्नस्ति मदी वनद्विपः ।**
**समेत्य पौरा भयविह्वलाङ्गका, महीशमेवं रभसाद् व्यजिज्ञपन् ॥१८७॥ युग्मम् ॥**

स मदी मदवान् वनद्विपः वन्यगजः ते तव सकलं पत्तनं नगरं पराभवन्नुपद्रवत् बहिः स्थितोऽस्ति, पौराः समेत्य मिलित्वा, भयेन विह्वलाङ्गाः कम्पमानशरीराः सन्तः रभसात्सत्वरमेवमुक्तप्रकारं महीशं व्यजिज्ञपन् ॥१८७॥

विसृष्टपौरं बहुमानपूर्वकम् , प्रवर्तमानं करिनिग्रहे स्वयम् ।
सुतो नृसिंहः प्रणिपत्य पत्तिवद् . व्यजिज्ञपद्विज्ञपतिर्विशांपतिम् ॥१८८॥

विसृष्टपौरं निवर्तितनागरम् , करिनिग्रहे गजवधे स्वयं प्रवर्तमानं विशांपतिम् राजानम् विज्ञपतिः विदाम्वरः सुतः नृसिंहः, पत्तिवत्साधारणसैन्यवत्, एतेन तस्य विनयातिशयं निरभिमानित्वञ्चाह । प्रणिपत्य प्रणम्य बहुमानपूर्वकं व्यजिज्ञपत् ॥१८८॥

राजपुत्रविज्ञप्तिमेवाह—

प्रभो ! प्रयासः पशुमात्रवन्धने, स्वयं कथं सत्यपि मादृशे जने ।
अपेक्षते भूमिगृहप्रकाशने, रविप्रकाशः किमु दीपके सति ! ॥१८९॥

प्रभो ! मादृशे जने कार्यसाधनसमर्थे सत्यपि, पशुमात्रस्य पशोः, न तु वलिनो रिपुप्रभृतेः बन्धने निग्रहे स्वयम् तवात्मना प्रयास उद्यमः कथम् ! नैतदुचितमित्यर्थः । तत्र दृष्टान्तमाह—दीपके सति, भूमिगृहस्य भूम्यन्तःस्थगृहस्य प्रकाशने रविप्रकाशोऽपेक्ष्यते किमु ? नैवेत्यर्थः ॥१८९॥

इति प्रसह्य प्रतिषिध्य भूपतिं स च स्वयं व्यालसमीपमागतः ।
स्वमुत्तरीयं प्रवितत्य कन्दुकं, सुखेन चिक्षेप तदग्रतः क्षणात् ॥१९०॥

इत्युक्तप्रकारेण प्रसह्य हठात्, भूपतिं प्रतिषिध्य तादृशप्रयासान्निवार्य स नृसिंहः, स्वयं व्यालस्य मत्तगजस्य समीपमागतः, क्षणात् स्वमुत्तरीयमूर्ध्ववस्त्रं.सुखेनानायासेन प्रवितत्य विस्तार्य तदग्रतः गजस्य पुरस्तात् कन्दुकं चिक्षेप च ॥१९०॥

विधाय तं क्रोधवशात् स खण्डशः, समुद्भवत्कुत् प्रतितन्तुपाण्डुरम् ।
हरित्सु सर्वास्विव विक्षिपन्नभात्कुमारसम्बन्धियशस्तरोभवम् ॥१९१॥

समुद्भवत्कुत् सक्रोधः स गजः क्रोधवशात् प्रतितन्तुपाण्डुरम् सर्वतो धवलं तं कन्दुकं तदुत्तरीयवस्त्रं खण्डशः विधाय कुमारसम्बन्धि यश एव तरुर्वृक्षः, ततो भवमुत्पन्नमिव, सर्वासु हरित्सु दिक्षु विक्षिपन् अभात्, वस्त्रखण्डच्छलेन कुमारयशस्तरुफलमेव दिक्षु चिक्षेपेत्यर्थः । उत्प्रेक्षाऽलङ्कारः ॥१९१॥

चिरं परिक्लेशविधूतविभ्रमं, भ्रमिप्रकारैर्बहुभिर्विचेष्टितैः ।
शमं समायातमवेत्य तं सुधीः, समारुरोह प्रयतः स कुम्भिनम् ॥१९२॥

बहुभिरनेकप्रकारैः भ्रमिप्रकारैः विचेष्टितैः भ्रमणकारकचेष्टाभिः, विधूतविभ्रमं स्वयमप्राप्तखेदं यथा स्यात्तथा, चिरं परिक्लेश्य परिक्लाम्य, शमं विमत्ततां समायातं प्राप्तमवेत्य ज्ञात्वा तं कुम्भिनं गजं सुधीः स कुमारः प्रयतः सावधानः, पराभवो यथा न स्यादिति भावः, समारुरोह, तं खेदयित्वा वशमानीतवानित्यर्थः ॥१९२॥

गवाक्षमारूढवता महीभुजा, निरीक्षितश्चित्रविकाशिचक्षुषा ।
जनैः प्रशंसामुखरैश्च विस्मितै-र्गजं तमालानयति स्म स स्वयम् ॥१९३॥

गवाक्षं वातायनमारूढवता आश्रितेन महीभुजा राज्ञा विस्मितैः अनितरसाधारणकर्म-दर्शनाद्विस्मयं प्राप्तैः अत एव, प्रशंसामुखरैः स्तुतिपरायणैः जनैश्च चित्रेणाश्चर्येण विकाशिना फुल्लेन चक्षुषा निरीक्षितः स नरसिंहः स्वयम् तं गजमालानयति गजबन्धनस्थाणौ बध्नाति स्म ॥१९३॥

वसुंधराभारधुरंधरं सुतं, विभाव्य भूपो भुजवीर्यशालिनम् ।
अनन्यसाधारणधर्मकर्मणे, समागमं साधुगुरोः समैहत ॥१९४॥

भूपो जितशत्रुः, भुजवीर्येण बाहुबलेन शालते इत्येवं शीलम् पराक्रमिणं सुतं पुत्रं नरसिंहं वसुन्धरायाः पृथिव्याः भारस्य धुरन्धरं धूर्यं राज्यपालनयोग्यं विभाव्य ज्ञात्वा, अनन्यसाधारण-मितरासाध्यं यद्धर्मस्य कर्म व्रतानुष्ठानादि तदर्थं साधुगुरोः समागमं सङ्गं समैहतैच्छत्, पुत्रे योग्ये पितुः धर्मसाधनं सुकरमिति भावः ॥१९४॥

तदा तदायुक्तजनाननाम्बुजादुपागतं सूरिजयंधरं वने ।
नृपः समाकर्ण्य चचाल वन्दितुं, सुधीर्विलम्बं कुरुतां शुभे हि कः ! ॥१९५॥

तदा तादृशमनोवृत्त्यनन्तरं तदायुक्तः साधुसमाचारसन्देशकः नियुक्तो यो जनः वनपालकस्तदाननाब्जान्मुखाब्जात्, सूरिंजयन्धरं तदाख्यसूरिं वने उद्याने उपागतं समाकर्ण्य नृपो जितशत्रुः वन्दितुं चचाल, ननु किमिति तदैव चलितवान् ? तत्राह हि यतः कः सुधीः शुभे कर्मणि विलम्बं कुरुतां ? न कोऽपीत्यर्थः ॥१९५॥

विनम्य तं तस्य स धर्मदेशनां, निपीय संसारविरागमागतः ।
निवेश्य राज्ये तनयं लसन्नयं, कृती तपोराज्यमशिश्रियत् स्वयम् ॥१९६॥

तं जयन्धरसूरिं विनम्य प्रणम्य तस्य धर्मदेशनां निपीय भक्तिश्रद्धाभ्यां सादरं श्रुत्वा, संसाराद्विरागं निर्वेदमागतः, राज्ये लसन्नयं मनोज्ञनीतिकं तनयं नरसिंहं निवेश्याधिकृत्य, स कृती विज्ञो नृपः स्वयं तपोराज्यम् महीराज्यापेक्षयोत्कृष्टं तपोराज्यमशिश्रियत् ॥१९६॥

अथपौरनिवेदनं युग्मेनाह—

जनोऽन्यदा विज्ञपयाम्बभूव तं पुरीनिवासी नरसिंहभूपतिम् ।
पुरी तवेयं नृपतेऽमरावतीं, जहास या पौरमहर्द्धिभिः पुरा ॥१९७॥
मलिम्लुचैः संह्रियमाणकाञ्चनाऽधुनाऽभजद् ग्रामटिकातुलां च सा ।
इतीरयित्वा मह्निते गते जने, नृपः पुरारक्षकमादिशत्ततः ॥१९८॥

अन्यदा एकदा, पुरीनिवासी जनः नरसिंहभूपतिं विज्ञपयाम्बभूव निवेदयामास किमित्याह-नृपते ! पुरा या तवेयं पुरीविशाला नाम्नी पौराणां महर्धिभिः प्रचुरसमृद्धिभिरमरावतीम् देवनगरीं स्वतोऽल्पर्धित्वाज्जहास लघुतासूचकहास्यमकार्षीत्, सा च सैव विशालापुरी, अधुना मलिम्लुचैश्चौरैः संह्रियमाणं काञ्चनं लक्षणया काञ्चनादि धनं यस्यां सा तादृशी सती तस्करमुषिता, ग्रामटिकायाः अल्पग्रामस्य तुलामुपमाम् अभजत् नि.स्वा जातेत्यर्थः । इत्युक्तप्रकारमीरयित्वा निवेद्य महिते नगरे पूज्ये जने गते ततस्तदनन्तरं नृपः नरसिंहः, पुरारक्षकम् नगररक्षानियुक्तपुरुषमादिशत् ॥१९७-१९८॥

गृहाण चौरान्निगृहाण सत्वरं, तव स्थितिर्नापरथेति भाषितः ।
नृपेण सोऽपि प्रतियामिनि भ्रमन्, न चौरनामापि समासदत् क्वचित् ॥१९९॥

चौरान् सत्वरं गृहाण, निगृहाण निग्रहं कुरु च, अपरथा तस्कराग्रहनिग्रहयोः, तव स्थितिः न, त्वमेव निगृहीतः स्यादित्यर्थः । नृपेणेत्युक्तप्रकारं भाषित आदिष्टः सः नगररक्षकोऽपि, प्रतियामिनि रात्रौ रात्रौ भ्रमन् नगरे पर्यटन् चौरनामापि, दूरे चौरग्रह इति भावः, क्वचिन्ना सदत् ॥१९९॥

पुनर्जनैर्व्यज्ञपि नागरैर्नृपः, प्रभो ! ह्रियन्ते नगरीस्त्रियो निशि ।
प्रविश्य चौरैर्भवनेषु नोऽधुना, निवस्तुमन्यत् पुरमाशु दर्शय ॥२००॥

नागरैः जनैः नृपः नरसिंहः पुनः व्यज्ञपि निवेदितः । किमित्याह-प्रभो ! निशिरात्रौ चौरैः भवनेषु गृहेषु प्रविश्य नगरीस्त्रियः ह्रियन्ते अपह्रियन्ते, अतः अधुना नोऽस्मान् निवस्तुं वासं कर्तुमन्यश्चौरोपद्रवशून्यं पुरमाशु दर्शय, चौरोपद्रवतः इदं नगरं न वासयोग्यम्, अरक्षितत्वादिति भावः ॥२००॥

ततः स लज्जाभरसंकुचन्मुखः, समीक्षितुं तान् परमोषिणः स्वयम् ।
निवस्य नीलं वसनं तमीमुखे, स्वमन्दिराद् भूमिपतिर्विनिर्ययौ ॥२०१॥

तत. पौरोपालम्भहेतो', लज्जाभरेण संकुचदनतिशोभितं मुखं यस्य स तादृशः सन् रक्ष्याऽरक्षणे रक्षको लज्जते इति भावः. स भूमिपतिः नरसिंहः, तान् परमोषिणः चौरान् समीक्षितुं ग्रहीतुम् स्वयमात्मनैव, अधिकारिभिरसाध्यत्वादिति भावः । नीलम् अन्धकारे यथा न कोऽपि लक्षयेदिति कृष्णवर्णं वसनं वस्त्रं निवस्य परिधाय तमीमुखे रात्रौ स्वमन्दिराद् विनिर्ययौ बहिर्जगाम ॥२०१॥

कृपाणपाणिः कृपणत्ववर्जितः, कृपाश्रयोऽपि श्रुतचौरनिष्कृपः ।
अहर्मुखं यावदसौ भ्रमन्नभूत्, परं न कश्चित् समवैक्षत प्रभुः ॥२०२॥

श्रुता चौरस्य निष्कृपा चौर्यादिना निष्ठुरत्वं येन स तादृशः चौरक्रूरकर्माभिज्ञः, अत एव कृपाश्रवः दयालुरपि कृपाणपाणिः गृहीतासिः, कृपणत्ववर्जितः अदीनः, उत्साहसम्पन्न इति यावत्, प्रभुः नृपः, असौ नरसिंहः, अहर्मुखं प्रत्यूषं यावत् भ्रमन्नभूत् अतिष्ठत् 'प्रत्यूषोऽहर्मुखं कल्पमुत्स प्रत्युषसी अपी' त्यमरः । परं किन्तु कञ्चन चौरादिकं न समवैक्षत ॥२०२॥

पुनः प्रदोषे तिमिराऽच्छवेषभृत्, पुरः प्रतोल्या बहिरेव निर्गतः ।
मलिम्लुचान्वेषणबद्धमानस—स्तरुं समाश्रित्य स एककं स्थितः ॥२०३॥

पुनः भूयोऽपि प्रदोषे रजनीमुखे "प्रदोषोरजनीमुखमि" त्यमरः । मलिमुचान्वेषणे बद्धं मानसं यस्य स तादृशः चौरग्रहणेच्छुः स नृपः, तिमिरमिव अच्छं चिक्कणनीलं वेषं नेपथ्यं बिभर्तीति स तादृशः नीलपरिधानः सन्, पुरो नगर्याः प्रतोल्या रथ्याया एव, न तु राजमार्गेण, अन्यथा केनचिद्दृष्टे कार्यहानिसम्भवादिति भावः । "रथ्याप्रतोली विशिखे"त्यमरः । बहिर्निर्गतः, एककं कमपि तरुं वृक्षं समाश्रित्य स्थितः ॥२०३॥

त्रिदण्डभृत् कश्चन तत्र तापसः, समाययौ सालसमायताङ्गकः ।
स तेन पृष्टो वसुधासुधाकरः, प्रणम्य तं पान्थमवोचत स्वकम् ॥२०४॥

तत्र तरौ त्रिदण्डभृत् संन्यासिवेषः, सालो वृक्षः स इव समायताङ्गकः विशालशरीरः कश्चना-निर्दिष्टनामा तापसः समाययौ । तेन तापसेन को भवानिति पृष्टः, स वसुधायां सुधाकरश्चन्द्र इव नरसिंहः, प्रणम्य, तं तापसं स्वकमात्मानं पान्थम्, पान्थोऽहमित्येवमवोचत ॥२०४॥

जगौ परिव्राजक एव रेऽत्र कौ, विलोकिताः के विषयास्त्वया ननु ।।
ततः स तं प्रत्यवदत् कृतादरं मुनीश दृष्टा विषयाः परः शताः ॥२०५॥

परिव्राजक एव जगौ, न तु नृपः, एतेन नृपस्य तत्स्वरूपपरिचयाभिप्रायः सूचितः । रे ! निकृष्टसम्बोधने, अत्र कौ पृथिव्यां "गोत्रा कुः पृथिवी पृथ्वी"त्यमरः । त्वया पान्थेन के विषयाः देशाः विलोकिता ननु, ततः प्रश्नान्तरम्, स नृपः तं तापसं प्रति, कृतादरं यथास्यात्तथा अवदत् । किमित्याह—मुनीश ! परःशताः शतादप्यधिकाः विषया दृष्टाः ॥२०५॥

कलिङ्गवङ्गाङ्ग तिलङ्गगूर्जराः सहूणकाश्मीरखसोड्रचेदयः ।
इमेऽपि दृष्टा न धनं क्वचिन्मया किमप्यवापि क्व शुभं शुभं विना ! ॥२०६॥

कलिङ्गो वङ्गोऽङ्गस्तिलङ्गः गुर्जरश्च हूणः काश्मीरः खसः उड्रः चेदिश्च तैः सह इमे सर्वेऽपि विषयाः दृष्टा अपि किन्तु मया पान्थेन क्वचित्किञ्चिदीषदपि धनं न अवापि, तत्र न तेषु धनाभावो हेतुः किन्तु मदीयं मन्दभाग्यमेवेत्याह—शुभं पुण्यं विना शुभं धनाद्यवाप्तिरूपं मङ्गलं क्व ? न कुत्रापीत्यर्थः ॥२०६॥

तदुक्तमाकर्ण्य स तापसोऽभ्यधात्, तवाद्य दारिद्र्यमपाकरोम्यहम् ।
धनं समानीय पुरः पयोऽम्बुधे-र्नगस्य सन्तापमिवाम्बुदो घनम् ॥२०७॥

तस्य कृत्रिमवेषस्य नृपस्य उक्तं वचनमाकर्ण्य स तापसः अभ्यधात् जगाद, अहम् अद्य तव-दारिद्र्यम् , पुरः नगर्याः घनमत्यधिकं धनम् , अम्बुदः मेघः नगस्य पर्वतस्य वृक्षादेश्च संतापम् सूर्यखरकरकृततप्तताम् अम्बुधेः समुद्रात्पयः जलमिव समानीय अपाकरोमि हरामि । उपमा ॥२०७॥

प्रफुल्लतापिच्छनिभे तमोभरे, प्रसृत्वरे प्रास्थित सोऽपि सुस्थितः ।
पदातिवत् तेन समं महीपति-र्महीभुजः स्वार्थपरा हि केवलम् ॥२०८॥

प्रफुल्लं यत्तापिच्छं तमालतरुः "मालस्कंधस्तमालस्स्यात्तापिच्छोऽपि" इत्यमरः । तन्निभे तत्स दृशास्याभे प्रसृत्वरे प्रसरणशीले तमोभरे गाढान्धकारे सः तेन तापसेन समं सुस्थितः सावधानः महीपतिरपि पदातिः पत्तिस्तेनेव प्रास्थित चचाल, ननु किमिति महीपतिः सन्नपि पदातिक्रिय इति चेत्तत्राह-हि यतः महीभुजः राजानः केवलं स्वार्थपराः स्वार्थसाधनोद्यताः, एवञ्च स्वार्थ-साधनाय क्रिया सामान्येन तेषां प्रवृत्तिरिति ॥२०८॥

समुद्धतैरेव वचोभिरिङ्गितै-रवेत्य चैनं परमोषिणं नृपः ।
महेच्छ ! यद्येवमहं न कर्मकृत्तु, ते किमाश्वासमिति प्रकाशयन् ॥२०९॥

नृपः नरसिंहः, एनं तापसं समुद्धतैः पुरुषैः वचोभिः इङ्गितै आकारादिभिश्चैव परमोषिणं चौरमवेत्य, महेच्छ ! उदाराशय ! यदि अहमेवं वर्तमानप्रकारेण ते तव कर्मकृत् किङ्करः न, भवामीति शेषः, तर्हि, ते तव किंनु आश्वासः आयासाल्पता प्रयुक्तः सन्तोषः ? न किमपि, अतोऽहं तव कर्म करोमि इति एवं प्रकाशयन् स्वभक्तिं वेदयन् , अस्याग्रे आधादित्य-नेनान्वयः ॥२०९॥

निहन्तुमेनं जगदेकवैरिणं, करेऽसिमाधात प्रतिकारमध्यतः ।
प्रयाति वा कुत्र करोति चैष किं, हृदा विमृश्येत्यसिमाधिताश्रये ॥२१०॥

एनं तापसं जगतः सकलजनस्यैकं प्रधानं वैरिणम् निहन्तुं करे असिमाधाद , गृहीतवान् , वा पुनः प्रतिकारमध्यतः प्रतीकारोपायविशेषमाश्रित्य, एष तापसः क्व प्रयाति किञ्च करोति इत्येवं हृदा मनसा विमृश्य असिमाश्रये असिपत्रे आधीत स्थापितवान् ॥२१०॥

कृतान्तकान्ताकबरीसहोदरं, करे कृपाणं समवेक्ष्य पृष्ठतः ।
विचिन्तयामास मलिम्लुचोऽप्ययं, ध्रुवं न सामान्यपराक्रमः पुमान् ॥२११॥

मलिम्लुचः चौरोऽपि पृष्ठतः पृष्ठभागे, कृतान्तस्य यमस्य कान्तायाः कवर्याः केशवेशस्य "कबरी केशवेशः" इत्यमरः । सहोदरं तुल्यं कृष्णवर्णं दीर्घञ्च कृपाणमसिं करे नृपकरे समवेक्ष्य विचिन्तयामास, किमित्याह–अयं सहचरः पुमान् सः नरः सामान्यपराक्रमः न, किन्तु विशेषपराक्रमः, ध्रुवमनुमिनोमीत्यर्थः ॥२११॥

असामान्यपराक्रमित्वे हेतुमाह—

किमस्त्रमीदृक् पथिकस्य सम्भवे-,दिति स्वचित्ते परिचिन्त्य सोऽभ्यधात् ।
अहो ! प्रतीक्षस्व ! विचक्षण ! क्षणं, यदेष जागर्त्यधुनाऽपि पूर्जनः ॥२१२॥

किमिति प्रश्ने, पथिकस्य ईदृग् दृष्टप्रकारमस्त्रं सम्भवेत् ? नैवेत्यर्थः, अतोऽयं न सामान्यपराक्रम इति एवं स्वचित्ते विचिन्त्य, स तापसोऽभ्यधात् , किमित्याह–अहो ! विचक्षण ! धीमन् ! क्षणं किञ्चत्कालं प्रतीक्षस्व, तत्र हेतुमाह यद्यतः एष पूर्जनः नगरलोकः अधुनाऽपि जागर्ति, एवञ्चाधुना गमने कार्यसिद्धिर्न सम्भवति, प्रत्युत ग्रहणभयमेवेतिभावः ॥२१२॥

ततो वलित्वा विपुलापतिस्तरोरधस्तदादेशवशादशङ्कितः ।
चकार संस्तारकयुग्ममायतं दलैश्च विश्रामसमीहया क्षणात् ॥२१३॥

ततस्तदुक्त्यनन्तरं तस्य तापसस्यादेशाद् विपुलापतिः नृपः अशङ्कितः निर्भयएव, वलित्वा निवृत्य, तरोः अधस्तले, विश्रामस्य समीहयेच्छया क्षणात् शीघ्रमेव दलैः तरुपत्रैश्च आयतं दीर्घं संस्तारकयुग्मं स्वस्मै तस्मै च शय्याद्वयं चकार, यद्वा तदादेशाच्चकारेत्येवमन्वयः ॥२१३॥

अयं प्रमीलामुपलप्स्यते परं, मयि प्रसुप्ते प्रथमं न चान्यथा ।
इति स्वचित्ते विनिवेश्य तस्करो,-ऽप्यशेत निद्रामपि स स्म विन्दति ॥२१४॥

अयं सहचरः पथिकः, मयि प्रथमं प्रसुप्ते परं पश्चात् प्रमीलां निद्रामुपलप्स्यते प्राप्स्यति, न चान्यथा पूर्वमयं न शयिष्यते इत्यर्थः । इतीत्थं स्वचित्ते विनिवेश्य विचार्य स तस्करः तापसवेषः, अशेत शयितवान् , निद्रामपि विन्दतिस्म ॥२१४॥

ततः समुत्थाय स दारुखण्डकं, मुमोच संस्तारक एव भूपतिः ।
निजोत्तरीयेण पिधाय तस्थिवान् , विशालशालान्तरितः स्वयं सुधीः ॥२१५॥

ततः तस्करे सुप्ते सुधीः स भूपतिः नरसिंहः समुत्थाय शय्याया उत्थाय संस्तारके शय्यायाम् , दारुखण्डकं काष्ठखण्डमेव मुमोच निक्षिप्तवान् नतु स्वयं तत्र तस्थौ, निजेनोत्तरीयेणोर्ध्ववस्त्रेण पिधायाच्छाद्य, दारुखण्डमेवेत्यर्थः । यथा स सुप्त एवेति मतिः तस्करस्य स्यादितिभावः । स्वयम् विशालेन शालेन वृक्षेणान्तरितः छन्नवपुः तस्थिवान् , तस्करप्रवृत्तिनिरूपणार्थमितिभावः ॥२१५॥

स तु प्रबुद्धः शयितं–विबुध्य तं, त्रिदण्डमध्यस्थमसिं करेऽकरोत् ।
तदन्तिकं प्राप्य शनैश्च दारु तद्, द्विखण्डमाधान्निशितेन तेन च ॥२१६॥

स तस्करस्तु प्रबुद्धः विनिद्रः सन् तं सहचरमेव शयितं विबुध्य ज्ञात्वा, त्रिदण्डः संन्यासिधारणीयकाष्ठरचना विशेषः । तन्मध्यस्थं गुप्तमसिं करे अकरोत्, शनैश्च तदन्तिकं सहचरशय्यासमीपं प्राप्य गत्वा निशितेन तीक्ष्णेन तेनासिना च तद् दारु एव पुरुषबुद्ध्या द्विखण्डमधात् चिच्छेद ॥२१६॥

दृढाभिघातादसृजामवाहतः, स वीक्ष्य भीतिं रचयन् व्यचिन्तयत् ।
शठेन जागर्यपि तेन वञ्चितः, ततोऽनुयास्यामि तमेव मायिनम् ॥२१७॥

स तस्करः वीक्ष्य छिन्नं वस्तु दृष्ट्वा, दृढाभिघातात् हेतोरपि, असृजाम् शोणितानाम्, अवाहतः प्रवाहजननात्, भीतिं रचयन् विभ्यत् व्यचिन्तयत्, किमित्याह–जागरी जागरोऽनिद्रा सास्त्यस्य स तादृशः जाग्रदप्यहं तेन पथिकेन शठेन वञ्चितः छलितोऽस्मि, ततो हेतोः तमेव मायिनम् छलपरं पथिकमनुयास्यामि, यथा तं निगृह्णीयामिति भावः ॥२१७॥

इति स्मृतिव्याप्टतिचान्तचेतसं, मलिम्लुचं प्रत्यवदद्धराधिपः ।
प्रकाश्य चात्मानमदः सतर्जनं, भटो मृगाधीशमिव प्रभोद्भटः ॥२१८॥

इत्युक्तप्रकारेण स्मृतेर्व्याप्टतौ स्मरणे चान्तं लग्नं चेतो यस्य तं तादृशं विचारयन्तं मलिम्लुचं चौरं प्रति धराधिपः नृपः, आत्मानं स्वं प्रकाश्य प्रकटीकृत्य प्रभोद्भटः उत्कृष्टप्रभावान् भटो योधे मृगाधीशं सिंहमिव सतर्जनं तर्जनासहितं तर्जयन्नदो वक्ष्यमाणमवदत् ॥२१८॥

अरे ! मुषित्वा नगरीं दुराशय !, क्व यास्यसि क्रोधपरेऽद्य मय्यपि ? ।
भवानिव च्छद्मपरो न चाहकं, तदायुधं सज्जय सज्जनेतर ! ॥२१९॥

अरे ! दुराशय ! दुष्ट ! क्रोधपरे क्रुद्धे मयि सत्यपि अद्यापि नगरीं मुषित्वाचोरयित्वा क्व यास्यसि ? अद्य नैतत्सम्भवतीति भावः । सज्जनेतर ! दुर्जन ! तत्ततः आयुधमस्त्रं सज्जय सन्धेहि, छलेन हननं न वीरधर्मं इत्याह–भवानिवाहकमहं छद्मपरः कपटपरायणः न च नैव, तस्मात्सम्मुखं युद्ध्येत्यर्थः ॥२१९॥

इतीरिताकूतसमुद्भवत्क्रुधं, तमापतन्तं नृपतिच्छलाचितम् ।
अपातयच्छिन्नपलाशिवत् क्षितौ निहत्य खड्गेन निवारयन्निव ॥२२०॥

इत्युक्तप्रकारस्येरितस्य वचनस्याकूतेनाभिप्रायेण समुद्भवन्ती क्रुत्क्रोधो यस्य तं तादृशं "रुट्क्रुधौ स्त्रियौ" इत्यमरः ! तादृशवचनेन क्रुद्धम्, छलाचितं छलिनं तं तस्करम् आपतन्तं-

प्रहर्तुमाधावन्तं निवारयन्निव खड्गेन निहत्य छिन्नपलाशिवत् छिन्नद्रुमवत् क्षितावपातयत् "पलाशीद्रुद्रुमागमः" इत्यमरः ॥२२०॥

तथास्थितः स क्षितिपालमूचिवां-स्तवासिघातेन सुरञ्जितोऽस्म्यहम् ।
प्रयाहि तद्वीरशिरोमणेऽधुना, निरीक्ष्यते यत्र वटोऽयमायतः ॥२२१॥

तथास्थितः खड्गनिहितः स तस्करः, क्षितिपालमूचिवान्, किमित्याह–वीरशिरोमणे ! तवाऽऽसिघातेन खड्गप्रहारेण, अहं सुरञ्जितः गाढमाघातितोऽस्मि, तत्ततोऽधुना सद्य एव प्रयाहि, क्वेत्याह–यत्र स्थाने अयमायता अतिदीर्घः वटस्तदाख्यतरुर्निरीक्ष्यते ॥२२१॥

रमापतेस्तत्र निकेतनं महत्तदन्तिकश्वभ्रगृहान्तरस्थिताः ।
अनेकशः सन्ति मृगेक्षणाः समं, ममाऽपि जाम्या धनदेविसंज्ञया ॥२२२॥

तत्र वटवृक्षसमीपे रमापतेः विष्णोः महन्निकेतनं विशालं मन्दिरमस्ति, तदन्तिके श्वभ्रगृहस्य भूमिगृहस्यान्तरे मध्ये स्थिताः, धनदेवि संज्ञया मम जाम्या भगिन्या अपि सममनेकशः मृगेक्षणाः स्त्रियः सन्ति ॥२२२॥

प्रभूतलोप्त्रं गणनाऽवधीरितं, सनाथय त्वं निखिलं तदेतकत् ।
असिं त्वभिज्ञानकृते ममाप्यमुं, वरं समादाय जवाद्व्रज स्वयम् ॥२२३॥

न केवलं स्त्रिय एव तत्र किन्तु धनान्यपि सन्तीत्याह–गणनया सङ्ख्यया अवधीरितं रहितमगणितमित्यर्थः । प्रभूतं प्रचुरं लोप्त्रं चौर्येण समाहृतं द्रव्यम्, अस्तीति शेषः । तदेतकन्निखिलं स्त्रीद्रव्यादि, त्वं सनाथय सस्वामिनं कुरु, तद्गृहाण स्वस्वत्वेनेति यावत्, अभिज्ञानकृते परिचयार्थं तु ममामुं दीयमानं वरमसिं कृपाणं समादाय, स्वयमात्मनैव, नत्वन्येन, तथा सति तत्र दोषसम्भवादिति भावः । जवात् शीघ्रं व्रज गच्छ इति ॥२२३॥

इति ब्रुवाणः स मलिम्लुचाग्रणी-र्भियेवराज्ञः परितत्यजेऽसुभिः ।
नृपोऽपि कौक्षेयकलक्ष्यपौरुषो धरागृहद्वारमुपागमद् द्रुतम् ॥२२४॥

इत्युक्तप्रकारेण ब्रुवाणः स मलिम्लुचस्तस्करः तस्याग्रणीर्मुख्यः महाचौरः, राज्ञः नरसिंहाद् भिया इव असुभिः प्राणैः परितत्यजे मृत इत्यर्थः । कौक्षेयकेण कृपाणेन लक्ष्यपौरुषप्रकटपराक्रमः नृपोऽपि धरागृहस्य भूमिगृहस्य द्वारं द्रुतमुपागमत्, चौरकथितमनुतिष्ठासुरिति भावः ॥२२४॥

तदीयजामिं तदुदीरिताख्यया, नृपः समाहूय तयोदजीघटत् ।
रसागृहद्वारशिलाविधानकं, न चामकाशः सति धामसंश्रये ॥२२५॥

नृपो नरसिंहः, तेन तस्करेण उदीरितया कथितया आख्यया नाम्ना तदीयजामिं तस्करभगिनीं समाहूय, तया धनदेव्या रसागृहस्य भूमिगृहस्य द्वारस्य शिलाकृतं पिधानकं कपाटकल्पम् पिधानसाधनम् उदजीघटदुद्घाटयामास, युक्तं चैतदित्याह–धाम्नः रश्मेः संश्रये आश्रये सति वर्तमाने अप्रकाशः न च नैव भवतीति शेषः ॥२२५॥

**अथाब्रवीत् सा सुकुमारया गिरा, क्षणं महाभाग ! विनोदय श्रमम् ।**
**निषद्य तल्पेऽपनयस्व चक्षुषो,–र्विषादमुच्छृङ्खलमेतयोर्मम ॥२२६॥**

अथ द्वारोद्घाटनानन्तरम्, सा धनदेवी सुकुमारया मधुरया गिरा वाण्या अब्रवीत्, किमित्याह–महाभाग ! क्षणं तल्पे शय्यायां निषद्योपविश्य श्रममध्वादि खेदं विनोदय दूरीकुरु, तथा, एतयोः त्वां पश्यतोः मम चक्षुषोः उच्छृङ्खलमुत्कटं विषादं त्वादृशजना दर्शनजग्लानिमपनयस्व, त्वद्दर्शनेन मम चक्षुषोः प्रीतिर्भवतीति भावः ॥२२६॥

**तव क्रमक्षालनहेतवेऽधुना, पयः समादाय समाव्रजाम्यहम् ।**
**इतीरयित्वाऽसिविलोकनाच्छुचं–हृदि स्पृशन्ती व्रजतिस्म सोत्सुका ॥२२७॥**

तव क्रमयोः पदोः क्षालनहेतवे मार्जनार्थम् अधुना अहं पयः जलं समादाय समाव्रजाम्यागच्छामि, इतीत्थमीरयित्वा, उत्सुका राजानं प्रत्युन्मनाः साधनदेवी असेः स्वभ्रातुरसेः विलोकनेन कृत्वा भ्राता मे मृत इत्येवं शुचं शोकं हृदि मनसि स्पृशन्ती कुर्वाणा, न तु प्रकटमिति भावः व्रजतिस्म ॥२२७॥

**नृपो नयग्रन्थविचारचातुरी–,विदांवरस्तल्पमरेर्बभाज न ।**
**सहोदरस्याऽपि महीपुरन्दरा, न विश्वसन्ति द्विषतः स्वसुस्तु किम् ? ॥२२८॥**

नृपः नयग्रन्थस्य नीतिशास्त्रस्य विचारे या चातुरी नैपुण्यं तत्र विदांवरः विद्वान्, अत एव, अनिष्टमाशङ्क्य, अरेः शत्रुरूपस्य चौरस्य तल्पं शय्यां न बभाज सिषेवे, तदेव समर्थयतिमहीपुरन्दराः राजानः सहोदरस्यापि भ्रातुरपि न विश्वसन्ति, द्विषतः शत्रोस्तु स्वसुः भगिन्याः किमु ! न विश्वसन्तीति किमु वक्तव्यमिति भावः ॥२२८॥

**निवेश्य चोच्छीर्षकमेव तत्र स, प्रदीपपृष्ठं स्वयमाश्रयद् नृपः ।**
**तदैव यन्त्राऽभिहताऽत्र सारवं, शिला विशाला निपपात केवलम् ॥२२९॥**

नृपः तत्र तल्पे उच्छीर्षकं दीपमेव निवेश्य स्थापयित्वा स्वयम् च प्रदीपस्य पृष्ठं दीपाधारपीठमाश्रयत्, तदैव तत्क्षण एवात्र तल्पे यन्त्रेणाभिहता प्रेरिता, केवलं सारवं सशब्दं न तु घातं कुर्वती यथा स्यात्तथा विशाला शिला निपपात, वधायेति शेषः ॥२२९॥

हतः स मद्भ्रातृविघातपापभागितीरयन्ती सहसाऽऽजगाम सा ।
नितम्बिनीनां हृदये कियच्चिरं, स्थितिं रहस्यं कुरुतामसारके ॥२३०॥

स मद्भ्रातुः विघातस्य वधस्य पापं भजतीति स तादृशः मद्भ्रातृहन्ता, हतः, मारितः इतीत्थमीरयन्ती सा धनदेवी, सहसा झटित्याजगाम, ननु तस्या एतादृशं रहस्यप्रकाशनं न युक्तमिति चेत्तत्राह–नितम्बिनीनां स्त्रीणाम्, असारके गाम्भीर्यशून्ये हृदये रहस्यं कियच्चिरं स्थितिं कुरुताम्, स्त्रीमनसि रहस्यं न गुप्तं तिष्ठतीति लोकप्रसिद्धिरिति भावः ॥२३०॥

कचैर्विधृत्य प्रसभं विकृष्य तां, मुमोच राजा विरसं रसत्तमाम् ।
यतोऽबलानां विनिबर्हणं बुधैः, विगर्हितं दुष्कृतवेश्मनामपि ॥२३१॥

राजा तां धनदेवीं कचैर्विधृत्य कचेषु गृहीत्वा, प्रसभं बलपूर्वकम् विकृष्य भूमौ विलोठयित्वा विरसमश्रव्यं रसत्तमामाक्रोशन्तीं मुमोच तत्याज, ननु किमिति तादृगपराधिन्या निग्रहो न कृत–इति चेत्तत्राह–यतो हेतोः बुधैः, अबलानां स्त्रीणाम्, दुष्कृतस्य पापस्य वेश्मनामास्पदानाम् महापापिनीनामपि विनिबर्हणं मारणं विगर्हितं निषिद्धम्, यतस्ताः अबला इति भावः । अत्रानिग्रहेऽबलत्वस्य विशेषणगत्या हेतुत्वावगमात्काव्यमलङ्कारः ॥२३१॥

प्रभातकृत्यं नृपतिर्वितत्य स, प्रभात एवार्पयति स्म नीतिवित् ।
यदेव यद्यस्य तदेव तस्य तत्, सहाबलाभिर्वसुसारमात्मना ॥२३२॥

स नीतिविन्नृपतिः नरसिंहः, प्रभाते एव प्रभातकृत्यं स्नानपूजादि वितत्य समाप्य आत्मना स्वयमेव, न तु राजपुरुषेण, धनस्य लोभजनकत्वात् विप्रियसम्भवादिति भावः । यस्य जनस्य, अबलाभिः, स्त्रीभिः सह यद्यदेव वसुसारमुत्कृष्टं धनम् तस्य तत्तदेवार्पयति स्म प्रत्यर्पयति-स्म ॥२३२॥

प्रजापतेरित्थमहो ! प्रजाऽवनं, प्रकुर्वतः सर्वत एव सर्वदा ।
प्रजापतित्वं चतुराननोचितं, बभूव किं नो कमलासनस्थता ? ॥२३३॥

इत्थमुक्तरूपेण सर्वतः सर्वेण प्रकारेण सर्वदा न तु कदाचिदेव प्रजानामवनं रक्षणं कुर्वतः प्रजापतेः नृपस्य नरसिंहस्य, चतुराननस्य ब्रह्मणः उचितं योग्यम् प्रसिद्धं वा प्रजापतित्वम् प्रजापालकत्वरूपम्, ब्रह्मणि हि रूढिः प्रजापतिशब्दस्य, अत्र तु अन्वर्थ एव इति भावः, कमलमेवासनं तत्रस्थता, ब्रह्मणः कमलमासनमिति पौराणिकाः, अत्र तु कमला लक्ष्मीः तदासने स्थितिः लक्ष्मीपात्रत्वमिति यावत्, किं नो बभूव अपितु बभूवैवेत्यर्थः ॥२३३॥

अथ व्यतीतेषु दिनेषु केषुचित्, पुनः प्रतीहारनिवेदितागताः ।
पुरौकसो भूमिपतिं व्यजिज्ञपन्निति प्रसादप्रतिपत्तिभास्वराः ॥२३४॥

अथ, केषुचिद्दिनेषु व्यतीतेषु सत्सु पुनः. पूर्वं प्रतीहारद्वारा निवेदिताः कृतनिवेदनाः पश्चादागताः पुरौकसः नगरनिवासिनो जनाः, प्रसादस्य नृपप्रसन्नतायाः प्रतिपत्त्या ज्ञानेन भास्वराः उज्ज्वलाः प्रसन्ना इति यावत्, भूमिपतिं राजानमिति वक्ष्यमाणप्रकारं व्यजिज्ञपन् निवेदयामासुः ॥२३४॥

**पौरनिवेदनमेवाह—**

**स तदृहीतो वनिताजनः प्रभो !, प्ररक्ष्यमाणोऽपि तदीयभूगृहम् ।**
**प्रति प्रयात्येव निजान् प्रियङ्करान्, प्रियान् सपत्नानिव मन्यतेतराम् ॥२३५॥**

प्रभो ! तेन तस्करेण गृहीत पुरा चोरितः स त्वया मोचितः वनिताजनः प्ररक्ष्यमाणः निवार्यमाणोऽपि तदीयं तस्करीयं भूगृहम् भूमिगृहम् प्रति प्रयाति आगताऽपि पुनर्वलित्वा यात्येव, यथा, निजान् स्वकीयान् प्रियङ्करान् न तु जात्वप्रियङ्करान् प्रियान् इष्टान् पित्रादीन् सपत्नान् शत्रूनिव मन्यतेतराम् भृशं मन्यते इति ॥२३५॥

**तदत्र कुर्मः प्रतिकारमेव कं, प्रभो ! प्रतीकारविबोधवर्जिताः ? ।**
**इतीदृशं पौरमुखान्निशम्य राट्, चिकित्सकानां मुखमैक्षत क्षणम् ॥२३६॥**

प्रभो ! तत्तस्माद्धेतोः, प्रतीकारस्य तासां प्रति गमननिरोधस्य विबोधेन ज्ञानेन वर्जिता वयम्, अत्र विषये कमेव प्रतिकारं निवारणोपायं कुर्मः ? तत्कथयेति शेषः । पौरमुखादितीत्थमीदृशं कष्टं निशम्य राट् नृपः चिकित्सकानां वैद्यानां मुखं क्षणमैक्षत भवद्भिरस्य प्रतिकारः कर्तुं शक्यते न वेत्याशयेनेति भावः ॥ २३६ ॥

**विबुध्य तैः कार्मणकर्म निर्मितं, मलिम्लुचेनैव महीशशासनात् ।**
**इमा यथायोगमवाप्तसत्क्रियैः, क्षणाच्चिकित्सा विरचय्य सज्जिताः ॥२३७॥**

मलिम्लुचेन चौरेणैव, निर्मितं कृतं कार्मणकर्म चूर्णादिपानेन वशीकरणप्रयोगं विबुध्य ज्ञात्वा, चौरस्यैव किञ्चित्कौशल्यं येनैताः प्रति निवर्त्तन्ते इति ज्ञात्वेत्यर्थः । अवाप्तसत्क्रियैः प्राप्तपूर्वोत्तरनिदानक्रियै. प्राप्तादरैस्तैर्वैद्यैः, महीशशासनान्नृपादेशात्, यथायोग्यं यथोचितं चिकित्साः प्रतिकारकौषधादि चूर्णादि पानादि वा कर्म, विरचय्य कृत्वा इमाः स्त्रियः क्षणादल्पेनैवकालेन सज्जिता· स्वस्थीकृताः, यथा न पुनः प्रतियाता इति भावः ॥ २३७ ॥

**तदस्थिवेधस्तु यदङ्कके स्थितस्तदस्थिखण्डैः सलिलेन पायितैः ।**
**अवापितैः सक्तुवदेव सूक्ष्मतामथाऽऽपि तैः सा प्रकृतिं भिषग्वरैः ॥२३८॥**

अथ सलिलेन पायितैः तस्य तस्करस्यास्थिखण्डैः, कृतः तस्या वनितायाः अस्थिवेधः कीलितास्थि इत्यर्थ·, यस्मिन्नङ्ककेऽङ्गे स्थितः भिषग्वरैः पटुवैद्यैः सक्तुवत् यवादिचूर्णविशेषवत्,

एव सूक्ष्मताम् चूर्णताम्, अवापितैः प्रापितैः तैः क्षीरस्थिखण्डैः पायितैः स्त्रीश्रेणिप्रकृतिम् स्वस्थतामपि नीता ॥ २३८ ॥

कदाचिदायातजयन्धराभिधो-,पदेष्टृवाक्यश्रवणाद् विरक्तधीः ।
निधाय राज्ये गुणपालनन्दनं, स्वयं तपोराज्यमशिश्रियद् नृपः ॥ २३९ ॥

नृपः नरसिंहः, कदाचित्, आयातस्योपागतस्य जयन्धराभिधस्योपदेष्टुर्गुरोर्मुनीशस्य वाक्यश्रवणात्, तत्प्रभावेण, विरक्तधीः वैराग्यवान् सन्, गुणपालाऽभिधं नन्दनं पुत्रं राज्ये निधायाभिषिच्य, स्वयम्, तपोराज्यम् अशिश्रियत् व्रतं गृहीतवानित्यर्थः ॥ २३९ ॥

महर्षिसङ्घैरपि यान्यसंस्तुतान्यनेकशस्तानि सुदुस्तपान्यसौ ।
तपांसि तप्त्वा समुपार्ज्य संविदं, निरत्ययं प्राप पदं नृपव्रती ॥ २४० ॥

असौ प्रस्तुतो नृपव्रती राजर्षिः महर्षिसङ्घैः मुनिवरवृन्दैः अपि, किं पुनः सामान्यधार्मिकैरित्यपेरर्थः । यानि तपांसि असंस्तुतानि अपरिचितानि, दुष्करत्वादननुष्ठितानीति यावत्, तानि तादृशानि, अनेकशः नानाविधानि सुदुस्तपानि अन्यैः तप्तुमशक्यानि तपांसि तप्त्वा संविदं केवलज्ञानं समुपार्ज्य प्राप्य निरत्ययमविनाशि पदं स्थानं मोक्षपदं प्राप ॥ २४० ॥

अथ मुनिः श्रीदत्तां प्रति दृष्टान्तमुपसंहरन्नाह—

तदीयमज्जाऽस्ति यथैव भाविता, प्रयुक्तचूर्णेन च तेन सुन्दरि ! ।
तथा त्वमात्मानमनन्यमानसा, प्रति प्रतीकं सुकृतेन भावयेः ॥ २४१ ॥

सुन्दरि ! श्रीदत्ते ! तदीया पूर्ववर्णितपौरकन्यायाः मज्जा अस्थ्यादि यथैव येन प्रकारेण, तेन प्रयुक्तेन चूर्णेन अस्थ्यादिचूर्णेन भाविता कृतस्वप्रभावा अस्ति तथा तेन प्रकारेण, त्वम्, अनन्यमानसा एकताना सती सुकृतेन पुण्यक्रियया आत्मानं स्वं प्रति प्रतीकं प्रत्यवयवं भावयेः चिन्तयेः, सुकृतैकताना भवेत्यर्थः । "अङ्गं प्रतीकोऽवयवोपघनः" इत्यमरः ॥ २४१ ॥

अथाऽभिनम्य व्रतिनं तमेव सा, प्रपद्य सम्यक्त्वपुरस्सरं वृषम् ।
प्रपञ्चितं द्वादशभिर्व्रतैर्निजं, गृहं समागात्सममेव नागरैः ॥२४२॥

अथ कथनान्तरं सा श्रीदत्ता, तमेवोपदेष्टारं व्रतिनं मुनिवरमभिनम्य प्रणम्य, सम्यक्त्वपुरस्सरम्, द्वादशभिः व्रतैः प्रपञ्चितं विस्तारितं वृषं श्रावकधर्मं प्रपद्य प्राप्य, नागरैः सममेव निजगृहं समागात् ॥२४२॥

सहर्षमेवं कतिभिर्दिनैर्गतैः, शुभेन तत्कर्म विपाकतोऽजनि ।
अयं विकल्पो जिनधर्मसम्भवं, फलं महद्यत्परिकीर्त्यतेऽतुलम् ॥२४३॥

एवमुक्तप्रकारेण व्रतिना शुभेन पुण्योदयेन सहर्षं सानन्दं कतिभिः दिनैः गतैः, व्यतीतेषु कियत्सु दिनेष्वित्यर्थः, तत्कर्मणो विपाकतः विपाकोदयात्मकः परिणामेन, तृतीयार्थे तसिः । अयं वक्ष्यमाणः "विकल्पस्वरूपमेवाह—यद् यस्माद् जिनधर्मसम्भवं फलं महत् अतुलमसाधारणञ्च परिकीर्त्यते विकल्पो विचारोऽजनि, तस्या इति अर्थाल्लभ्यते, तादृशशुभविकल्पोत्पत्तौ हेतुमाहपद्यतोः हेतोः, जिनधर्मसम्भवं फलं महत् अतुलमसाधारणञ्च परिकीर्त्यते, ततश्च जिनधर्मरक्तायास्तस्यास्तादृशविकल्पो योग्य एवेत्यर्थः ॥२४३॥

तस्या जातविकल्पमेवाह-

अमुत्र तत् किं मम भावि वा नवे-,ति वेदितुं कः क्षमते महामतिः ? ।
न वेद शङ्कादिकदोषपञ्चकम्, विनैव धर्मस्तनुतेऽभिवाञ्छितम् ॥२४४॥

अमुत्र परलोके तत्फलं मम किं भावि भविष्यति किं वा नेत्येवं वेदितुं ज्ञातुं को महामतिः क्षमते शक्नोति ? न कोऽपीत्यर्थः, वा अमुत्र परलोके, मम किं भावि न वा किमपि भावि इत्येवम्, यद्वा किं भावि, किंवा न भावि इत्येवमन्वयः, तदेतत्कः महामतिरपि वेदितुं क्षमते शक्नोति ? न कोऽपीत्यर्थः । शङ्कादिकं यद्दोषपञ्चकं तेन रहित एव, धर्मः अनुष्ठितो धर्मः अभिवाञ्छितमिष्टं तनुते करोति, इत्यपि न वेद जानाति कोऽपीति शेषः ॥२४४॥

परेद्यवि सत्ययशोऽभिधं यतिं, प्रणन्तुमेकाऽपि यती विहायसि ।
विमानमारूढममानमानभृत्, सुरूपविद्याधरयुग्ममैक्षत ॥२४५॥

परेद्यवि परस्मिन् दिवसे, सत्ययशोऽभिधं यतिं मुनिं प्रणन्तुम् एकापि अन्येन सह गन्तुरलाभाद् भक्त्यतिशयादेकाकिन्यपि यती गच्छन्ती श्रीदत्ता, विहायसि गगने, विमानम् आरूढम्, अमानमतुलं मानं बिभर्त्ति इति तत्तादृशम् असाधारणप्रभावं सुरूपयो. विद्याधरयोर्युग्मं द्वयमैक्षत ॥२४५॥

अथागता सा निजमप्युपाश्रयं, प्रशस्यतद्रूपविमोहिता सती ।
लसच्चिकित्साविचिकित्स्यदूषणं, गुरोरनालोच्य खलु व्यपद्यत ॥२४६॥

अथ विद्याधरद्वयदर्शनानन्तरं प्रशस्येनोत्कृष्टेन तयो रूपेण सौन्दर्येण विमोहिता प्राप्तरागा सती, उपाश्रयमागताऽपि, गुरोः पार्श्वे, लसन्त्योत्कृष्टया चिकित्सया प्रतिकारेण विचिकित्स्यं निवारणीयं तद्दूषणम् दोषम्, अनिष्टमनोभावमित्यर्थः अनालोच्य अनिवेद्य खलु व्यपद्यत मृता । यद्वा निजं लसच्चिकित्साविचिकित्स्यदूषणं विलसदुक्तदोषद्वयं अनालोच्य तत्प्रायश्चित्तमकृत्वैव खलु व्यपद्यत अम्रियत ॥२४६॥

**इतश्च जम्बूपपदान्तरीप–कान्तरस्थितप्राच्यविदेहमध्यगे ।**
**मनोरमे श्रीरमणीयवैजये, समस्ति वैताढ्यमहामहीधरः ॥२४७॥**

अथाङ्गभूतकथान्तरं प्रस्तौति, इतश्चेति । जम्बूपपदं यदन्तरीपकं जम्बूद्वीपं तस्यान्तरे मध्ये स्थितस्य प्राच्यविदेहस्य मध्यगे, मनोरमे श्रिया लक्ष्म्या रमणीये समृद्धे विजय एव वैजयस्तस्मिन् श्रीविजये, यद्वा श्रियायुक्तः रमणीयाख्यो विजय एव वैजयस्तस्मिन् रमणीयविजये इत्यर्थः। वैताढ्यनामा महान् महीधरः पर्वतः समस्ति वर्त्तते ॥२४७॥

**तदस्ति तस्मिञ्छिवमन्दिरं पुरं, प्रमोदलक्ष्मीघनकेलिमन्दिरम् ।**
**वसन्ति यस्मिन् परमर्थिनो जना,–न यैः कदाऽपि श्रितमत्र लाघवम् ॥२४८॥**

तत् प्रसिद्धे तस्मिन् प्रमोद आनन्दः लक्ष्मीश्च तयोः घना निविडा अतिशयशालिनी सातिशयं या केलिः क्रीडा तस्या मन्दिरमिव, आनन्दलक्ष्मीसम्पन्नं शिवमन्दिरं तदाख्यं पुरमस्ति, यस्मिन् पुरे परमत्यर्थम् , अर्थिनः धनिनः जना वसन्ति, यैर्जनैः अत्र नगरे लाघवं लघुता नीचवृत्तिः, कदाऽपि न श्रितम् आश्रितम् , सर्वे सद्वृत्तय इत्यर्थः ॥२४८॥

**बभूव तस्मिन् कनकार्च्यसंज्ञको, नरेश्वरः खेचरवर्गनायकः ।**
**यशांसि यस्योपजगुः सुरस्त्रियो, दरीषु मेरोर्जनितानि विक्रमैः ॥२४९॥**

यस्मिन् नगरे कनकार्च्यसंज्ञकः खेचर वर्गेषु विद्याधरवृन्देषु नायकः श्रेष्ठः नरेश्वरः राजा बभूव, विक्रमैः पराक्रमैः जनितानि कृतानि यस्य राज्ञः यशांसि मेरोः मेरुपर्वतस्य दरीषु गुहासु स्थिताः, सुरस्त्रिय उपजगुः स्तुवन्ति स्म, न केवलं पृथिव्यां, स्वर्गेऽपि तद्यशोमहिमेतिभावः ॥२४९॥

**स वायुवेगाप्रभवो भवद्विभुस्तदङ्गजः कीर्तिधरोऽहमाख्यया ।**
**अरिष्टदीपाः प्रहता यदोजसा, बभूवुरालेख्यकृताः इवोदये ॥२५०॥**

तदङ्गजः कनकार्च्यपुत्रः, वायुवेगायाः प्रभवो यस्य स तादृशः, आख्यया नाम्ना कीर्तिधरः सः भवता विभुः, भवन्तो यं विभुं मन्यन्ते सोऽहं तवोपदेष्टाऽस्मि, यस्य ओजसा तेजसा प्रहताः अभिभूताः अरिष्टदीपाः प्रसूतिगृहदीपाः, उदये जन्मनि उदयकाले जन्मकाले इव, आलेख्ये चित्रे कृता न्यस्ता इव निष्प्रतिभाः स्वरूपवन्तो बभूवुः ॥२५०॥

**प्रिया बभूवाऽनिलवेगिका मम, प्रदर्शयन्ती कुलयोषितां स्थितिम् ।**
**निशाविरामे स्वपती मनोहरं, निरैक्षत स्वप्नमतल्लिकात्रयम् ॥२५१॥**

मम अनिलवेगिका नाम्नी, कुलयोषितां कुलिनानां स्त्रीणाम् स्थितिं मर्यादां प्रदर्शयन्ती परिपालयन्ती प्रिया बभूव, सा निशाविरामे रात्र्यन्तयामे स्वपती निद्रायमाणा मनोहरम् मम, स्वप्नमतल्लिकानां स्वप्नश्रेष्ठानां त्रयम् शुभस्वप्नत्रयमित्यर्थः । निरैक्षत ॥२५१॥

ततः समुत्थाय फलानि बिभ्रती, सुपात्रयुक्ता व्रततीव पुष्पयुक् ।
समेत्य मां जल्पितकल्पपादपं, स्फुटं जगावार्यसुतावधार्यताम् ॥२५२॥

ततः स्वप्नावलोकनादनन्तरम्, समुत्थाय, शय्यातः इत्यर्थाल्लभ्यते, सुपात्रेण तण्डुलादिपूर्णपात्रेण युक्ता सती, पुष्पयुक् पुष्पिता व्रतती लतेव, फलानि नालिकेरादिफलानि बिभ्रती सती, जल्पिते कथिते पृष्टे वा कल्पपादपं तद्वत् उत्तरदानसमर्थम् मां कीर्तिधरं समुपेत्य स्फुटं स्पष्टं जगौ, किमित्याह-आर्यसुत ! अवधार्यताम् मद्वचनं सावधानं श्रूयताम् ॥२५२॥

अथ युग्मेन श्रवणक्रियाकर्माह-

व्यलोकयं निर्जरराजकुञ्जर, प्रभो ! प्रभो ! कुञ्जरमादितस्ततः ।
अनुत्तमं स्वप्नगता शरत्सुधा-करद्युतिव्रातसमद्युतिं वृषम् ॥२५३॥
पयोभिराकण्ठमनाविलैर्भृतं, सुमार्चितं पूर्णघटं शुभाश्रयम् ।
फलं यदेषां मम भावि साम्प्रतं, तदादिश त्वं श्रुतशास्त्रकोविद ! ॥२५४॥ युग्मम्

प्रभो ! स्वप्नगता सुप्ता, अहमर्थाल्लभ्यते । आदितः प्रथमम्, निर्जरराजस्य सुरेन्द्रस्य कुञ्जरप्रभम् ऐरावतसमानकान्तिम्, धवलं महान्तं च, कुञ्जरम् हस्तिनम्, ततस्तदनन्तरम्, शरदि यः सुधाकरश्चन्द्रः तस्य द्युतिव्रातेन कान्तिकुञ्जेन समा तुल्या द्युतिर्यस्य तं तादृशं चन्द्रकिरणधवलम्, न तूत्तमोयस्मात्तादृशमनुत्तमं वृषम्, वृषभम्, तथा अनाविलैः निर्मलैः पयोभिर्जलैः आकण्ठं कण्ठपर्यन्तम् भृतं पूर्णं सुमैरर्चितं समन्वितं शुभाश्रयं पूर्णघटं मङ्गलकलशं व्यलोकयम् । ननु तेन मम किमिति चेत्तत्राह-श्रुतशास्त्रकोविद ! आगमशास्त्रविचक्षण ! एतेन उत्तरदानयोग्यता सूचिता । एषां दृष्टस्वप्नानां मम यत्फलं भावि, त्वं साम्प्रतम् तत्फलमादिश कथय ।२५३॥२५४॥

तवार्द्धचक्री भविता तनूभव-स्त्रिखण्डमुर्वीवलयं स भोक्ष्यते ।
इति प्रहृष्टोऽहमवोचमात्मनः प्रियां प्रति प्रीतिविकाशिचक्षुषम् ॥२५५॥

प्रहृष्टः तच्छ्रवणाज्जात हर्षः अहं कीर्तिधरः आत्मनः स्वस्य, प्रीत्या विकाशिनी प्रफुल्ले चक्षुषी यस्याः सा तां तादृशीं प्रियां प्रति, तव अर्धचक्री तनूभव पुत्र भविता, स त्रिखण्डमूर्वीवलयं पृथिवीमण्डलं भोक्ष्यते इतीत्थमवोचम् ॥२५५॥

तदादि सा गर्भमधत्त भाविनी, प्रपूर्यमाणातिदुरापदोहदा ।
क्रमेण सा पुत्रमजीजनच्छची-जयन्तनामानमिवोरुतेजसा ॥२५६॥

तदादि तदारभ्य सा भाविनी निर्मलभावयुक्ता मत्प्रिया गर्भमधत्त, क्रमेण प्रपूर्यमाणमतिदुरापमन्यस्या अलभ्यं दोहदं गर्भप्रभावजातमनोरथं यस्याः सा तादृशी सती, सा मत्प्रिया, शचीन्द्राणी जयन्तनामानमिव, उरुतेजसा महता तेजसा सहितं पुत्रमजीजनत् सुषुवे ॥२५६॥

अधिष्ठितेऽस्मिन्नपि गर्भमञ्जसा, सुदुर्दमो यद्दमितो द्विषज्जनः ।
मया प्रसह्यैव ततोऽभिधां व्यधां, सुतस्य तुष्टो दमितारिरित्यहम् ॥२५७॥

अस्मिन् जातके गर्भे अधिष्ठिते आश्रितमात्रेऽपि यद्यतः, सुदुर्दमः अतिदुर्निग्रहः द्विषज्जनः प्रसह्य बलात् मया कर्त्रा दमितः निगृहीतः, ततो हेतोरेवाहं तुष्टः प्रसन्नः सुतस्य दमितारिरित्यभिधां नाम व्यधाम् कृतवान् ॥२५७॥

कलाकलापं सकलं समग्रहीत्, कुशाग्रबुद्धिः कुशली स लीलया ।
सुलोचनालोचनमीनजालकं, ततः परं यौवनमाससाद सः ॥२५८॥

स कुशली कल्याणगुणो दमितारिः, कुशस्य दर्भस्याग्रः अग्रभाग इव तीक्ष्णा बुद्धिर्यस्य स तादृशः सत्प्रतिभः, अतएव, लीलया अनायासेनैव मन्दबुद्धेः प्रयासाधिक्यमिति भावः, सकलं द्विसप्ततिः प्रकारम् , कलानां कलापम् समुदायं समग्रहीदधीतवान् ततोऽध्ययनात्परम् उत्तरतः, स दमितारिः एतेन बाल्ये एव कलाग्रह इति सूचितः, सुलोचनानां मृगाक्षीणां लोचनान्येव मीनाकृतित्वान्मीनाः तेषां पाशकं जालकं जालमिव, यौवनं तारुण्यमाससाद । स्त्रियो युवतन्त्रा इति भावः ॥२५८॥

अथाऽपरस्मिन् विजये परेद्यवि, जिनेशशान्तिः समवासरद्विभुः ।
तदंघ्रियुग्मं प्रणिपत्य देशनां, निशम्य वैराग्यतरङ्गितोऽभवम् ॥२५९॥

अथ परेद्यव्येकदा, अपरस्मिन् पश्चिमे विजये विभुः प्रभुः जिनेशः श्रीशान्तिः समवासरत् समवसरणं कृतवान् , तस्य जिनेशशान्तेः अङ्घ्रियुग्मं पादद्वन्द्वं प्रणिपत्य, देशनां जिनेशशान्तिप्रभुगिरं निशम्य श्रुत्वा, वैराग्येण तरङ्गितः आप्लावितोऽभवम् , अहं कीर्तिधर इति शेषः ॥२५९॥

ततः स्वराज्ये विनिवेश्य नन्दनं, व्रतं जगन्नन्दनमाददे स्वयम् ।
महाशया मोहमहारिपुक्षये, न संगिरन्ते परमन्यदायुधम् ॥२६०॥

ततः वैराग्योत्पत्तिहेतोः स्वराज्ये नन्दनं पुत्रं दमितारिं विनिवेश्याभिषिच्य, स्वयमात्मना जगन्नन्दनं जगदाह्लादकम् व्रतं पञ्चमहाव्रतमाददे गृहीतवान् । ननु किमिति व्रतमाददे इति चेत्तत्राह—महाशयाः ज्ञानिनः, मोहएव भवदुःखदायित्वान्महारिपुः तस्य क्षये नाशनिमित्तम् अन्यद्व्रतेतरमायुधमस्त्रं परमुत्कृष्टं न सङ्गिरन्ते समामनन्ति ॥२६०॥

क्रमाद्गिरावत्र च वार्षिकीमहं, दृढप्रतिज्ञः प्रतिमां समाश्रयम् ।
तवाग्रतः साम्प्रतमेव संविदं, समासदं विश्वविलोकनक्षमम् ॥२६१॥

क्रमाच्च अत्र गिरौ, अहं व्रती राजर्षिः, दृढप्रतिज्ञः सन् वार्षिकीं वर्षपरिमाणां प्रतिमां कायोत्सर्गं समाश्रयम् , तवानन्तवीर्यादेरग्रतः अग्रे साम्प्रतमेव विश्वविलोकनक्षमां जगत्साक्षात्कार-समर्थां संविदं केवलज्ञानं समासदं प्राप्तवान् ॥२६१॥

**विजित्य शक्त्या विजयार्धमण्डलं, समुल्लसच्चक्रतरः समिद्धया ।**
**ततो नरेन्द्रैर्दमितारिरुद्धतो, महारथः संप्रति केशवोऽभवत् ॥२६२॥**

समिद्धयोग्रया शक्त्या पराक्रमेण विजयार्धमण्डलं विजित्य वशीकृत्य समुल्लसच्चक्रतरः अत्युल्लासमानातिशयितोत्पन्नचक्रः ततो नरेन्द्रैस्सह महारथः शस्त्रविद्याकुशलो महायोद्धा समिद्धया प्रदीप्तया शक्त्या विजयार्द्धमण्डलं विजित्य उद्धतः निरङ्कुशाचारः सम्प्रति केशवः प्रतिविष्णुरभवत् ॥२६२॥

**तदीयदेवीदयितोदरेऽभवः, त्वमेव दत्तातनुमान् स्वपुण्यतः ।**
**सुता सुतारेक्षणपङ्कजा जगत्, त्रयीवधूजित् कनकश्रि ! सुश्रिया ॥२६३॥**

कनकश्रि ! स्वपुण्यतः त्वमेव, दत्ताश्री दत्ता तस्याः तनुमान् जीवः, तदीयदेव्याः दमितारिपट्टराज्ञाः दयितायाः प्रियायाः उदरे गर्भे सुश्रिया सातिशयसौन्दर्येण जगत्त्रयीवधूजित् , सुतारे शोभनकनीनिके ईक्षणे नेत्रे पङ्कजे इव यस्याः सा तादृशी सुलोचना सुता अभवः जाताऽसि ॥२६३॥

**यदप्यनालोच्य चिकित्स्यदूषणं, समासदद् मृत्युमहो ? भवत्यपि ।**
**पितुर्वधे तेन निमित्ततां गता, निजैस्तथा बन्धुजनैर्वियोजनम् ॥२६४॥**

यदपि यच्च चिकित्स्यं धर्मविचिकित्सादूषणं कुध्यानरूपमनालोच्य प्रायश्चित्तादिना अविशोध्यैव भवती मृत्युं समासदत् , तेन दोषेण पितुर्वधे निमित्ततां हेतुत्वम् , गता प्राप्ता, तथा निजैः बन्धुजनैः वियोजनं वियोगं, तातेति सम्बध्यते, अहो ! कृतस्य कर्मणः साक्षात्फलमेतदित्याश्चर्यमित्यर्थः ॥२६४॥

**शुभोपदेशामृतसङ्गतो मुने,-स्तया विनिर्वापितपापतापया ।**
**जनार्दनो व्यज्ञपि रामसंयुतः, समुद्भवत्संसृतिभीतिकम्पया ॥२६५॥**

मुनेः शुभोपदेश एवामृतं जलं तस्य सङ्गतः विनिर्वापितः शमितः पापकृतः तापः संतापः दुःखं यस्याः तया तादृश्या, कनकश्रिया, समुद्भवन् संसृतेः भवात्कार्ये कारणोपचाराद् भवजन्य यद्वा संसारस्य या भीतिर्भयं तज्जन्यः कम्पो यस्या स्तया तादृश्या दुःखाद्भीतेः भयात्कम्पो यस्याः तया तादृश्या सत्या अत एव रामेणापराजितेन संयुतः जनार्दनः सनन्तवीर्यः द्वावपि व्यज्ञपि निवेदितः ॥२६५॥

किं व्यञ्जयतीत्याह-

तनीयसो दूषणतो यदीदृशो, भवेऽपि पाको भविनामयं भवेत् ।
कृतं तदा दारुणदुःखकारणैः, सुखैरहो ! वैषयिकैर्विषोत्कटैः ॥२६६॥

भविनाम्, तनीयसोऽत्यल्पस्य दूषणतो दोषस्य पूर्वोक्तानालोचनात्मकस्य भवे यदि ईदृशः मुनिवर्णितः अयं मयाऽनुभूयमानः पाकः परिणामः भवेत् तदा तर्हि, अहो इति खेदे, विषादप्युत्कटैरुग्रै, यतः, दारुणस्य भयङ्करस्य दुःखस्य कारणैः वैषयिकैः लौकिकैः सुखैः कृतम् पर्याप्तम्, वस्तुगत्या दुःखरूपत्वेन हेयत्वात् अनिष्टं तदिति भावः २६६॥

ममाधुनैश्वर्यमदानुषङ्गतो, भवन्ति दोषा न पुरा कति ध्रुवम् ।
प्रसह्य दीक्षाप्रतिपत्तयेऽपि तन्न माऽनुजानीतमहो ! किमीश्वरौ ? ॥२६७॥

मम कनकश्रियाः अधुना, ऐश्वर्यमदस्यानुषङ्गतः प्रसङ्गेन, पुरा कति पूर्वापेक्षयाऽप्यधिकाः दोषाः पापानि न भवन्ति, ध्रुवं कति पुरा दोषा न भवन्ति न भविष्यन्ति इत्यर्थः । अपितु अवश्यं भवन्ति, ध्रुवम् नाम संशय इत्यर्थः । अहो ? ईश्वरौ स्वामिनौ युवाम्, तत्तो हेतोः प्रसह्यानुगृह्य मा माम् दीक्षायाः प्रतिपत्तये ग्रहणाय किं कुतो न अनुजानीतम् आज्ञापयथः, अवश्यमाज्ञातव्या इत्यर्थः ॥२६७॥

अवोचतां तां स्वयमेव तावपि प्रहृष्टचित्तावथ सीरिशार्ङ्गिणौ ।
विवेकसम्पत्तिजुषा विचक्षणे, निवेदितं युक्तमिदं वचस्त्वया ॥२६८॥

अथ तन्निवेदनानन्तरम्, तौ अपि प्रहृष्टचित्तौ सीरिशार्ङ्गिणौ अपराजितानन्तवीर्यौ स्वयमेव तां कनकश्रियमवोचताम्, तदुक्तिमेवाह—विचक्षणे ! त्वया, विवेकस्य सदसद्विचारस्य सम्पत्तिजुषा इदमुक्तं वचः युक्तमुचितं निवेदितम्, नहि विवेकी अयुक्तं निवेदयतीति भावः ॥२६८॥

ननु यदि युक्तं तर्हि कुतो विलम्ब इति चेत्तत्राह-

समं त्वया किन्तु शुभे ! शुभापुरीं, स्वराजधानीमधुना समाहितौ ।
प्रसाधयावस्तव निष्क्रमोत्सवं, यथा च नौ तत्र समृद्धिसूचितम् ॥२६९॥

शुभे ! किन्तु तव वचसो युक्तत्वेऽपि अधुना त्वया समं स्वराजधानीं शुभापुरीं समाहितौ दत्तचित्तौ सम्प्राप्तौ सन्तौ यथा च योग्यप्रकारेण नावावयोः समृद्धिसूचितं संपदनुगुणं तत्र शुभापुर्यां तव निष्क्रमोत्सवं दीक्षामहोत्सवं प्रसाधयावः प्रकुर्वः अतएव दत्तचित्तौ प्रसाधयावः गच्छावः, गमनप्रयोजनमाह—यथा येन च नावावयोः समृद्धिसूचितम् सम्पद्यनुगुणम् तत्र शुभापुर्यां तव निष्क्रमोत्सवं दीक्षामहोत्सवं प्रसाधयावः इत्यनुवर्त्य सम्पादयाव इत्यर्थः ॥२६९॥

भवच्छुभप्रेरणया समागत-, स्वयंप्रभार्हत्पदपद्मसन्निधौ ।
व्रतं महारत्नमिवैकदुःस्थया, त्वया ग्रहीतव्यमुपेततत्त्वया ॥२७०॥

समागतस्य प्राप्तस्य स्वयं प्रभाख्यस्यार्हतो जिनस्य पदपद्मयोः सन्निधौ, एकया दुःस्थया त्वया भवतः भाविनः शुभस्य प्रेरणया, उपेततत्त्वया ज्ञातपरमार्थया सत्या अत एव महारत्नमिव, यद्वा भवच्छुभप्रेरणया तव कल्याणकारि प्रेरणया समागतस्य समवसृतस्य स्वयं प्रभाख्यस्यार्हतो जिनस्य पादपद्मयोः सन्निधौ एकदुःस्थया असाधारणभवदुःखार्त्तया उपेततत्त्वया ज्ञातपरमार्थतत्त्वया त्वया महारत्नमिव व्रतं दीक्षा ग्रहीतव्यम्, न तत्र कोऽपि विघ्न इति भावः ॥२७०॥

मुनिप्रभुं तं प्रणिपत्य भक्तित-स्तया समं तौ समुपेयतुस्ततः ।
गुरूपरोधप्रतिपन्नवाक्यया, शुभापुरीमृद्धिसमृद्धनागराम् ॥२७१॥

ततः अनन्तरम्, भक्तितः मुनिप्रभुं मुनीशं तं कीर्तिधरं प्रणिपत्य प्रणम्य तौ अपराजितानन्तवीर्यौ गुरोरुपरोधेनाग्रहेण प्रतिपन्नं प्रतिज्ञातं वाक्यं दीक्षाग्रहणविषयं यया तया कनकश्रिया समम् ऋद्ध्या समृद्धाः नागरा यस्यां तादृशीम् शुभापुरीम् समुपेयतुराजग्मतुः ॥२७१॥

महौजसाऽहं दमितारिणा निजैर्महाभटैः प्राक् प्रहितैश्च तत्र सः ।
अनन्तसेनं स्वसुतं महाबलं-युधं प्रकुर्वन्तमवैक्षताच्युतः ॥२७२॥

तत्र शुभापुर्याम्, सोऽच्युतोऽनन्तवीर्यः महौजसा महापराक्रमिणा दमितारिणा निजैः प्राक् मृत्योः प्रागेव प्रहितैः प्रेषितैः महाभटैः सह महाबलं स्वसुतमनन्तसेनं युधं युद्धं प्रकुर्वन्तमवैक्षतापश्यत् ॥२७२॥

वृतं समालोक्य हरेस्तनूभवं, विरोधिभिस्तैरुरगैः सुपर्णवत् ।
हलायुधस्तान् गिरिराजसारभृद्धलं समुद्यम्य रुषाऽन्वधावत ॥२७३॥

हरेरनन्तवीर्यस्य तनूभवं पुत्रम्, तैः विरोधिभिः सुपर्णवद् गरुडवत्, उरगैः सर्पैः वृतं परिवेष्टितं समालोक्य, गिरिराजस्य हिमाचलस्य सारभृत् गिरिराजवद्बलवान् हलायुधोऽपराजितः रुषा क्रोधेन हलं समुद्यम्य समुत्थाप्य हननाय अन्वधावत प्रययौ ॥२७३॥

तमापतन्तं समवेक्ष्य ते भटा, दिशो दिशं जग्मुरपेतशक्तयः ।
अजातसङ्गं भयमेव बिभ्रतो, मृगाधिप मत्तमहामृगा इव ॥२७४॥

तमपराजितमापतन्तं वेगादागच्छन्तं समवेक्ष्य ते दमितारिप्रेषिताः भटाः, अपेता भयान्नष्टा शक्तिर्येषां ते तादृशाः निर्वीर्याः सन्तः दिशः दिशमेकदिशातो भयविह्वलतया अपरां दिशं जग्मुः

पलायामासुः अत्रोपमानमाह—अजातसङ्गमपरिचितम् मृगाधिपं सिंहं, समापतन्तं वीक्ष्य, भयमेव, नतु उत्साहमपि बिभ्रतः मत्ताः महामृगा गजा इव ॥२७४॥

शुभे दिने पौरनिबद्धतोरणां, शुभापुरीं प्राविशतां बलाच्युतौ ।
अनन्तवीर्य्यः पुनरर्धचक्रिता,-पदेऽभ्यषेचि प्रमदेन राजभिः ॥२७५॥

बलाऽच्युतावपराजिताऽनन्तवीर्यौ, शुभे दिने पौरेण निबद्धानि तोरणानि तोरणमाल्यादीनि स्वागतार्थं यस्यां तां तादृशीं शृङ्गारितां शुभापुरीं प्राविशताम् , पुन' अनन्तवीर्यः राजभिः सामन्तनृपैः प्रमदेन सहर्षमर्धचक्रितापदेऽभ्यषेचि ॥२७५॥

अथापरेद्युः समवासरद् जिनः, स्वयंप्रभस्तत्र पवित्रयन् जगत् ।
वनीपतिर्वेत्रीनिवेदितो जिना-गमेन भूमीपतिमप्यवर्धयत् ॥२७६॥

अथापरेद्युरेकदा, तत्र नगर्यामुद्याने स्वयंप्रभो जिनः समवासरत् , वनीपतिरुद्यानपालकोऽपि वेत्रिणा द्वारपालेन वनीपतिदर्शनमिच्छतीत्येवं निवेदितः नृपाय विज्ञापितः सन् तदाज्ञया नृपसमीपं प्राप्तः, भूमिपतिमनन्तवीर्यं जिनागमेन उक्ततीर्थंकरसमागमवृत्तान्तेनावर्धयद्वर्धयामास ॥२७६॥

बलानुजेन प्रमदेन तस्य च, प्रदापिता द्वादश रुक्मकोटयः ।
विशिष्य सार्द्धाः कियदेतदद्भुतप्रवृत्तवृत्तानुकृतां हि तादृशाम् ॥२७७॥

बलानुजेनानन्तवीर्येण, प्रमदेन तीर्थकृत्समागमवृत्तान्तश्रवणहर्षेण तस्य वनीपतेः विशिष्य सादरं सार्द्धाः द्वादश रुक्माणां सुवर्णानां कोटयः प्रदापिताः च वर्धापनक्रियासमुच्चायकः । तादृशामर्धचक्रिणाम् अद्भुतं यथा स्यात्तथा प्रवृत्तं जातं वृत्तं वृत्तान्तमनुकृतामनुकुर्वताम् हि यस्मात्, सताम् एतत् वनीपतेः सार्द्धद्वादशरुक्मकोटिदापनम् , कियत् ! कियन्मात्रम् ! अत्यल्पमित्यर्थः ॥२७७॥

मधुप्रियाभ्यामिव पुष्पसायको, विनेतुमिच्छुः कृतमन्तुमात्मनः ।
बलप्रियाभ्यां सहितो जनार्दनो, जिनं प्रणन्तुं समियाय तत्क्षणम् ॥२७८॥

मधुप्रियाभ्यां वसन्तरतिभ्यां पुष्पसायकः काम इव, बलप्रियाभ्यामपराजितकनकश्रीभ्यां सहितः समन्वितः जनार्दनोऽनन्तवीर्यः आत्मनः स्वस्य कृतं मन्तुं अपराधं विनेतुं दूरीकर्तुमिच्छुः सन् जिनं स्वयंप्रभमर्हन्तं प्रणन्तुं तत्क्षणम् समियाय ॥२७८॥

अविच्युतो भक्तिभरेण जातुचित्, प्रदक्षिणीकृत्य विभुं त्रिरच्युतः ।
प्रणम्य भूमावुपविश्य सस्पृहं, तदास्यचन्द्रामृतपुण्यमप्यपात् ॥२७९॥

वनीपकानामपरोपवर्तनात्, समागतानां ददतौ धनानि तौ ।
यथाऽभिलाषं विषयोपसेवनात्सुखेन कालं गमयाम्बभूवतुः ॥२८४॥

तावपराजितानन्तवीर्यौ, अपरस्मादन्यस्मादुपवर्त्तनाद्देशात्, समागतानां वनीपकानां याचकानाम् स्वदेशस्थानमभाव एवेति भावः । "वनीपको याचको मार्गणो याचकार्थिना" वित्यमरः । धनानि ददतौ, यथाभिलाषं यथेच्छं विषयस्योपसेवनादुपभोगात्सुखेन सुखपूर्वकम् कालं गमयाम्बभूवतुः व्यतीयतुः ॥२८४॥

बलस्य पुत्री विजयाङ्गसम्भवा, यथार्थनामा सुमतिः कृपापरा ।
शिशुत्वमारभ्य गुरुप्रसङ्गतो, बभूव जैनागमतत्त्ववेदिनी ॥२८५॥

बलस्य बलदेवराजितस्य विजयायाः तन्नाम्न्याः स्वप्रियाया अङ्गात्सम्भवो यस्याः सा तादृशी, यथार्थमन्वर्थम् नाम यस्याः सा तादृशी सुमतिः सुमतिनाम्नी च, यथार्थनामा इति पाठः प्रामादिकः, नान्तत्वेन स्त्रियामीकारान्तत्वदुर्वारत्वात् । कृपापरा दयावती शिशुत्वमारभ्य बाल्यादेव गुरोः साध्व्यादेः प्रसङ्गेन सम्पर्केण जैनागमतत्त्ववेदिनी जैनागमतत्त्वज्ञा बभूव ॥२८५॥

तया परेद्युर्विहितोपवासया, प्रसक्तया पारणकप्रवृत्तये ।
स्वमन्दिरद्वारमवेक्षमाणया, समाव्रजन् प्रैक्षि महातपोधनः ॥२८६॥

तया सुमत्या परेद्युरेकदा, विहितोपवासया कृतोपवासया सत्या अतएव पारणकप्रवृत्तये पारणाकरणाय प्रसक्तया आरब्धव्यापारया, यदृच्छातः, स्वमन्दिरद्वारं स्वगृहद्वारदिशि अवेक्षमाणया सत्या महातपोधनः समाव्रजन् समागच्छन् प्रैक्षि दृष्टः ॥२८६॥

प्रवर्धमानाधिकभक्तिभावया, तया विशुद्धाशनके विहारिते ।
सुपात्रदानप्रवरप्रभावतो, ऽत्र पञ्च दिव्यानि तदैव जज्ञिरे ॥२८७॥

तया सुमत्या, प्रवर्धमानः न तु क्षीयमाणस्तथास्थो वा अधिकः सातिशयः भक्तिभावः यस्यास्तादृश्या तया सुभक्तिमत्या विशुद्धाशनके निर्दोषान्नपानादिके विहारिते तस्मै मुनये प्रतिलाभिते सति अत्र अस्मिन् स्थाने सुपात्रे दानस्य प्रवरप्रभावत स्तदैव दानसमय एव पञ्चदिव्यानि वसुधारादीनि जज्ञिरे जातानि ॥२८७॥

मुनिप्रभौ वायुवदप्रतिश्रये, गते ततोऽन्यत्र तदद्भुतश्रुतेः ।
बलाच्युतौ तत्र समागतौ च तां, विलोक्यवर्य्यां वरचिन्तयाऽऽश्रितौ ॥२८८॥

वायुवत् अप्रतिश्रये एकत्र चिरमनवस्थातरि मुनिप्रभौ तस्मिन् महामुनौ ततः तत्स्थानात् अन्यत्र गते सति तस्य पञ्चविधस्याद्भुतस्य दिव्यस्य वसुधारादेः श्रुतेः श्रवणात् तत्र सुमतिसमीपे

बलाच्युतावपराजिताऽनन्तवीर्यौ समागतौ सन्तौ तां वर्याम् वरणयोग्याम् कन्यां सुमतिम् विलोक्य वरस्य चिन्तया कोऽस्य वरो भविता इति विवाहयोग्येय जातेत्येवं वा विचारेणाश्रितौ ध्यातौ जातौ ॥२८८॥

आनन्दोत्तममन्त्रिमन्त्रपरया शक्त्या समं सीरिणा,
निर्णीय प्रथमं स्वयंवरविधिं तस्या वरार्थे परम्।
आहूता हरिणा स्वयंवरमहे विद्याधरा भूचरा,
अप्येता विजयार्धतोऽत्र बहवो दूतप्रवृत्त्या नृपाः ॥२८९॥

प्रथमं प्राक्, सीरिणाऽपराजितेन समं तस्याः सुमत्याः वरार्थे वरप्राप्तिनिमित्तम् आनन्दाख्यस्योत्तमस्य मन्त्रिणः मन्त्रपरया विचारानुकूलया शक्त्या परमुत्कृष्टं स्वयम्बरविधिं निर्णीय, मन्त्रिविचारानुसारेण शक्त्याऽनल्पद्रव्यव्ययेन स्वयम्बरविधिर्विधेय इत्येवं सीरिणा समं पूर्वं निश्चित्येत्यर्थः। हरिणाऽनन्तवीर्येण स्वयंवरमहे दूतप्रवृत्त्या दूतप्रेषणेन विद्याधराः खेचराः भूचराः अपि पृथिवीस्था अपि आहूताः आगमनाय निमन्त्रिताः बहवो नृपाः अत्र शुभापुर्यां विजयार्धतः एता आयाताः ॥२८९॥

वास्तुग्रन्थविचारचारिमचणा वैकुण्ठनिर्देशत-,
श्चक्रुर्मण्डपमुत्तमैश्च मणिभिर्ध्वान्तौघविध्वंसितम्।
उच्चैर्मञ्चसमुच्चयं च रुचिरं तत्रापि यत्राऽलयो-,
वासः कृत्रिमपुष्पगन्धभरतः कोलाहलं लम्भिताः ॥२९०॥

वैकुण्ठस्यानन्तवीर्यस्य निर्देशतः, वास्तुग्रन्थस्य वास्तुशास्त्रस्य विचारे या चारिमा पटुता तया प्रसिद्धाः वास्तुशिल्पिनः, उत्तमैः मणिभिः मणिप्रकाशेनेत्यर्थः। अतएव ध्वान्तौघस्य गाढतमसोऽपि विध्वंसिनं मणिप्रकाशेन विध्वंसिनम् मण्डपम्, तत्र मण्डपेऽपि च रुचिरं मनोहरमुच्चैः मञ्चसमुच्चयं मञ्चश्रेणिञ्च चक्रुः, यत्र मण्डपे मञ्चसमुच्चये वा अलयः भ्रमरा वाससो वस्त्रस्य वस्त्रेण निर्मितस्य कृत्रिमपुष्पस्य गन्धस्य भरतोऽतिशयेन, कोलाहलं तुमुलगुञ्जनं लम्भिताः कारिताः अलिकुलगुञ्जितकृत्रिमपुष्पशृङ्गारितं मंडपमिति भावः ॥२९०॥

तस्मिन्मेरुमहीध्रशृङ्गजयकृत्सिंहासनानि व्यधु-,
र्जात्याष्टापदभंगभंगिभिरलं रत्नैर्विचित्रैरपि।
आरूढा अपि येषु राजतनयाः सिंहा इव स्वौजसाऽ-,
नल्पाऽऽकल्पविभूषिताः सुरतरुच्छायां समाचक्रमुः ॥२९१॥

तस्मिन् स्वयम्वरमण्डपे, जात्यानामुत्तमानामष्टापदभङ्गानां स्वर्णखण्डानां भङ्गिभी रचनाभिः विचित्रैर्नानाविधै रत्नैरपि मेरुमहीध्रशृङ्गस्य मेरुपर्वतशिखरस्य जयन्ति कृतौ औन्नत्येनाधःकारकाणि सिंहासनानि अलं व्यधुः अलमकार्षुः, येषु सिंहासनेषु आरूढाः अधिष्ठिता, अनल्पा बहुवो ये आकल्पा वेशरचनाः "आकल्प वेत्रौ (शौ) नेपथ्यं" इत्यमरः। तैः विभूषिताः तथा स्वौजसा स्वतेजसा विक्रमेण वा सिंहा इव सिंहसदृशाः, राजतनयाः राजपुत्राः, सुरतरोः कल्पद्रुमस्य छायां श्रियं समाचक्रमुः समाक्रान्तवन्तः, मेरौ कल्पद्रुमा इव सिंहासनेषु राजपुत्राः शोभन्ते इत्यर्थः, अत्र सुरतरुच्छाया समाक्रान्तेत्युक्तेरुपमेयस्य उपमानादाधिक्यवर्णनाद् व्यतिरेकाऽलङ्कारः ॥२९१॥

अथ सुमत्याः स्वयंवरमण्डपागमनमाह--

श्री श्रीखण्डविलेपना विरचितस्नाना मनोहारिणी,
दिव्याऽऽकल्पधरा सितं च सदृशं संव्यानमाबिभ्रती।
स्वे पाणौ वरमालिकां निदधती बाहुं दधाना प्रती-,
हार्या बाहुतले स्म मण्डयति सा तं मण्डपं कन्यका ॥२९२॥

विरचितस्नाना कृतस्नाना, तथा श्री श्रीखण्डविलेपना श्रीखण्डचन्दनाऽनुलिप्ता दिव्यस्यानन्यसाधारणस्य आकल्पस्य वेषरचनायाः धराधारिणी, सितं श्वेतं सदृशं सुवर्णादि सूत्रकृतरचनाविशेषवत् संव्यानमुत्तरीयं च आबिभ्रती "संव्यानमुत्तरीयञ्च" इत्यमरः। पाणौ वरमालिकां निदधती कुर्वाणा, प्रतीहार्याः वेत्रधारिण्याः बाहुतले बाहौ बाहुं निजभुजं दधाना कुर्वती, तया दत्तहस्तावलम्बेति यावत्, मनोहारिणी सा कन्याका सुमतिः मण्डपं स्वयं मण्डपं मण्डयति स्म सम्प्राप्तेत्यर्थः ॥२९२॥

वक्त्राक्षिक्रमपाणिमुख्यकमलैर्बिम्बोष्ठबन्धूकक-,
व्यामिश्रैरपरांगचम्पकदलैर्नित्योल्लसत्सौरभैः।
मूर्तां तां वरमालिकामिव समालोक्य प्रहृष्टाशया,
चेष्टाऽनेकविधा व्यधुर्नृपसुताः पञ्चेषुविद्धा इव ॥२९३॥

नृपसुताः स्वयम्वरस्था राजपुत्राः, तस्याः सुमत्याः वक्त्रं मुखम् अक्षिणी नेत्रे क्रमौ चरणौ पाणौ करद्वयमेव मुख्यानि प्रधानानि कमलादप्यधिकशोभत्वात्कमलानि तैः, बिम्बमिव रक्तौ यावोष्ठौ तावेव बन्धूकके तदाख्यरक्तपुष्पे ताभ्यां व्यामिश्रैः सहितैः "रक्तकस्तु बन्धुकः", इत्यमरः नित्यमुल्लसन्ति उद्गच्छन्ति सौरभाणि आमोदानि येभ्यस्तानि तादृशानि तैः, एतेन पद्मिनीत्वं सूचितम्, पद्मिन्या अङ्गतः गन्धोद्गमात्। अपराणि अङ्गानि एव चम्पकपुष्पदलगौरत्वाच्चम्पकदलानि तैः, वरमालिका मूर्ता मूर्तिमतीमेव तां सुमतिम् समालोक्य प्रहृष्टाशयाः

प्रसन्नमनसः सन्तः, पञ्चेषुणा कामेन विद्धा इव कामज्वरपीडिता इव अनेकविधाः स्वं प्रत्याकर्षणाय नानाविधाश्चेष्टाः व्यधुश्चक्रुः, सर्वे एव तां कामयन्ते स्म इत्यर्थः। अत्र रूपकानुप्राणितोत्प्रेक्षाऽलङ्कारः ॥२९३॥

अस्मिन्नन्तर एव भास्वरमणिव्रातद्युतिद्योतिता—,
शेषाऽऽशं मणिसिंहविष्टरसमासीनामरीराजितम् ।
भास्वद्भास्करमण्डलच्छविपरिभ्राजिष्णु तन्मण्डपा—,
ऽन्तः स्थास्न्वेव कुतोऽप्युपागमदरं व्योम्ना विमानं महत् ॥२९४॥

अस्मिन्नन्तरे अवसर एव कुतोऽपि अज्ञातस्थानात् भास्वरस्य प्रकाशमानस्य मणीनां व्रातस्य समूहस्य द्युतिभिः कान्तिभिर्द्योतिताः प्रकाशिताः अशेषाः समस्ता आशा दिशः येन तादृशं मणिकिरणैः सर्वदिक् प्रकाशकम्, भास्वती प्रभावती या भास्करमण्डलस्य सूर्यबिम्बस्य छविः कान्तिः सेव परिभ्राजिष्णु दीप्यमानम्, मणेः मणिनिर्मिते सिंहे तद्रूपे तदाकारे विष्टरे आसने समासीनाभिरुपविष्टाभिरमरीभिर्देवीभी राजितम् शोभितम् महद् विमानं तन्मण्डपस्य स्वयम्वरमण्डपस्यान्त' स्थास्नु अवतरणशीलमेव व्योम्ना आकाशमार्गेणारं शीघ्रमुपागमत् ॥२९४॥

देव्युत्तीर्य तदग्रतस्तत इयं संश्रित्य सिंहासनं,
नेपथ्यप्रभयैव मण्डपमलं विद्योतयन्ती ततः ।
पाणिं दक्षिणमुत्थितं विदधती प्रोवाच तां कन्यकां,
स्मृत्वा पूर्वभवं धनश्र्यभिधया बुध्यस्व मा मा मुहः ॥२९५॥

ततः विमानागमनानन्तम्, इयं विमानस्था मुख्या देवी तदग्रतः मण्डपाग्रतः ततः विमानादुत्तीर्य सिंहासनं संश्रित्याधिष्ठाय, नेपथ्यस्य स्ववेषस्य प्रभया कान्त्या एव मण्डपं स्वयम्वरमण्डपम् अलमत्यर्थं विद्योतयन्ती प्रकाशयन्ती दक्षिणं पाणिमुत्थितं विदधती कुर्वती, दक्षिणं पाणिमुत्थायेति यावत्, तां कन्यकां सुमतिं प्रति प्रोवाच, किमित्याह पूर्वभवं स्मृत्वा धनश्री इत्यभिधया नाम्ना मा मां बुध्यस्वोपलक्षय, मा मुहः केयमित्यपरिचयं मा गा इत्यर्थ' ॥२९५॥

द्वीपे पुष्करनाम्नि पूर्वभरते मध्येऽस्ति खण्डे पुरं,
यच्छ्रीनन्दनसंज्ञयाश्रुतमभून्नो मारनाम्नाऽपरम् ।
भूमीन्द्रोऽपि महेन्द्र इत्यभिधया तस्मिन् महेन्द्रः श्रिया,
जिष्णुर्यः शतमन्युतामरिजनेऽप्याविश्चकारैव ना ॥२९६॥

पुष्करनाम्नि द्वीपे पुष्करार्द्धवरद्वीपे पूर्वभरते मध्ये खण्डे पुरं नगरमस्ति, यन्नगरम् श्रीनन्दन-संज्ञया श्रुतं ख्यातमभूत्, नो न च, मारस्य कामस्य नाम्ना, श्रियानन्दनः पुत्रः काम इत्येवं मारनाम्ना न ख्यातम् तत्र धनिनो जना न तु कामिन इति भावः। अपरमन्यच्च, तस्मिन् श्रीनन्दनपुरे भूमीन्द्रः अपि पृथ्वीपतिः सन्नपि महेन्द्रः शक्र इति विरोधः, महान् राजा इति चाविरोधः, तथा महेन्द्र-दूत्यभिधया नाम्ना महेन्द्रः, न तु देवेन्द्रत्वान्महेन्द्र इत्यविरोधः। श्रिया लक्ष्म्या जिष्णुरिन्द्रतुल्यः यो ना पुरुषः महेन्द्रनृप एव अरिजने शत्रुवर्गेऽपि शतमन्युतां शतकोपत्वम् इन्द्रत्वञ्च आविश्चकार प्राख्यापयत्, शत्रुवर्गस्य निग्रहेण स्वस्य तदिन्द्रत्वम् साधितवानिति यावत् ॥२९६॥

तस्याऽनन्तमतिः प्रिया समभवद्रूपामरी सान्वया,
देवैरप्यतिदुर्लभा समुदयत्सौभाग्यभङ्गी स्थितिः ।
एतस्यास्तनये उभे अभवतां स्वप्नोपलम्भोल्लस—,
त्पुष्पस्रग्युगसूचिते च कनकश्रीः श्रीधनश्रीरपि ॥२९७॥

तस्य महेन्द्रनृपस्य देवैः सुलभविशिष्टपदार्थैरपि अति दुर्लभा, रूपैः सौन्दर्यैः कृत्वा अमरी देवीतुल्या समुदयन्ती वर्धमाना सौभाग्यभङ्ग्याः सौभाग्यविशेषस्य स्थितिर्यस्याः सा ता-दृशी अखण्डसौभाग्यवती अनन्तमतिरिति नाम्नी अन्वयेन अनन्ता अपरिमिता मतिर्यस्या इति रूपेण सहिता सान्वया मतिमती प्रिया समभवत्, एतस्या अनन्तमतेः स्वप्ने उपलम्भो यस्यै—वम्भूतेनोल्लसता यद्वा उपलम्भेन दर्शनेन उल्लसता शोभमानेन पुष्पस्रग् युगेन माल्यद्वयेन सूचिता कनकश्रीः श्रीधनश्रीरपि च तत्तन्नाम्नी उभये तनये पुत्र्यावभवताम् ॥२९७॥

ते बाल्येऽपि कलाकलापकलिते क्रीडां विचित्रां मिथः,
कुर्वत्यौ प्रियतारसह्रदसमे तारुण्यमासेदतुः ।
अन्येद्युर्गिरिपर्वते गिरिमिमे स्वेच्छाविहारोद्यते,
वृक्षाणां कुसुमावचायरचनाव्यग्रे उभे जग्मतुः ॥२९८॥

बाल्येऽपि कलाकलापकलिते कलावत्यौ मिथः विचित्रां क्रीडां कुर्वत्यौ, प्रियतारसस्य प्रेमजलस्य ह्रदसमे महातडागसदृशे ते द्वे भगिन्यौ क्रमात्, तारुण्यमासेदतुः। अन्येद्युरेकदा स्वेच्छया विहारे क्रीडादावुद्यते प्रवृत्ते वृक्षाणां कुसुमानामवचायरचनायां चयनक्रियायां व्यग्रे-लीने सत्यौ उभे इमे कनकश्रीधनश्रियौ गिरिपर्वतं तन्नामानं गिरिं जग्मतुः ॥२९८॥

वल्ल्यौ जङ्गमतां गते इव सुमैस्ते पर्यटन्त्यौ चिरा—,
दद्राष्टां क्वचनाऽपि नन्दनमुनिं पुण्यश्रिया नन्दनम् ।

हर्षात्तस्य पदारविन्दयुगलं नत्वा निविष्टे पुरो,
योग्ये इत्यवगम्यते मुनिरपि व्याचष्ट धर्मं तयोः ॥२९९॥

जङ्गमतां गतिशीलतां गते वल्ल्यौ लते इव चिरात् सुमैः कुसुमैः सह पर्यन्टल्यौ भ्रमन्त्यौ ते द्वे कन्ये पुण्यश्रिया भाग्यसम्पदा नन्दनमानन्दप्रदम्, यद्वा पुण्यश्रियाः पुण्यलक्ष्म्याः नन्दनम् पुत्रमिव पुण्यमूर्त्तिमित्यर्थः, श्रीनन्दनाख्यं मुनिम् क्वचनाऽप्यद्राष्टाम्। हर्षात्तस्य मुनेः पदारविन्द-युगलं नत्वा पुरः मुनेरग्रे निविष्टे उपविष्टे, मुनिरपि ते द्वे योग्ये इत्यवगम्य बुध्वा तयोः ते निमि-त्तीकृत्य धर्मं व्याचष्ट-व्याख्यातवान् ॥२९९॥

सिद्धिप्रापणदर्शनप्रतिभुवं ते श्राद्धधर्मं ततः,
स्वीकृत्य स्वनिकेतनं बत गते तं पालयामासतुः।
क्रीडाभूधरदीर्घिकापरिवहत्कूलंकषा संकुलां,
नानाशालयुतामशोकवनिकां ते जग्मतुश्चान्यदा ॥३००॥

सिद्धेर्मोक्षस्य आपणे दर्शनम् सम्यग्दर्शनमिव प्रतिभुवं लग्नकम् "प्रतिभूर्लग्नक" इत्य-भिधानात्, सिद्धेर्मोक्षस्य प्रापणं प्राप्तिनिमित्तं सम्यग्दर्शनं प्रतिभुवं मूलं यस्य तादृशं सम्यग्दर्शनं तत्प्रतिभुवं तत्सम्बद्धं श्राद्धधर्मं स्वीकृत्य ततः मुनेः पार्श्वात् स्वनिकेतनम् स्वगृहमागते ते द्वे भगिन्यौ तं श्राद्धधर्मं पालयामासतुः, बतेति हर्षे अन्यदा च ते द्वे, क्रीडाभूधरेण क्रीडार्थनिर्मित-पर्वतेन दीर्घिकया वाप्या परिवहत्कूलङ्कषया स्रवन्नद्या च सङ्कुलां व्याप्ताम् नानाशालैः वृक्षैर्युताम् अशोकवनिकां जग्मतुः ॥३००॥

क्रीडन्त्यौ समवेक्ष्य तत्र सुभगे वीराङ्कविद्याधरः,
क्षोभात् स त्रिपुराधिपः सरभसं हर्षादहार्षीदिमे।
वज्रश्यामलिकाकलत्रवचनैश्चेतोऽवसादप्रदैः,
पद्मिन्याविव ते क्षणेन मुमुचे व्योम्नः सुरानेकपः ॥३०१॥

वीराङ्कनामा विद्याधरः तत्राशोकवनिकायाम् क्रीडन्त्यौ इमे द्वे कन्यके समवेक्ष्य हर्षात् (सुभगे सुन्दर्यौ) सरभसमहार्षीत्, चेतोऽवसादप्रदैः मनःपीडाजनकैः वज्रश्यामलिकाख्यस्व-कलत्रस्य भार्यायाः वचनैः कृत्वा क्षोभात् क्षोभं प्राप्य स त्रिपुरस्य तदाख्यपुरस्याधिपः वीराङ्कवि-द्याधरः सुरानेकपः ऐरावतः पद्मिन्याविव क्षणेन सद्य एव ते द्वे कन्ये व्योम्नो गगनान्मुमुचे त्यक्ते इति ॥३०१॥

त्रस्ते तेन च ते मृगाधिपतिना बाले कुरङ्ग्याविव,
त्यक्ते द्राक् पततः स्म दुर्गपदवो स्रोतस्विनीरोधसि।

जाल्यां वंशवनस्य सान्द्रविटपव्यालीढतारातती,
दैवे वा प्रतिकूलतां कलयति क स्याच्छुभं प्राणिनाम् ? ॥३०२॥

तेन विद्याधरेण त्यक्ते अधोमुक्ते च, मृगाधिपतिना सिंहेन त्रस्ते भीते कुरङ्ग्यौ हरिण्याविव हरिणीतुल्ये ते द्वे बाल्ये कनकश्रीधनश्रियौ सान्द्रैः निरन्तरैः विटपैः शाखाभिः वृक्षैश्च व्यालीढा व्याप्ता तारा अत्युच्चा आततिः श्रेणी यस्याः सा तस्याम् दुर्गपदवी दुर्गमार्गा या स्रोतस्विनी नदी तस्या रोधसि तटे वंशवनस्य जाल्यां जालतुल्यसमूहे द्राक् तत्कालं पततः स्म, ननु किमिति तयोरनर्थपरम्परैव ? तत्राह-वा यतः, दैवे भाग्ये प्रतिकूलतां कलयति वामे सति प्राणिनां क शुभं स्यात् ? न कापीत्यर्थः । भाग्यमचिन्त्यफलमिति यावत् ॥३०२॥

बुद्ध्वाऽनिर्गमनं स्वकीयमथ ते तस्या विबुद्ध्या स्फुर-,
द्धर्मध्यानपरायणे अनशनं कृत्वा विपन्ने उभे ।
ज्येष्ठाऽभूवमहं ततोऽग्रमहिषी शक्रस्य दृश्यप्रभा-,
जालैर्ध्वान्तविभेदिका नवमिका नाम्ना प्रसिद्धाऽधिकम् ॥३०३

अथ वंशजालपातनानन्तरं ते द्वे कन्ये स्वकीयम् तस्या जाल्याः अनिर्गमनं ततो निर्गमनाशक्यत्वं बुद्ध्वा पर्यालोच्य विबुद्ध्या तेन ज्ञानेन हेतुना स्फुरद्धर्मस्य ध्याने परायणे संसक्तचित्ते सत्यौ ते उभे कन्ये अनशनं कृत्वा विपन्ने मृते, ततोऽनन्तरम्, ज्येष्ठा अहम् शक्रस्येन्द्रस्य, दृश्या प्रभाजालैः प्रत्यक्षकिरणसमूहैः ध्वान्तस्य तमसः विभेदिका नाशसमर्था नवमिकेति नाम्ना अधिकं प्रसिद्धा अग्रमहिषी पट्टराज्ञी अभवम् ॥३०३॥

जीवस्त्वं तु धनश्रियोऽग्रमहिषी जाताऽपि यक्षेशितु-,
श्च्युत्वा रामतनूभवा सम्भवः पुण्यप्रभावाद्भुता ।
आवाभ्यां तदियं व्यधीयत मिथः सङ्केतकेली पुरा,
या पूर्वं च्यवते च साऽऽर्हतवृषं बोध्याऽन्यया वस्तुतः ॥३०४॥

धनश्रियः कनिष्ठायाः जीवः त्वं सुमतिस्तु यक्षेशितुः कुबेरस्य अग्रमहिषी जाताऽपि च्युत्वा पुण्यप्रभावेण अद्भुता दिव्या रामस्यापराजितस्य तनूभवा पुत्री सम्भवः जाता, तत्, आवाभ्यां द्वाभ्याम् पुरा पूर्वभवे मिथः परस्परम्, इयं संकेतकेली सङ्केतग्रहः व्यधीयत कृता, का सा इत्याह-या पूर्वं च्यवते सा च अन्यया अच्युतया वस्तुतः यथार्थम् आर्हतवृषं जैनधर्मं बोध्योपदेश्या ॥३०४॥

तत्त्वां बोधयितुं समागममहं प्रेम्णा स्वसा ते स्वयं,
कस्माद्विस्मृतमेतकत्तव जडे ! दुःस्वप्नवत् सर्वथा ।
दुष्प्रापं समवाप्य मानुषभवं प्रार्थ्यं सुराणामपि,
प्रव्रज्यां प्रतिपद्यसे किमिति नो दुष्कर्मविच्छित्तये ॥३०५॥

तत्पूर्वकृतप्रतिज्ञाहेतोः, ते तव सा भगिनी अहम् नवमिका प्राक्तनकनकश्रीः, प्रेम्णा भगिन्याः प्रीत्या त्वां सुमतिं प्राक्तनधनश्रियं बोधयितुम्, स्वयम् समागमम् समागताऽस्मि, जडे ! विषयव्यासङ्गात् मन्दमते ! तव एतकत्पूर्वभवोदन्तः दुःस्वप्नवत् सर्वथा सामस्त्येन कस्मात्कुतो हेतोः विस्मृतम् ? न विस्मर्तव्यमेतदित्यर्थः । ननु तत्स्मृत्वा किं कर्त्तव्यमिति चेत्तत्राह– सुराणामपि प्रार्थ्यं काम्यं किन्तु दुष्प्रापं प्राप्तुमशक्यं मानुषभवं समवाप्य दुष्कर्मणां विच्छित्तये विनाशाय प्रव्रज्यां दीक्षां किमिति कुतो हेतोः नो न प्रतिपद्यसे स्वीकरोषि ? मानुष्यजन्म सम्प्राप्य दीक्षा दुष्कर्मनाशायावश्यं ग्राह्येत्यर्थः ॥३०५॥

इत्येतत्प्रणिगद्य शक्रमहिषी सा स्वं जगामालयं,
प्राग्जन्मस्मृतिमाप साऽपि सुमतिस्तच्चिन्तयन्ती भृशम् ।
चारित्रप्रतिपत्तयेऽथ खलु तानापृच्छते स्माखिलान्,
संयोज्य स्वकरौ स्वयंवरसमायातान् नृपान् खेचरान् ॥३०६॥

सा दिवः समायाता शक्रमहिषी इन्द्राणी इत्येतत्पूर्वोक्तं प्रणिगद्योक्त्वा स्वमालयं स्थानं जगाम, सा स्वयम्वरोद्यता सुमतिरपि प्राग्जन्मस्मृतिं पूर्वभवस्मरणमाप प्राप, अथ तत्पूर्वभव-वृत्तान्तं भृशं चिन्तयन्ती खलु, चारित्रप्रतिपत्तये दीक्षाग्रहणाय स्वकरौ संयोज्य साञ्जलिबन्धम विनयादनुनयार्थञ्चेति भावः । स्वयंवरे समायातान् तानुपस्थितानखिलान् खेचरान् नृपान् विद्याधरेन्द्रान् नरेन्द्रांश्च आपृच्छते स्म अनुज्ञां ययाचे ॥३०६॥

एत्य प्राग्भवहार्दतो धनपतेरग्र्याप्रियास्तां प्रियाः,
शक्रस्याऽपि परप्रमोदकलिता आनर्चुर्ऋद्ध्या समम् ।
कन्या सप्तशतीवृताऽऽदितहितं श्रीसुव्रताऽऽर्यापदो,
पान्ते सा कृतनिष्क्रमोत्सवभरा ताभ्यां पितृभ्यां व्रतम् ॥३०७॥

ताम् सुमतिम् धनपतेः कुबेरस्य अग्र्यप्रियाः मुख्याः स्त्रियः, शक्रस्यापि प्रियाः, ऋद्ध्या समधिकसम्पदा सममेत्यागत्य परमेण प्रमोदेन कलिताः समन्विताः सत्यः आनर्चुः पूजयामासुः। ताभ्यां पितृभ्यामपराजितानन्तवीर्याभ्याम् कृतः निष्क्रमस्य दीक्षा ग्रहणस्योत्सवस्य भरोऽतिशयः यस्याः सा तादृशी कन्यानां सप्तशत्या वृत्ता समन्विता सा सुमतिः श्री सुव्रताख्याया आर्यायाः

साध्व्या पदयोरुपान्ते समीपे हितम् मोक्षकरणत्वादिष्टं व्रतं पञ्चमहाव्रतम् आदित स्वीकृतवती, "अजितप्रभसूरिरचितशान्तिनाथचरित्रे पञ्चकन्याशतैस्सार्द्धं प्रतिपद्याऽनगारतामित्युक्तम् ॥३०७॥

अल्पैरेव दिनैः समग्रमसमं जीतं समभ्यस्य सा,
दुर्वारान्तरवैरिवारमजयत् साध्वी तपःखड्गभृत् ।
बिभ्राणा त्वहिते हिते च समतां कर्मक्षये केवल-,
ज्ञानं प्राप्य महोदयं पदमलंचक्रे च शक्रेडिता ॥३०८॥

अल्पैरेव दिनैः समग्रम् असममनुपमम् जीतं आचारम् समभ्यस्याधीत्य, साध्वी सा सुमतिः, तपः एव कर्मभेदकत्वात्खड्गमिव तं बिभर्तीति सा तादृशी सती दुर्वाराणां दुर्जयानामान्तराणां वैरिणाम् कामक्रोधादीनां वारं समूहमजयत्, तु पुनः अहिते कृतापराधेऽनिष्टेऽहिते इष्टे च समतां रागद्वेषादिरहितचित्तवृत्तिं बिभ्राणा धारयन्ती सती कर्मक्षये सति केवलज्ञानं प्राप्य शक्रेण ईडिता स्तुता महोदयं महाभ्युदयजनकं पदं मोक्षपदमलञ्चक्रे च ॥३०८॥

अन्योन्यं प्रियतागभीरसरसीवैसारिणश्रीस्पृशौ,
सम्यग्दर्शनहारहारिहृदयौ लीलाविहारोद्यतौ ।
तौ नीलाम्बरपीतपीतवसनौ प्राक्पुण्यमाहात्म्यतः,
प्राज्यं राज्यमखण्डशासनमनुच्छिन्नस्थिती चक्रतुः ॥३०९॥

अन्योन्यं परस्परम्, प्रियता प्रेमैव गभीरा सरसी "सरसी सरः" इत्यमरः सरः, तत्र वैसारिणयोर्मीनयोः "मत्स्यो मीनो वैसारिणः" इत्यमरः । श्रियं स्पृशतः इति तौ तादृशश्रीस्पृशौ स्नेहसरोमीनतुल्यौ सम्यग्दर्शनरूपेण हारेण माल्येन हारिणी मनोहरे हृदये ययोस्तादृशौ तत्त्वश्रद्धावन्तौ, लीलया विहारे विलासे उद्यतौ कृतारम्भौ तौ नीलाम्बरपीतपीतवसनौ अपराजितानन्तवीर्यौ प्राक्पुण्यस्य माहात्म्यतः प्रभावात् अनुच्छिन्नाऽनुपद्रुता स्थितिर्ययोस्तौ तादृशौ निरबाधौ सन्तौ प्राज्यं विशालम् अखण्डशासनं च राज्यं चक्रतुः ॥३०९॥

तत्क्षेत्रीयजिनायुषा परिमितं सम्पूर्य चायुर्निजं,
गत्वाऽऽद्यां नरकावनीमशुभतो रत्नप्रभाख्यां हरिः ।
स्मृत्वा प्राग्भवदुष्कृतं त्ववधितः संविग्नचित्तः सुधीः,
संसेहे बहुवेदनाश्च विविधाः धिक्कर्मणां चेष्टितम् ॥३१०॥

सुधीः मतिमान् हरिरनन्तवीर्यः तत्क्षेत्रीयजिनायुषा परिमितं तत्क्षेत्रीयजिनायुः परिमाणं चतुरशीति पूर्वलक्षमानं निजमायुः सम्पूर्य क्षपयित्वा अशुभतः अशुभकर्मप्रभावतः रत्नप्रभाख्यामाद्यां प्रथमां नरकावनीं नरकपृथिवीं गत्वा अवधितः अवधिज्ञानेन तु प्राग्भवस्य दुष्कृतं पापं स्मृत्वा

संविग्नचित्तः विरक्तमनाः सन् विविधाः बह्वीः वेदनाश्च संसेहे, कर्मणां चेष्टितम् विपाकं धिक्, तादृशानामपि तथा कर्म विपाक इति कर्मनिन्दनीयमेवेत्यर्थः ॥३१०॥

अस्य श्रीचमरेन्द्र एत्य जनकः प्राग्जन्महार्दोदयात्,
संक्रान्ता इव वेदनाः समहरत् स्वस्मिन्कृपामाश्रयन् ।
राज्ये न्यस्य सुतं बलोऽपि कलयन् भ्रातुर्विपत्त्या शुचं,
जग्राहाग्रहतो जयन्धरगुरोः पार्श्वे विरक्तो व्रतम् ॥३११॥

अस्यानन्तवीर्यस्य जनकः पिता यः शुभापुरीशस्तिमितसागरस्तज्जीवः श्रीचमरेन्द्रः प्राग्जन्मनः हार्दस्य प्रेम्णः उदयादुत्पादाद्धेतोरेत्य आगत्य कृपामाश्रयन् कृपालुः सन् स्वस्मिन् स्वात्मनि सङ्क्रान्ता प्रविष्टा इव, दयालवो हि परपीडां स्वकीयामिव मन्यन्त इति भावः । वेदनाः पीडा समहरन्नाशितवान्, बलोऽपराजितोऽपि भ्रातुरनन्तवीर्यस्य विपत्त्या मरणेन हेतुना शुचं शोकं कलयन् आश्रयन् विरक्तः निर्विण्णः सन् राज्ये सुतं न्यस्याऽभिषिच्य, जयन्धरगुरोः पार्श्वे आग्रहतः आग्रह पूर्वकं व्रतं दीक्षां जग्राह ॥३११॥

मुख्यैः षोडशसंख्यया परिमितैः राज्ञां सहस्रैस्ततः,
प्रव्रज्यामधिगम्य सेवनविधिश्रद्धापरैरन्वितः ।
विंशत्युग्रपरीषहान् द्विकलितान् बाढं विषह्य व्रती,
पर्यन्तेऽभ्युपगम्य सोऽप्यनशनं मृत्वाऽच्युतेन्द्रोऽजनि ॥३१२॥

ततः दीक्षाग्रहणानन्तरम् सोऽपराजितोऽपि षोडशसङ्ख्यया परिमितैः मुख्यैः राज्ञां सहस्रैः सेवनविधौ सेवाकर्मणि श्रद्धया आदराधिक्येन परैस्तत्परैः षोडशसहस्रमुख्यराजैः अन्वितः सहितः सन् प्रव्रज्यामधिगम्य व्रती सन् द्विकलितान् द्विसंख्यायुक्तान् विंशतिम् उग्रपरीषहान् द्वाविंशतिपरीषहान् बाढं भृशं विषह्य सोढ्वा पर्यन्ते अन्ते अनशनमभ्युपगम्य मृत्वा अच्युतेन्द्रः अजनि जातः ॥३१२॥

द्विरुक्ताग्र्यागारिप्रथगुणसहस्रैः परिमितं,
हरेर्जन्तुः स्वायुर्निरयनियतं पूर्तिमनयत् ।
इतश्चास्मिन् द्वीपे भरततटवैताढ्यगिरिगो-,
त्तरश्रेण्यामस्त्यप्रतिकृति नभोवल्लभपुरम् ॥३१३॥

हरेरनन्तवीर्यस्य जन्तुः जीवः द्विरुक्ता अग्र्यागारिषु मुख्यगृहस्थेषु प्रथन्त इति प्रथाः प्रसिद्धाः ये गुणाः एकविंशतिगुणाः तेषां सहस्रैः द्विचत्वारिंशत्सहस्रैः परिमितनिरयनियतम् नरकनिश्चितम् स्वायुः पूर्तिमनयत् समाप्तवान् । इतश्च अस्मिन् द्वीपे जम्बूद्वीपे भरततटे भरतखण्डे

वैताढ्यगिरिगायाम् वैताढ्यपर्वतरथायाम् उत्तरश्रेण्याम् अप्रतिकृत्यनुपमं नभोवल्लभपुरम् गगनवल्लभाढ्यं नगरमस्ति ॥३१३॥

तस्मिन् विद्याधरपरिवृढो मेघवाहो बभूव,
प्रेयस्यस्याऽभवदधिगुणा मेघमालिन्यभिख्या ।
तस्याः कुक्षौ स च मधुरिपोर्जन्तुरुद्धृत्य दुःख–,
क्रीडावेशान् नरककुहरान् मेघनादः सुतोऽभूत् ॥३१४॥

तस्मिन् नभोवल्लभपुरे मेघवाहस्तदाख्यः विद्याधराणां परिवृढोऽधिपो बभूव, अस्य मेघवाहस्य मेघमालिन्यभिख्या मेघमालिनी नाम्नी अधिगुणा गुणवती प्रेयसी भार्या अभवत्, तस्याः कुक्षावुदरे च स मधुरिपोरनन्तवीर्यस्य जन्तुर्जीवः दुःखादुःखजनकाः क्रीडावेशाः वेलाः विलसादराः यस्मिन् तस्माद् दुःखप्रदात् नरककुहराद् नरकभूमेरुद्धृत्य निर्गत्य मेघनादः तन्नामा सुतोऽभूत् ॥३१४॥

राज्यं न्यस्य तनूभवे नरपतिस्तस्मिंस्ततो वार्धके
वीरो लोकमसाधयत् परमसौ वैराग्यखड्गं दधत् ।
साम्राज्यं समवाप्य विक्रमनिधिः श्रेणिद्वयं चापरो–
बाह्याभ्यन्तरवैरिवारविजये युक्तस्तयोर्हि क्रमः ॥३१५॥

ततः सुतोत्पत्त्यनन्तरम्, वार्धके वृद्धावस्थायां सत्याम् नरपतिः मेघवाहः तस्मिन् तनूभवे मेघनादे राज्यं न्यस्य दत्त्वा, वीरः उत्साहवान् सन् असौ मेघवाहः वैराग्यमेव कर्मशत्रुनाशकत्वात् खड्गमिव तं दधत् विरक्तः परं लोकं स्वर्गादि असाधयत्, न परोऽधिको यतस्तादृशः सर्वश्रेष्ठविक्रमनिधिः वीरः मेघनादः श्रेणिद्वयं साम्राज्यं दक्षिणोत्तरश्रेणिसाम्राज्यं समवाप्य यद्वा साम्राज्यं समवाप्य श्रेणिद्वयम् दक्षिणोत्तरश्रेणिद्वयमसाधयत्, तत्र हेतुमाह–बाह्येति हि यतः तयो मेघवाह–मेघनादयोः बाह्याभ्यन्तरवैरिवारविजये क्रमो युक्तः सेयोरधिस्य मेघवाहस्याभ्यन्तरशत्रुसमूहविजये प्रवृत्तिरितिभाव. । बाह्यानामासन्नशत्रुभूतराज्ञामान्तराणाञ्च क्रोधादीनां वैरिणां विजये वशीकारे युक्तः संलग्नोऽभूत् । तयो.राज्यप्राप्तिवैरिविजययोर्हि यतः क्रम· पौर्वापर्यम्, अतएव पूर्वं राज्यप्राप्तिः पश्चाच्च शत्रुभयाद्यनुद्विग्नः शान्तचित्तः आन्तरवैरिणं जयतीति क्रम इति भावः ॥३१५॥

अन्येद्युः स जगाम मन्दरगिरिं विश्राण्य नीवृच्छतं,
भागेनाङ्गभुवां शताधिकमयं भाग्यस्फुरद्वैभवः ।
कुर्वाणस्य च सिद्धचैत्यमहनं तस्मिंस्तदा नन्दने,
देवा कल्पनिवासिनोऽप्यवतरन्ति स्मावनेऽरं वने ॥३१६॥

अन्येद्युरेकदा भाग्येन स्फुरन् वर्धमानो वैभवो यस्य स तादृशः समधिकवैभवसम्पन्नः सोऽयं मेघनादः अङ्गभुवां पुत्राणां शताधिकम् भागेन भागं कृत्वा पृथक् पृथक् नीवृच्छतं 'जनपदशतम्,

प्रत्येकं जनपदशतमित्यर्थः, विश्राण्य दत्त्वा मन्दरगिरिं जगाम, सिद्धचैत्यस्य महनं पूजनं कुर्वाणस्य च शतस्तस्य, तदा तस्मिन् समये तस्मिन् मन्दरे, अवने पावने न वनं यतः तस्मिन् सर्वश्रेष्ठे नन्दने तदाख्ये वने कल्पनिवासिनः सौधर्मकल्पादिस्थाः देवा अपि अवतरन्ति अवगच्छन्ति स्म ॥३१६॥

प्राग्जन्मप्रियबान्धवं पुर इह प्रेक्ष्याऽच्युतस्वर्पतिः,
प्रेम्णैतं परलोकसाधनविधौ प्राबोधयद्बोधभृत् ।
तस्मिन्नेव किल क्षणेऽत्र समुपैच्छ्रीमान् मुनीन्द्रोऽमरः,
सिद्धयत्येव मनीषितं सुकृतिनां प्रायो विलम्बं विना ॥३१७॥

अच्युतस्वर्पतिः अच्युतेन्द्रः अपराजितजीवः इह मन्दरे पुरोऽग्रे प्राग्जन्मनः प्रियबान्धवमनन्तवीर्यजीवं मेघनादं प्रेक्ष्य बोधभृत् अयं भवकूपनिस्तारणाय प्रतिबोधनीय इत्येवं विज्ञाता धर्मसंयुतं पूर्वभवस्वरूपमाख्याय प्रेम्णा भ्रातृस्नेहेन एतं मेघनादं परलोकसाधनस्य विधौ अनुष्ठानविषये परलोकं साधयेत्येवं प्राबोधयदुपदिष्टवान्, तस्मिन् प्रबोधन क्षण एव, किलेत्यैतिह्ये, श्रीमान् अमरः तदाख्यः मुनीन्द्रः समुपैत्समागतवान्, ननु किमिति तस्य बोधो मुनेरागमश्चेत्याकस्मिको योग इति चेत्तत्समर्थयन्नाह—प्रायः बाहुल्येन सुकृतिनां पुण्यवतां मनीषितमिष्टम् विलम्बं विना शीघ्रमेव सिद्धयति, पुण्यप्रभावादेव तथा संयोगो जात इति भाव । ३१७॥

दीक्षां तत्पदसन्निधौ नरपतिः श्रीमेघनादोऽग्रहीत्,
निर्दम्भं स तपो विशुद्धमनसाऽप्याराधयामासिवान् ।
आलम्ब्य प्रतिमां स नन्दनगिरावन्येद्युरेकां क्षपां,
तस्थौ पुण्यसमीहया हि यतयः किं किं न कुर्वन्त्यपि ॥३१८॥

नरपतिः श्रीमेघनादः तस्यामरमुनीन्द्रस्य पदसन्निधौ चरणोपान्ते दीक्षामग्रहीत्, तथा, स मेघनादः विशुद्धेन रागादिरहितेन मनसा, निर्मलचित्तवृत्तिपूर्वकमित्यर्थः, निर्दम्भं निष्कपटं यथा स्यात्तथा, नतु लोकवञ्चनादीच्छया बकवत्, तपोऽपि आराधयामसिवान् चक्रे, अन्येद्युरेकदा स मेघनादः नन्दनगिरौ प्रतिमां कायोत्सर्गमालम्ब्य एकां क्षपां रात्रिं यावत्तस्थौ, एतादृशदुष्करानुष्ठानञ्च पुण्यार्थमित्याह हि यतः, यतयः—व्रतिनः पुण्यस्य समीहया प्राप्तीच्छया, किं किं दुष्करं न कुर्वन्त्यपि अपितु सर्वमेव दुष्करातिदुष्करमपि कुर्वन्त्येवेत्यर्थः ॥३१८॥

अश्वग्रीव तनूभवोऽतिविभवो दैतेयभूयं श्रितः,
प्राग्वैरात्तमुपाद्रवत्प्रतिघयुक् तत्रस्थमालोक्य च ।
वैफल्यं कलयाम्बभूव विविधाऽऽबाधा कृता तेन सा,
तस्मिन् ध्याननिलीनचित्तविततौ स्वर्णाद्रिवन्निश्चले ॥३१९॥

तत्रस्थं प्रतिमास्थं तं मेघनादनृपमालोक्य च दैतेयभूयं दैत्यत्वमसुरत्वं गतः, अतिविभवः समृद्धिसंपन्नः विद्यादिशक्तियुक्तो वा अश्वग्रीवस्य तदाख्यनृपस्य तनूभवः पुत्रः प्राग् पूर्वभवस्य वैराद् द्वेषाद्धेतोः प्रतिघयुक् क्रुद्धः सन् उपाद्रवत् विविधविघ्नं चकार, "कोपक्रोधाऽमर्षरोषप्रतिघारुट्क्रुधौ स्त्रिया" मित्यमरः । ध्यानेन निलीना ध्येये लये गता चित्तवित्ततिः चित्रवृत्तिर्यस्य तादृशे तस्मिन् अन्तर्मुखसमनसि, अतएव बाह्यव्यापाराभावाद्, स्वर्णाद्रिवन्मेरुवन्निश्चले स्थिरे तस्मिन् मेघनादविषये, तेन दैत्येन कृता विविधा सा दुष्टा आबाधा शारीरिकपीडा, वैकल्यं कलयामास ध्यानाच्चलयितुं न शशाकेत्यर्थः ॥३१९॥

शाखाऽपेतः कपिरिव ययौ दानवोऽयं विलक्ष-,
स्तच्च ध्यानं व्यसृजदसमं मेघनादो मुनीन्द्रः ।
कस्याऽत्यन्तं स्फुरति विशदं ध्यानमप्येकतानं,
संसाराध्वभ्रमणकरणाऽसन्निधानं विहाय ॥३२०॥

शाखायाः अपेतः पतितः कपिर्वानर इव विलक्षः विषण्णः अयं प्रस्तुतोऽश्वग्रीवसुतः दानवः यया स्वप्रयासे निष्फलस्यैवैव गतिरिति भावः, मेघनादो मुनीन्द्रश्च, असममनुपमं तद्ध्यानं व्यसृजन्मुक्तवान्, ननु किमिति तादृश ध्यानावस्थ एव स तस्थौ तत्राह—एकतानं परमात्मनि लयं गतं विशदं विशुद्धमपि ध्यानं संसाराध्वनि भवमार्गे भ्रमणे करणस्य कारणस्य तादृशकर्मादेरसन्निधानमसामीप्यं विहाय मुक्त्वा कस्य अत्यन्तं परावर्ति स्फुरति जायते ? न कस्यापीत्यर्थः । प्रतिबन्धककर्मसत्त्वे अभङ्गिमध्यानं न सम्भवतीतिभावः ॥३२०॥

एवं तप्त्वा चिरमपि तपस्त्यक्तभोज्योऽन्तकाले-,
ऽध्यात्मप्रीतिप्रणयविवशां चित्तवृत्तिं वितन्वन् ।
द्वाविंशत्यम्बुधिपरिमितं जीवितं बिभ्रदुच्चैः,
कल्याणात्माऽच्युतसुरपतेराप सामानिकत्वम् ॥३२१॥

एवमुक्तप्रकारेण चिरं बहुकालमपि तपस्तप्त्वा अन्तकाले अल्पायुः शेषे त्यक्तभोज्यः कृतानशनव्रतः, उच्चैरुदारां चित्तवृत्तिम्, अध्यात्मप्रीतौ यः प्रणयः, आदरभावस्तस्य विवशामधीनाम्, वितन्वन्नात्महिताय नियुञ्जन् द्वाविंशत्यम्बुधिपरिमितं जीवितमायुः द्वाविंशतिसागरोपमकालमानं बिभ्रत् कल्याणात्मा भव्यः स मेघनादः अच्युतसुरपतेरच्युतेन्द्रस्य सामानिकत्वमाप ॥३२१॥

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः,
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावतां सद्गुरुः ।
तच्छिष्येण कृतेऽत्र सुष्ठु नवमः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गो विशालो ययौ ॥३२२॥

व्याख्याद्वैते समार्थे यदि भवति तदा व्यर्थतैवोत्तरस्यां,
भिन्नार्थे मूलकर्तुः क्व नु मतिरनयोस्संशयः स्यादवश्यम् ।
एषा व्याख्या गतार्था प्रथमत उदिता दर्शनेनाद्वितीया,
पूर्णा सर्गे मनोज्ञे भवति तु नवमे नोक्तदोषानुविद्धा ॥३२३॥

इति श्रीमुनिभद्रसूरिकृतश्रीशान्तिनाथचरिते शासनसम्राट्-सूरिचक्रचक्रवर्ति-परमसद्गुरु श्रीविजयनेमिसूरीश्वर पट्टालङ्कारावाप्तन्यायवाचस्पति शास्त्र-विशारदबिरुदाचार्यश्रीविजयदर्शनसूरीश्वर सन्दब्धप्रबोधिनी व्याख्यायां नवमः सर्गः ॥

卐

## ॥ अथ दशमः सर्गः ॥

सर्गादौ मङ्गलमाचरति टीकाकारः

यस्याध्यक्षं परोक्षं स्वपरविषयकं निर्णयैकस्वभावं
ज्ञानं मानं स्वतोऽर्थोऽनुगतिमतिगतस्स्याद्विशेषस्तथैव ।
तं नत्वा शान्तिनाथं सुचरितमवरं दर्शनो मन्दबुद्धि-
व्याख्यां सर्गे तनोति स्फुटमिह दशमे नेमिसूरीशशिष्यः (॥१॥)

सर्गादौ मङ्गलमाचरति ग्रन्थकारः यदिति--

यदीयनामाऽस्ति समीहितार्थप्रदानकर्मण्यपि सिद्धमन्त्रः ।
स धर्मचक्रित्वपदं प्रशासच्छ्रीशान्तिनाथस्तनुतां सुखं वः ॥१॥

अध्यायादौ ग्रन्थकारः चरिताधिकृतत्वेन श्रीशान्तिनाथमेव स्तौति—

यदीयनामाऽपि समीहितार्थस्येष्टार्थस्य प्रदानकर्मणि प्रदाने सिद्धमन्त्रः सिद्धमन्त्र इवामोघः अभीष्टसाधकमस्ति, यस्य नाम्नः एवं माहात्म्यम्, स स्वयं महामहीमशालीति किमु वक्तव्यमित्यपेरर्थः । धर्मचक्रित्वस्य पदं स्थानं प्रशासत् धर्मचक्रीश्वरः स श्रीशान्तिनाथः तीर्थङ्करः वः श्रोतृणां सुखं तनुतां विस्तारयतु (अत्र सर्गे प्रायः उपजातिश्छन्दः । तल्लक्षणं यथा—अनन्तरोदीरितलक्ष्माजौ पादौ यदीयावुपजातयस्ता" इति) ॥१॥

अथ वार्तां प्रस्तौति—

अथाऽत्र जम्बूपपदान्तरीपे, सीतानदीदक्षिणतीरनिष्ठः ।
श्री मङ्गलावत्यभिधोऽस्ति पूर्वं, विदेहचित्रं विजयो जयाढ्यः ॥२॥

अथेति-अथेति—आरम्भे, अत्रास्मिन्, जम्बूपपदेऽन्तरीपे द्वीपे जम्बूद्वीपे, सीताऽऽख्यनद्याः दक्षिणतीरे निष्ठः स्थितः पूर्वविदेहे चित्रमाश्चर्यभूतः, जयेन सर्वोत्कृष्टतया आढ्यः सम्पन्नः सर्वोत्कृष्टः श्री मङ्गलावत्यभिधः विजयोऽस्ति ॥२॥

अथ तत्रत्य नगरीमाह—

पुर्यस्ति तस्मिन् मणिसञ्चयाख्या, विख्यातनामा त्रिदिवाधिकर्द्धिः ।
सुखैकभोगान् वृषशर्मयोगाद्—, दिवौकसो यत्र हसन्ति सन्तः ॥३॥

पुरीति—तस्मिन् मङ्गलावतीविजये, विख्यातनाम्नी त्रिदिवात्स्वर्गादप्यधिकर्धिः अधिकसमृद्धिः मणिसञ्चयाख्या पुरी अस्ति. यत्र पुर्याम् सन्तः सज्जनाः स्वस्य वृषस्य धर्मस्य श्रुतधर्मस्य चारित्रधर्मस्य शर्मणः सुखस्य च योगात् सम्बन्धात् सुखमेवैकोऽद्वितीयो भोगः येषां तान् तादृशान् स्वर्गे चारित्रधर्माभावात्, स्वस्माद् हीनयोगात् दिवौकसः देवान् हसन्ति, अधिको हि न्यूनं हसतीति भावः, अत्र धर्मात्मानः सुखिनश्च जनाः. स्वर्गे तु सुखिन एवेति, व्यतिरेकः हासातिशयोक्त्या सङ्कीर्यते ॥३॥

अथ तद्राजं वर्णयति-

क्षेमङ्करः क्षोणिपतिः स तस्यां, वसुन्धराक्षेमविधानदक्षः ।
बभूव, यद्विक्रममाक्रमेण, व्यवर्णयन् मागधवन्महीशाः ॥४॥

तस्यां मणिसञ्चयपुर्य्याम्, स प्रसिद्धः वसुन्धरायां पृथिव्यां क्षेमस्य स्वप्रजाकल्याणस्य प्राप्तसंरक्षणस्य वा विधाने दक्षः शीघ्रकारी क्षेमङ्करः तन्नामा क्षोणीपतिः राजा बभूव, यद्विक्रमं पराक्रमम् महीशाः राजानः आक्रमेण स्वपराजयेन हेतुना मागधवद्व्यवर्णयन् गायन्ति स्म ॥४॥

चतुर्मुखो यद्गुणवर्णनायां. चतुर्मुखीभावमधत्त नूनम् ।
तथाऽपि तां कर्तुमयं नितान्ता-,ऽऽरोहत्प्रकर्षेण शशाक नैव ॥५॥

चतुर्मुखः ब्रह्मा यस्य क्षेमङ्करस्य गुणानाम् वर्णनायाम्, चत्वारि मुखानि यस्य स तद् भावमधत्त तद्भावं नूनं निश्चयेनाधत्त, चतुर्मुखत्वं स्वस्य चकार, एकेन मुखेन तदसम्भवात् गुणानां बाहुल्यात् । तत्पूर्वं तु एकमुखस्यैव तस्य चतुर्मुखता रुढिरिति भावः । रुढिः तत्रापि बीजं तदेव पूर्वोक्तमिति भावः । नूनमेवमहं मन्ये इत्यर्थः । तथापि चतुर्मुखत्वभावेऽपि अयं ब्रह्मा नितान्तमनवरतमारोहता वर्धमानेन प्रकर्षेण गुणप्रकर्षेण हेतुना तां गुणवर्णनां कर्तुं नैव शशाक शक्तोऽभूदित्यनुमन्ये, स्थिरैकरूपवस्तुवर्णनं शक्यम्, प्रतिक्षणवर्धिष्णुप्रकर्षस्य वर्णनं तु आकाल्मपि नान्तं यायादिति भावः ॥५॥

देवी तदीयाऽजनि रत्नमाला, सुरत्नमालाततहारयष्टिः ।
उमा यदीयं समवेक्ष्य रूपं, वपुर्निबद्धं गिरिशं चकार ॥६॥

तदीया देवी अग्रमहिषी सुररत्नानां मालया श्रेण्या तता व्याप्ता विस्तृता हारयष्टिः यस्याः सा तादृशी, अत एव सान्वर्था रत्नमाला तदाख्या अजनि, यदीयं रत्नमालासम्बन्धिरूपं समवेक्ष्य, उमा पार्वती गिरिशं प्रभुं स्त्रैणे गणनाऽभावाया वपुषा स्वशरीरेण निबद्धं सम्बद्धं चकार, रत्नमालारूपजनितपराजयो हि स्त्रिया इति भावः ॥६॥

अथाऽच्युतेन्द्रत्वपदात् च्युतः सोऽच्युतः श्रिया श्री अपराजितात्मा ।
तत्कुक्षिशुक्तौ प्रतिपद्यते स्माऽ,-वदातमुक्ताफलमञ्जुभावम् ॥७॥

अथेति विषयान्तरप्रस्तावे, अच्युतेन्द्रत्वपदात् च्युतः श्रिया लक्ष्म्या अच्युतः समन्वितः श्री अपराजितात्मा अपराजितजीवः, तस्याः रत्नमालायाः कुक्षिरुदरं शुक्तिरिव तस्याम् अवदातं विशुद्धं यन्मुक्ताफलम् तस्य मञ्जुभावम् चारुस्वभावम् प्रतिपद्यते स्म, शुक्तौ मुक्ताफलमिव तत्कुक्षौ स उत्पद्यते स्म, रत्नमाला कुक्षाववततारेति यावत् ॥७॥

तया निरैक्ष्यन्त निशाऽवसाने, स्वप्ना महान्तश्च चतुर्दशापि ।
वज्रं तथा पञ्चदशं, सदास्या, किञ्चित्प्रसुप्ताऽभ्यधिकं प्रबुद्धा ॥८॥

तथा रत्नमालया, निशाऽवसाने रात्र्यन्तयामे महान्तः महाफलसूचकाः चतुर्दशापि प्रसिद्धाः स्वप्नाः तथा पञ्चदशं वज्रम्, निरैक्ष्यन्त दृष्टाः, सदास्या चारुमुखी रत्नमाला किञ्चित्प्रसुप्ताऽर्धनिद्रिता अभ्यधिकं स्वप्नं दृष्ट्वा बाहुल्येन प्रबुद्धा विनिद्रा जातेत्यर्थः ॥८॥

संख्याय सा तान्निजगाद तुष्टा, राज्ञेऽथ राज्ञी प्रतिपत्तुमर्थम् ।
न्यवेदयत् सोऽपि तदैव देवि !, चक्री सुतस्ते भविता श्रियेन्द्रः ॥९॥

संख्यायेति—अथ निद्राभङ्गानन्तरम्, सा राज्ञी रत्नमाला तान् दृष्टस्वप्नान् संख्याय गणयित्वा बुध्वा वा अर्थम् स्वप्नफलम्, प्रतिपत्तुं ज्ञातुम् राज्ञे क्षेमङ्कराय तुष्टा प्रमुदिता सती निजगाद कथितवती, स क्षेमङ्करोऽपि तदैव स्वप्ननिवेदनक्षण एव न्यवेदयत् कथितवान्, किमित्याह—देवि ! श्रिया लक्ष्म्या इन्द्र इन्द्रतुल्यः चक्री चक्रवर्ती ते सुतो भविता भविष्यति ॥९॥

असूत पूर्णे समये सुतं सा, समग्रसामुद्रकलक्षणार्च्यम् ।
स्वतेजसा तर्जिततिग्मरश्मिं, निरस्तनिःशेषबलं बलेन ॥१०॥

असूतेति—सा रत्नमाला समये पूर्णे समग्रेण समस्तेन सामुद्रकेन सामुद्रोक्तेन लक्षणेन चक्रवर्तिचिह्नेन अर्च्यम् पूजार्हम्, स्वतेजसा तर्जितस्तिरस्कृतस्तिग्मरश्मिः सूर्यो येन तं तादृशं सूर्यादप्यधिकतेजस्विनम्, बलेन स्वसत्त्वेन निरस्तं परास्तं निःशेषं बलं येन तं तादृशं सर्वाधिकबलवन्तं सुतमसूत ॥१०॥

यदायुधं वज्रमदर्शि देव्या, स्वप्नेऽत्र गर्भस्थितिमादधाने ।
वज्रायुधस्तज्जनकेन नाम्नाऽभ्यधायि पुत्रः स्वगुणैः पवित्रः ॥११॥

यदिति—गर्भे स्थितिमादधाने कुर्वाणे अत्र जातके सति स्वप्ने देव्या रत्नमालया यद्यतो वज्रमायुधं वज्राख्यमस्त्रमदर्शि, तत्ततः जनकेन पित्रा क्षेमङ्करेण स्वगुणैः पवित्र उज्ज्वलः पुत्रः नाम्ना वज्रायुधः अभ्यधायि, तस्य वज्रायुध इति नाम कृतवानित्यर्थः ॥११॥

धात्रीभिरुत्सङ्गमवापितोऽसौ, दिने दिनेऽवर्धत बालशालः ।
छायां प्रकुर्वन्नपि संश्रितानां, रसैरनेकैः परिपोष्यमाणः ॥१२॥

धात्रीभिरिति—धात्रीभिः पञ्चभिरुपमातृभिः उत्सङ्गं स्वक्रोडमवापितः प्रापितः असौ बालः शालो वृक्ष इव, वज्रायुधः अनेकैः रसैः जलैरिव दुग्धादिभिः परिपोष्यमाणः पुष्टिं नीयमानः परिपाल्यमानः, संश्रितानामाश्रितानाम् छायाम् असन्तापं कुर्वन्, एकत्रानातपरूपमन्यत्रसुखरूपम्, दिने दिने अवर्धत । श्लेषानुप्राणितरूपकम् ॥१२॥

पद्मा इवोरुव्यवसायभाजं, सौभाग्यसम्पन्नमिव स्त्रियोऽपि ।
महाकविं सत्प्रतिभा इवाशु, विद्यास्तमाशिश्रियुरादरेण ॥१३॥

पद्मेति—उरुं महान्तं व्यवसायमुद्योगं भजति करोतीति तं व्यवसायिनं पद्मा कमला लक्ष्मीरिव सौभाग्येन तदाख्येन गुणविशेषेण सम्पन्नं समन्वितं स्त्रिय इवापि महाकविं सत्प्रतिभा इव तं वज्रायुधं विद्याः आदरेण स्वतः एव आशु आशिश्रियुराश्रयन्ति स्म सकलकलावान् जात इत्यर्थः मालोपमाऽलङ्कारः ॥१३॥

नितम्बिनीलोचनपक्षिजाल-, प्रबन्धसम्पादनपाशरूपम् ।
केलीनिकेतं विषमायुधस्य, क्रमात्स तारुण्यभरं बभाज ॥१४॥

नितम्बिनीति—स वज्रायुधः क्रमात् नितम्बिनीनाम् स्त्रीणाम् लोचनान्येव पक्षिणः तेषां जाल-प्रबन्धस्य आनायबन्धस्य रचनायाः सम्पादने पाशरूपम् बन्धनरज्जुशेषरूपम्, स्त्रीनेत्राकर्षक-मिति यावत्, "आनायः पुंसि जालं स्यादि" त्यमरः । विषमायुधस्य कामस्य केलीनिकेतं क्रीडा-गृहरूपम् तारुण्यभरं यौवनातिशयं बभाज प्राप । रूपकमलङ्कारः ॥१४॥

लक्ष्मीवतीं नाम नरेन्द्रकन्यां, विवाहितोऽसौ परमोत्सवेन ।
हर्षात्पितृभ्यामथ कामसेवां, विधातुमुद्योगमधत्त वीरः ॥१५॥

लक्ष्मीति—अथ तारुण्यप्राप्त्यनन्तरम् पितृभ्यां मातापितृभ्याम् हर्षात् हर्षपूर्वकम् परमोत्सवेन असौ वज्रायुधः लक्ष्मीवतीं नाम नरेन्द्रकन्यां विवाहितः, अथ वीरः स कामसेवां वैषयिकसुखम् विधातुमुपभोक्तुमुद्योगं प्रयत्नमधत्त ॥१५॥

अनन्तवीर्यस्य तदैव जीवः, परिच्युतः सोऽच्युतदेवलोकात् ।
व्यभूषयद् भूषणभूषिताङ्ग, लक्ष्मीवतीकुक्षिमुपेत्य पुण्यैः ॥१६॥

अनन्तेति—तदैव तस्मिन् समय एव अनन्तवीर्यस्य स जीवः अच्युतदेवलोकात्परिच्युतः सन् उपेत्य प्राप्य, मनुष्यभव इति शेषः । तदैवेतीहापि सम्बध्यते, पुण्यै हेतुभिः भूषणैः भूषिताङ्ग्याः लक्ष्मीवत्याः कुक्षिमुदरं व्यभूषयत्, तद्गर्भस्थो जात इत्यर्थः ॥१६॥

सम्पूर्यमाणाखिल दोहदा सा, सुतं प्रसूते स्म रविं स्वधाम्ना ।
पित्रा सहस्रायुध इत्यभिख्या, तस्यैव चक्रे महतोत्सवेन ॥१७॥

समिति—सा लक्ष्मीवती सम्पूर्यमाणमखिलं दोहदं मनोरथं यस्याः सा तादृशी सती स्वधाम्ना स्वतेजसा रविं सूर्यतुल्यं सुतं प्रसूते स्म, तस्य जातकस्य पित्रा वज्रायुधेन महतोत्सवेन-अन्यूनेन उत्सवेन सहस्रायुध इत्यभिख्या नाम चक्रे कृतवान् ॥१७॥

प्रज्ञातरण्या निरवद्यविद्याऽकूपारपारं स विगाहते स्म ।
सीमन्तिनी मोहनवद्धकक्षं, वयो द्वितीयं स समाससाद ॥१८॥

प्रज्ञेति—स सहस्रायुधः प्रज्ञा प्रतिभा तरणि नौरिव तया कृत्वा निरवद्यविद्यारूपस्य उत्तमविद्यारूपस्याकूपारस्य सागरस्य पारमन्तं विगाहते स्म प्राप्नोति स्म, सर्वशास्त्रपारं प्राप्तेत्यर्थः । तथा, स सहस्रायुधः सीमन्तिनीनां नारीणां मोहने वशीकारे बद्धा कक्षा परिकरो येन तत्तादृशं स्त्रीजनमनोहरणं द्वितीयं तारुण्यनामकं वयः अवस्था समाससाद प्राप ॥१८॥

द्वेधाऽप्युदूहे कनकश्रियं स, क्ष्मापालकन्यां जनकाज्ञयैव ।
क्रमेण काले विषयप्रसक्ते, साऽसूत सूनुं शतवल्ल्यभिख्यम् ॥१९॥

द्वेधेति—स सहस्रायुधः जनकाज्ञया पितुराज्ञयैव नतु स्वैरवृत्त्या, क्ष्मापालकन्यां राजपुत्रीम् द्वेधा नाम्ना अर्थेन च कनकस्येव श्री शोभा यस्यास्ताम् तादृशीम् कनकश्रीनाम्नीम् उदूहे परिणीतवान् । क्रमेण कान्ते पत्यौ विषयप्रसक्ते भोगलीने सति सा कनकश्रीः शतवल्ल्यभिख्यम् शतवल्लीनामानं सूनुं पुत्रमसूत । अन्यत्र शतबलाभिधं पुत्रमसूतेत्युक्तम् ॥१९॥

परेद्यविः पुष्कलपुत्रपौत्रप्रपौत्रमुख्यैः सहितः कुमारैः ।
क्षेमङ्करः संसदमध्यशेत, क्षपाकरो द्यामिव तारकौघैः ॥२०॥

परेइति—परेद्यविरेकदा क्षेमङ्करो नृपः पुष्कलाः बहुशः पुत्रपौत्रप्रपौत्राः मुख्या येषु तादृशैः कुमारैः सहितः सन्, क्षपाकरश्चन्द्रः तारकौघैः नक्षत्रसमूहैः सहितः द्यामाकाशमिव संसदं सभामध्यशेतासंसाद ॥२०॥

देवैस्तदेशानदिवः प्रभूतै,-र्विचारसारं वच इत्यवादि ।
नामोपवज्रायुधमेव सर्वे, श्राद्धाश्च सम्यक्त्वविशुद्धिशुद्धाः ॥२१॥

देवैरिति—तदा क्षेमङ्करसभासादनकाले ईशानदिवः ईशानकल्पाख्यद्वितीयदेवलोकस्य प्रभूतैः देवैः विचारेण सारम् श्रेष्ठं वच इति एवं अवादि, इतीति किमित्याह—सर्वे श्राद्धाः श्रद्धावन्तः श्रावकाः सम्यक्त्वस्य विशुद्ध्या शुद्धाः निर्मलाः उप वज्रायुधं वज्रायुधाद् हीना एव नामेति स्वोक्तिदार्ढ्ये । सन्तीति शेषः ॥२१॥

श्रुत्वा तदेतत्किल चित्रचूलो, मिथ्यादृशां मूर्द्धमणिः सुपर्वा ।
दुर्वासनावासितचित्तवृत्ति-, स्तदेव तं संसदमाससाद ॥२२॥

श्रुत्वेति—तदेतत्पूर्वोक्तं वचः श्रुत्वा, किलेत्यैतिह्ये मिथ्यादृशामश्रद्धावतां मूर्धमणिः शिरोमणिः चित्रचूलः तदाख्यः सुपर्वा देवः दुर्वासनया मिथ्यावासनया वासिता भाविता चित्तवृत्तिर्यस्य तादृशः दुर्मतिः सन् तदा कथनक्षण एव तां क्षेमङ्कराध्यासितां संसदं सभामाससाद प्राप ॥२२॥

स तत्र सभ्यैर्नृपतेः समक्षं, निरूप्यमाणासु विचित्रवाक्षु ।
चार्वाकरूपं प्रतिपद्य सद्यः, प्रोवाच वाचालनियन्त्रणोत्कः ॥२३॥

सेति— स चित्रचूलः तत्र सभायां सभ्यैः सभास्थैः नृपतेः समक्षम् पुरतः विचित्रासु विविधासु वाक्षु कथासु निरूप्यमाणासु विचार्यमाणासु सतीषु चार्वाकस्यानात्मवादिनो नास्तिकस्य रूपम् प्रतिपद्य विधाय वाचालानां विवादकुशलानां नियन्त्रणे निग्रहे उत्कः उत्कण्ठितः सन् सद्यः प्रोवाच ॥२३॥

तदुक्तिमेव प्रकाशयंति—

**नैवाऽस्ति धर्मः स च नाप्यधर्म-, स्तदाश्रयो नास्ति तथैव चात्मा ।**
**गमी ततः कः परलोकमङ्ग !, तद्गामुकं कः प्रतिपद्यतां वा ! ॥२४॥**

नैवेति— सः प्रसिद्धः धर्मो नास्त्येव, अधर्मोऽपि न नास्ति, तदाश्रयः तयोः धर्माधर्मयोराश्रयः आत्मा च तथैव धर्माधर्मवदेव नास्ति, ततो धर्माद्यभावाद्धेतोः, अङ्गेति कोमलामन्त्रणे, कः परलोकं गमी गन्ता—गमिष्यति न कोऽपीत्यर्थः । वा तथा तस्मिन् परलोके गामुकं गन्तारं कः प्रतिपद्यताम् स्वीकरोतु, न कोऽपीत्यर्थः, परलोकादेर्धर्मादिमूलत्वात्तदभावात्तदभाव इतिभावः ॥२४॥

धर्माभावादेव परलोकस्याप्यभाव इत्याह-

**अभ्येतु को वा परलोकसत्त्वं, प्रामाणिकोऽप्यत्र विना प्रमाणम् ।**
**बलीयसी हि स्फुटचक्षुराढ्यप्रवृत्तिरेषा तदभावमाह ॥२५॥**

अभ्येत्विति-को वा प्रामाणिकः प्रमाणं विना परलोकस्य जन्मान्तरस्य स्वर्गादेर्वा सत्त्वमभ्येतु स्वीकरोतु ? न कोऽपीत्यर्थः, नन्वागमादिरस्त्येव प्रमाणमिति चेत्तत्राह—हि यतः बलीयसी प्रमाणान्तरेभ्यो बलवती एषा प्रत्यक्षेणाऽनुभूयमाना स्फुटा अबाधिता चक्षुषः आढ्या दृढीयसी प्रवृत्तिर्व्यापारः तस्य परलोकस्य अभावमाह साधयति, यदि हि परलोकादिस्स्यात्तर्हि स सद्भिः कथं न चक्षुषा दृश्यते, अतस्तत्सत्त्वाभाव एवेति भावः ॥२५॥

परलोकाभावे च तत्साधनाय व्रतादि निरर्थकमेव सुतरामित्याह—

**तस्याप्यभावात्किमयं वृथाऽऽत्मा, तपोविधानैः परिखेद्यतेऽत्र ।**
**तत्साधनं नो सुखदुःख मुख्य-, भावैर्विधातुं सुधियाऽपि शक्यम् ॥२६॥**

तस्येति–तस्य परलोकस्यापि अभावादसत्त्वाद्धेतोः अत्र लोके अयमात्मा वृथा निष्प्रयोजनमेव तपोविधानैः व्रतादिविधिभिः किं परिखेद्यते, न परिखेदनीय इत्यर्थः, तपोविधानस्य आत्मखेदं विनाऽन्यत्फलं नास्ति, परलोकाभावादिति भावः । सुधियाऽपि सुखदुःखात्मकैर्मुख्यैः सुखदुःखात्मकैरेव मुख्यैर्भावैः तस्य परलोकस्य साधनं समर्थनं न शक्यम्, कस्यापि सुखं कस्यापि दुःखमिति कार्यवैलक्ष्यात् परलोकादिरनुमीयते, अन्यथा तन्निर्हेतुकमेव स्यादिति तर्केण न परलोकसिद्धिरिति भावः ॥२६॥

अत्र कार्य वैलक्षण्यस्य स्वव्यापारविद्याद्यधीनत्वादेव सिद्धिरिति न तदर्थं परलोकावश्यकतेत्याह—

अभिन्नखानि प्रभवत्वसाम्ये, निवेश्यते मूर्धसु रत्नमेकम् ।
परं क्रमे तत्र न पुण्यपाप,-सम्बन्धजन्यं सुखदुःखसत्त्वम् ॥२७॥

अभिन्नेति—अभिन्ने एकस्मिन् खानावाकरे प्रभव उत्पत्तिर्यस्य तद्भावस्तत्त्वस्य साम्ये तुल्यत्वेऽपि मूर्धसु शिरस्सु परमुत्कृष्टम् एकं हीरकादि निवेश्यते धार्यते, परं अन्यत् प्रस्तरादि तत्र क्रमे चरणाधो निवेश्यते, तथा स्थितौ, पुण्यपापयोः सम्बन्धाज्जन्यं सुखदुःखयोः सत्त्वं भावो न । तथा च यथा रत्नादीनां स्वगुणापेक्षयैव ग्राह्यता तथा सुखादेरपि स्वव्यापारापेक्षयैव स्थितिरिति न तत्कारणं पुण्यादीति भावः ॥२७॥

अथ चार्वाक प्रश्नस्य वज्रायुधकृतोत्तरमाह—

इतीरयित्वा विरते च तस्मिन्, वज्रायुधोऽप्यास्तिकमौलिरत्नम् ।
जगाद किं स्वानुभवेऽपि जाग्र-,त्यहो ! विरुद्धं भवतोऽच्यतेऽदः ॥२८॥

इतीति—इत्युक्तप्रकारमीरयित्वोक्त्वा तस्मिन् चार्वाकरूपे देवे विरते विश्रान्ते सति च आस्तिकानां परलोकसत्त्ववादिनां मौलिषु मुकुटेषु रत्नमिव वज्रायुधोऽपि जगाद; किमित्याह—भवता स्वानुभवे जाग्रति स्पष्टं विद्यमानेऽपि सति अदः विरुद्धं स्वानुभवविपरीतं किमिति क्षेपे उच्यते ? अहो आश्चर्यमेतद्यत्स्वानुभवस्य स्वयमेवापलापः ॥२८॥

तत्स्वानुभवमेवाह--

दत्त्वोपयोगं विशदावधेस्त्वं, विद्धि स्वयं प्राग्भवधर्मजन्यम् ।
फलं स्वकस्याऽस्खलिता विचित्रा, यद्दिव्यसम्पत्तिरहार्यरूपा ॥२९॥

दत्त्वेति—त्वं विशदस्य विशुद्धस्यावधेरवधिज्ञानस्योपयोगं दत्वा स्वयमात्मनैव, किं परकीयवृत्तान्तेन विवादास्पदेनेति स्वयमिति काकूक्त्या सूच्यते । प्राग्भवस्य धर्मतः जन्यं जातं फलं विद्धि, किं तत्फलमित्याह-यत्स्वकस्य तव अहार्यरूपा अकृत्रिमा अस्खलिता निरन्तरा विचित्रा नानाविधा दिव्या अलौकिकी सम्पत्तिः, एषा सम्पत्तिस्तव प्राक्कर्मजन्या इति त्वं स्वयमवधिज्ञानेन विद्धि, तथा सति च तव स्वानुभव एव परलोकादौ बलवत्तरं प्रमाणमिति त्वत्कृतप्रमाणान्तरान्वेषणम् "उत्सङ्गे बालो नगरे कोलाहल" इति लोकोक्तिमेवानुसरतीति भावः ॥२९॥

ननु त्वं यदि तद्वेत्सि तर्हि त्वमेव मत्प्राग्भवं वदेति चेत्तत्राह--

बभूविथ प्राच्यभवे पुमांस्त्वं, देवोऽधुना दिव्यमहर्द्धिधाम ।
आत्मा न चेदस्ति कथं तदेतत्-सिद्धिं समाक्रामसि निर्निमित्तम् ! ॥३०॥

बभूविथेति-त्वं प्राग्भवे पुमान्नरः बभूविथ, अधुना दिव्याया महर्द्धेः धामास्पदं देवः असि, चेद्यदि आत्मा नास्ति तदा एतत्सिद्धिं दिव्यसम्पद्रूपाम् निर्निमितं कारणं बिना कथं समाक्रामस्यनुभवसि ? ॥३०॥

एवञ्च परलोकोऽपि तव प्रत्यक्षमेवेत्याह—

नराऽमरप्राच्यभवोपलब्ध्या, स्फुरत्स्वसंवित्ति कृतानुभूत्या ।
प्रत्यक्ष एवाऽस्ति परोऽपि लोक-, स्तवाऽपि किं मन्यस एतकं न ! ॥३१॥

नरेति-पूर्वं नरः पश्चादमर इत्येवं प्राच्यभवस्योपलब्धिर्यतः तादृश्या स्फुरन्त्या स्वस्य संवित्त्या चेतनया कृतयाऽनुभूत्या अनुभवेन तवाऽपि परलोकोऽपि प्रत्यक्ष एव प्रत्यक्षाऽनुभवविषय एव, एतकं विषयं किं कुतो न मन्यसे ? मन्तव्यमेवैतदित्यर्थः । यद्वा किमिति प्रश्ने, प्रत्यक्षानुभूतमपि न मन्यसे चेदेषोऽपलापो महासाहसम् उन्मत्तचेष्टितञ्चेति भावः ॥३१॥

इत्येष वज्रायुधशुद्धवाचा, विबोधिताऽत्मा विबुधोऽभ्यधत्त ।
निष्कारणोपक्रिययाऽनुरक्त-, स्त्वं साधु साध्वत्र महाशयोऽसि ॥३२॥

इतीति-वज्रायुधस्य शुद्धया निर्व्याजया वाचा इत्युक्तप्रकारेण विबोधितः विशिष्टं यथार्थं बोधंगत आत्मा यस्य तादृशः स एष विबुधो देवः निष्कारणं निःस्वार्थं या उपक्रियोपकारस्तया कृत्वा अनुरक्तः प्रीतः सन् । अभ्यधत्त जगाद, किमित्याह-साधु साधु प्रशंसवचनमिदम्, त्वं महाशयः उदारमना असि ॥३२॥

महाशयत्वे हेतुमाह—

समर्थमिथ्यात्वपिशाचकेन, विडम्बितोऽवद्धमवोचमीदृक् ।
सद्धर्ममन्त्राक्षरवाचकेन, सज्जीकृतोऽहं भवतैव नूनम् ॥३३॥

समर्थेति-समर्थेन बलवता मिथ्यात्वेन तद्रूपेण पिशाचकेन पिशाचेन विडम्बितः ग्रस्तः सन् ईदृक् उक्तप्रकारमवद्धमनर्थकमवोचम् । "अनर्थं स्यादनर्थकम्" इत्यमरः । सद्धर्मस्य यन्मन्त्राक्षरं तस्य वाचकेन व्याख्यात्रा भवता एवाहं सज्जीकृतः मार्गस्य मिथ्यात्वपिशाचबहिर्निष्काशनेन स्वस्थो वा कृतः, नूनं निश्चितमेतत् ॥३३॥

प्रसीद विश्राणय सांप्रतं तत्-, सम्यक्त्वमौदार्य्यनिधान ! मे त्वम् ।
इतीरितः सोऽपि तथा चकार, किमर्थं वैमुख्यमहो ! सतां स्यात् ॥३४॥

प्रसीदेति-औदार्यनिधान ! उदारताऽऽकर ! प्रसीद त्वम् मे मम साम्प्रतं, तज्जिनोदिततत्त्वश्रद्धालक्षणं सम्यक्त्वं विश्राणय देहि, इत्येवमुक्तः स वज्रायुधोऽपि तथा तद्याचनानुरूपं

चकार तस्मै सम्यक्त्वमुपादिदेशेत्यर्थः । सत एष स्वभाव एवेत्याह—सतां किमर्थवैमुख्यं किं प्रार्थ्यमानवस्तुदानवैमुख्यम् सम्यक्त्वदानाप्रवृत्तिरूपं स्यात् ? नैव स्यादित्यर्थः । अहो इति हर्षे, सत्प्रवृत्तिर्हर्षदेत्यर्थः ॥३४॥

अथ देवस्यात्मसमर्पणमाह—

क्षेमङ्करक्ष्मापुरुहूतवंश, मुक्तामणे ! मुक्तसमस्तदोष ! ।
अतः परं तेऽस्मि निदेशवर्ती, दुरस्थितोऽप्येष सदा सदान ! ॥३५॥

क्षेमेति—क्षेमङ्कराख्यस्य क्ष्मापुरुहूतस्य महीशस्य वंशे इव वंशे मुक्तामणिरिव, तदामन्त्रणे, मुक्तः समस्तदोषो येन तदामन्त्रणे निर्दोष ? सदान ! दानिन् ? अतः अस्मात्कालात् परमारभ्य दूरस्थितः देवलोकस्थितोऽप्येषोऽहम् ते तव सदा निदेशवर्ती आज्ञाकरोऽस्मि ॥३५॥

आनृण्याय देवकृतमाह—

सम्यक्त्वदातुर्भवतः कथंचि,—न्नैवानृणः स्यामुपकारसार ! ।
सुवर्णरत्नादि तथापि किञ्चि, द्याचस्व मत्तः स्वहिताऽप्रमत्त ! ॥३६॥

सम्यक्त्वेति—उपकार एव सारो यस्य स तदामन्त्रणे, उपकारिन् ! सम्यक्त्वदातुः भवतः कथञ्चित्केनापि दानादिना प्रकारेणानृणः ऋणविमुक्तः नैव स्याम्, सम्यक्त्वदानस्य सर्वश्रेष्ठत्वात्तन्निष्क्रयस्याऽसम्भवादिति भावः, वा तत्प्रत्युपकारस्याशक्यत्वादिति भावः । स्वहिते आत्महिते अप्रमत्त ! अप्रमादिन् ! तथाऽपि आनृण्यासम्भवेऽपि तोषार्थम् मत्तः मत्सकाशात् किञ्चिद्यथेष्टम् सुवर्णरत्नादि याचस्व, ततश्च त्वं कृतकृत्यं मन्येयेत्यर्थः ॥३६॥

वज्रायुधनिस्स्पृहत्वमाह—

श्रुत्वेति देवोक्तिमवक् कुमार,—स्त्वदर्थये सम्प्रति देववर्य ! ।
सम्यक्त्वरत्ने सुकृतोपलब्धे, कुर्याः प्रयत्नं सुमतेऽत्र सम्यक् ॥३७॥

इत्युक्तप्रकारां देवस्य उक्तिम् वचनं श्रुत्वा कुमारो वज्रायुधोऽवगुवाच, किमित्याह—देववर्य ! सम्प्रति त्वत्तव सकाशादर्थये याचे, किमित्याह सुकृतेन पुण्येनोपलब्धे सुमते ! अत्यभीष्टे यद्वा सुष्ठु मतिर्यस्य तत्सम्बोधने हे सुमते वा अत्रास्मिन् सम्यक्त्वरूपे रत्ने भावरत्ने सम्यक् प्रयत्नमाराधनादिरूपं कुर्याः ॥३७॥

॥ त्रिभिर्विशेषकम् ॥

देवो न्यगादीत् किमिवार्थितं ते, स्वार्थो ममैवैष महानुभाव ! ।
किञ्चित्तदानृण्यकृते परं मे, नाथापरं नाथ ! सुवृत्तपान्थ ! ॥३८॥

देवइति—देवः न्यगादीत्, किमित्याह—महानुभाव ! महाप्रभाव ! एष सम्यक्त्वे प्रयत्नः मम एव स्वार्थः, न तु तव, अतएव, ते तव किमिवार्थितं, न किमपि याचितं तवैतत्, तव स्वार्थो

हि तव याचितमिति भावः। नाथ! सुवृत्तस्य सच्चारित्रस्य पान्थ! तत्तस्मात् मे मम आनृण्यकृते ऋणमुक्तये अपरमन्यत्किञ्चित् परमुत्कृष्टम् वस्तु नाथ याचस्व ॥३८॥

अथ देवस्यादत्तमऽप्रार्थितदानमाह-

इत्यर्थनायां विमुखे कुमारेऽप्यस्मिन्नलंकारसमुच्चयं सः।
दिव्यं प्रदाय त्रिदिवं जगाम, तद्वर्णनातत्परवाग्विलासः ॥३९॥

इत्येवमर्थनायां याचने अस्मिन् कुमारे वज्रायुधे विमुखेऽप्रवृत्ते सति अपि स देवः दिव्यमलौकिकमलङ्कारस्य भूषणस्य समुच्चयं राशिं प्रदाय, तस्य वज्रायुधस्य वर्णनातत्परः गुणकीर्तनप्रवृत्तो वाचां विलासो व्यापारो यस्य स तादृशः वज्रायुधगुणान् वर्णयन् सन् त्रिदिवं स्वर्गम् जगाम ॥३९॥

ईशानकल्पप्रभुरप्यमुष्मा-, देतत्प्रशंसां विहितां निशम्य।
अनागतं तीर्थकरं स्वचित्ते, संभाव्य तुष्टाव सुतुष्टचित्तः ॥४०॥

ईशानेति-ईशानकल्पस्य प्रभुरिन्द्रोऽपि अमुष्माद्देवाद्विहितां कृतामेतस्य वज्रायुधस्य प्रशंसां निशम्य स्वचित्ते अनागतं भाविनं तीर्थकरं सम्भाव्य संतुष्टचित्तः सन् तुष्टाव प्रशशंस ॥४०॥

प्रहेलिकाभिः पदशालिनीभिः, प्रश्नोत्तरैश्चापि बुधैर्मतार्थैः।
विलासिनीभिः सह संश्रिताभिः, वज्रायुधः कालमवाहयत् सः ॥४१॥

प्रहेलिकाभिरिति-स प्रस्तुतो वज्रायुधः मतार्थैः इष्टैः प्रामाणिकैः बुधैः सह प्रहेलिकाभिः पदशालिनीभिः मनोहराभिः प्रश्नोत्तरैश्चापि संश्रिताभिराश्रिताभिः विलासिनीभिर्विलासशीलाभिः नारीभिश्च सह कालम् अवाहयद्यापयति स्म इति ॥४१॥

प्रोल्लासयन् कामिमनांसि कामं, मानं निरस्यन्नपि मानिनीनाम्।
उन्मादयन् भृङ्गकुलानि पुष्पै-, रन्येद्युरागात् स ऋतुर्वसन्तः ॥४२॥

प्रोल्लासयन्निति-अन्येद्युः स प्रसिद्धः ऋतुः वसन्तः कामिनां पुंसां मनांसि कामं पर्याप्तम् प्रोल्लासयन् मदयन् मानिनीनाम् मानशीलानां नारीणाम् मानं अहंकारं प्रणयकलहं निरस्यन् मज्जन्नपि, तस्य कामोद्दीपकत्वादिति भावः। पुष्पैः पुष्परसैः कृत्वा भृङ्गकुलानि उन्मादयन्नागात् ॥४२॥

बन्धूकबन्धूनि विकस्वराणि, भवन्ति चैतानि न किंशुकानि।
वनस्थली मूर्धनि किन्तु धत्ते, सिन्दूरपूरं मधुकान्तदत्तम् ॥४३॥

बन्धूकेति-बन्धूकबन्धूनि बन्धुजीवपुष्पाणि "रक्तकस्तु बन्धूको बन्धुजीवक" इत्याहः। विकस्वराणि भवन्ति, एतानि किंशुकानि पलाशकुसुमानि न, वसन्ते किंशुकविकाशाभावादिति

भावः । किन्तु तथापि वनस्थली काचित्स्त्री च मधुना वसन्तरूपेण कान्तेन दत्तम् सिन्दूरपुरम् सिंदूरारुणपुष्पसमृद्धिं सिन्दूरञ्च मूर्धनि सीमन्ते च धत्ते धारयति, अत्र विशेषणसाम्याद्वन-स्थल्यां स्त्रीव्यवहारप्रतीतेः समासोक्तिरलङ्कारः ॥४३॥

कर्णेऽमृतध्वानविधानहेतो-, र्न कालिमाऽङ्गे यदि कोकिलस्य ।
स्याद् दृष्टिदोषेण तदा जनानां, विपत्तिरेतस्य न संशयोऽत्र ॥४४॥

कर्णेति—कर्णे अमृतमिवेष्टस्य ध्वानस्य कुहूरवस्य विधानहेतोर्विधायकस्य कोकिलस्याङ्गे कालिमा श्यामता न स्याद्यदि तदा जनानां दृष्टिदोषेण अवलोकनभ्रमेण एतस्य कोकिलस्य विपत्तिर्विनाशः स्यात्। कृष्णवर्णातिरिक्तानां सर्वेषां पुष्पाणां मध्ये स्थिते कोकिले श्यामताऽभावे पुष्पेभ्यो विवेकाऽसम्भवादिति भावः। अत एव, अत्र कोकिलविपत्तौ न संशयः। कोकिल-स्वर सम्पत्पुष्पसम्पच्च प्रादुरभूदिति यावत् ॥४४॥

विहाय मानं दयितैः सहाशु, प्रेमाणमादद्ध्वमयं समेतः ।
प्राणान् मधुर्वोऽपरथा निहन्ता, कान्ताहितं कोकिल इत्यवादीत् ॥४५॥

विहायेति—कोकिलः कान्ताभ्यो हितमित्यवादीत्, इतीति किमिति चेत्तदाह—मानं विहाय दयितैः प्रियैः सह आशु न तु विलम्बेन प्रेमाणं प्रीतिं आदद्ध्वम् कुरुत; अन्यथा मानाग्रहे, समेतः समुपस्थितोऽयं मधुः वसन्तः "मधुर्वसन्ते चैत्रे च" इत्यमरः। वः युष्माकम् प्राणान् निहन्ता हनिष्यति, तस्यात्युद्दीपकत्वादिति भावः। वसन्ते कोकिलस्वरं श्रुत्वा मानिन्या मानभङ्गो जात इति भावः। अत्र कोकिलस्य तथोक्त्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥४५॥

न मानमत्याक्षुरनेकशोऽपि, दूतीभिरुक्ता अपि सामपूर्वम् ।
प्रकुप्य यास्ता मदनोपतप्ता मधौ प्रियान् स्वान् स्वयमेव भेजुः ॥४६॥

नेति—दूतीभिः सामपूर्वम् अनुकूलयितुं मृदुतया अनेकशः उक्ता बोधिता अपि याः स्त्रियः प्रकुप्य प्रणयकोपेन मानं नात्याक्षुः ताः स्त्रियः मधौ वसन्ते मदनेन कामिनोपतप्ताः सत्यः स्वयमात्मना एव न तु अनुनयादिना, स्वान् प्रियान् भेजुः सेवयामासुः, साम्नाऽवशो हि दण्डेन शाम्यतीति क्षुद्रता सूचितेति ॥४६॥

अथानेन सुदर्शनायाः वज्रायुधसमीपागमनमाह—

इतीदृशेऽस्मिन्नृतुराजराज्ये, प्रवर्तमाने कुतुकाऽसमाने ।
सुदर्शना रूपसुदर्शनाऽसौ, पणाङ्गनानङ्गशरासयष्टिः ॥४७॥
पाणौ दधाना पटलीं सुमानामुपेत्य वज्रायुधमाः! कुमारम् ।
सुमायुधश्रीजयिनं श्रियेति, कृताञ्जलिर्विज्ञपयाम्बभूव ॥४८॥ युग्मम् ।

इतीति—इतीत्थम् कुतुकेन कौतूहलेनासमानेऽनुपमे ईदृशे पूर्वोक्तप्रकारे अस्मिन् ऋतुराजस्य वसन्तस्य राज्ये शासने प्रवर्त्तमाने सति अनङ्गस्य कामस्य शरासस्य शरासनस्य धनुषः यष्टिरिव युवजनमोहकरत्वादिति भावः । रूपेण सुदर्शना दर्शनीया पणाङ्गना रूपजीवा रूपजीविनी असौ दासी सुदर्शना तदाख्या पाणौ सुमानां पुष्पाणां पटलीं समूहं दधाना सती श्रिया लक्ष्म्या कुसुमायुधस्य कामस्य श्रिय जयिनमधःकारकम् वज्रायुधम् कुमारमुपेत्य कृताञ्जलिः अञ्जलिः बद्ध्वा श्राः हर्षतः इति वक्ष्यमाणं विज्ञपयाम्बभूव ॥४७॥४८॥

तद्विज्ञप्तिमेवाह—

समागतेऽस्मिन्नपि पुष्पकाले, प्रफुल्लपुष्पावलिशालमाने ।
लक्ष्मीवती ते महिषी कुमार !, प्रियं मया विज्ञपयत्यदस्त्वाम् ॥४९॥

समागत इति—कुमार ! अस्मिन् प्रफुल्लाभिर्विकसिताभि· पुष्पावलिभिः शालमाने शोभमाने पुष्पकालै वसन्ततौं समागते सति, ते तव महिषी पट्टराज्ञी लक्ष्मीवती तदाख्या मया कृत्वा प्रियं त्वामदः एतद्विज्ञापयति इति ॥४९॥

का सा विज्ञप्तिरित्याह—

प्रभो ! वनं शूरनिपातसंज्ञं, पौष्पै रजोभिः स्खलदङ्गभृङ्गम् ।
द्रष्टुं भवद्भिः सममेव गत्वा, चेतः पथे कौतुकमद्य नोऽस्ति ॥५०॥

प्रभो इति प्रभो ! स्वामिन् ! अद्य नोऽस्माकम् चेतः पथे चेतसि, पौष्पैः पुष्पसम्बन्धिभिः रजोभिः परागैः स्खलदङ्गाः आवृताङ्गाः भृङ्गाः यस्मिन् तत्तादृशम् शूरनिपातसंज्ञं वनं भवद्भिः सममेव, नत्वन्यथा, गत्वा द्रष्टुं कौतुकमुत्कण्ठाऽस्ति ॥५०॥

अस्त्वेवमित्यभ्युपगत्य तस्या, वाचं कुमारः प्रतिपत्तिसारः ।
उद्यानमानन्दपरिष्कृतस्त,-द्ययौ परीवारयुतस्तदैव ॥५१॥

अस्त्विति— एवं त्वदुक्तप्रकारमस्तु इत्येवं तस्याः सुदर्शनायाः वाचमभ्युपगम्य स्वीकृत्य प्रतिपत्तिसारः मतिश्रेष्ठकुमारः वज्रायुध· परीवारयुतः आनन्दपरिष्कृतः हर्षितः तदा तत्कालमेव तदुद्यानं शूरनिपातसंज्ञं ययौ, नहि प्रियः प्रियायाः प्रार्थनां विधुरयतीति भावः ॥५१॥

लक्ष्मीवतीमुख्यमनोज्ञदेवी,-शतानि सप्ताऽपि तदाऽन्वयुस्तम् ।
आकल्परत्नाभरणप्रशस्या-, न्याखण्डलस्त्रैणविडम्बकानि ॥५२॥

लक्ष्मीति—तदा वज्रायुधगमने आकल्पैः वेषरचनाभि· 'आकल्पैः वेषैः 'आकल्पवेषौ' इत्यमरः रत्नाभरणैश्च परिहितैः प्रशस्यानि स्तुत्यानि, अतएव आखण्डलस्येन्द्रस्य स्त्रैणानां स्त्रीसमूहानामिन्द्राणीनां विडम्बकानि तिरस्कारकारीणि सप्त सङ्ख्याकानि लक्ष्मीवती मुख्या यासां मनोज्ञानाम् मनोहराणां देवीनां शतानि तं वज्रायुधमन्वयुः ॥५२॥

वनं वर्णयति—

माकन्दमञ्जर्युपभोगहृष्टः, पुंस्कोकिलः कूजति यत्र तारम् ।
वज्रायुधस्य क्षितिपालसूनो,—रभ्यागमस्वागत पृच्छयेव ॥५३॥

माकन्देति—यत्र वने क्षितिपालसूनो राजपुत्रस्य वज्रायुधस्य अभ्यागमस्य स्वागतपृच्छया स्वागतप्रश्नेनेव माकन्दस्याम्रस्य मञ्जरीणामुपभोगेन हृष्टः मत्तः पुंस्कोकिलः कोकिलः तारमुच्चैः कूजति ॥५३॥

पुष्पाणि यस्मिन्मकरन्दजातं, श्च्योतन्ति वातापहतानि शीतम् ।
श्रमापनोदाय नृपात्मजस्य, समागतस्येव दिशन्ति पाद्यम् ॥५४॥

पुष्पाणीति—यस्मिन् वने वातैः पवनैः अपहतानि कम्पितानि अतएव शीतम् शीतलं मकरन्द-जातं इशपुरंश्च्योतन्ति स्रवन्ति पुष्पाणि, समागतस्य नृपात्मजस्य श्रमस्याध्वखेदस्यापनोदाय दूरीकरणाय पाद्यं पदार्थमुदकमिव दिशन्ति कल्पयन्ति । अभ्यागताय स्वागतं गिरन्ति पाद्यञ्च समर्पयन्ति इति गृहीणामतिथिसमाचार इति भावः ॥५४॥

॥ त्रिभिर्विशेषकम् ॥

श्रान्तः स पुष्पावचयं प्रकुर्वन , दोलां परिक्रीडितकेन चाऽपि ।
सहाऽबलाभिर्जलकेलिहेतोर्वापीमचालीदचलप्रतिष्ठः ॥५५॥

श्रान्त इति—परिक्रीडितकेन क्रीडया पुष्पावचयम् तदाख्य क्रीडाम् दोलां प्रेंखा दोलामा-न्दोलनक्रीडाञ्चापि 'दोला प्रेंखादिका' इत्यमरः । प्रकुर्वन् श्रान्तः क्लान्तः अचलप्रतिष्ठः स्थिर-मर्यादः स वज्रायुधः अबलाभिर्नारीभिः सह जलकेलिहेतोः जलक्रीडार्थम् वापीं प्रत्यचालीत्, स्नानेन हि खेदभङ्ग इति भावः ॥५५॥

अथ वापीं वर्णयति—

विनिर्मिमाणाः कमलोपभोगं, सरस्वतीब्रह्मपदाधिवासाः ।
वलक्षपक्षद्वयचारुरूपाः, खेलन्ति यस्यां खलु राजहंसाः ॥५६॥

विनीति—यस्यां वाप्यां वलक्षेन धवलेन पक्षद्वयेन गरुद्द्वयेन चारुरूपा मनोहरा काराः "वलक्षो धवलोऽर्जुन" इत्यमरः । 'गरुत्पक्षच्छदाः' इत्यमरः । राजहंसाः सरस्वत्याः ब्रह्मणश्च पदेषु चरणेषु अधिवासः वासः येषां ते तादृशाः, तद्वाहनत्वादिति भावः । कमलस्योपभोगं, भक्षणं विनिर्मिमाणाः कुर्वाणाः सन्तः खलु क्रीडन्ति, तत्र वाप्यां विवेशेति अग्रेतनेनान्वयः ॥५६॥

वज्रायुधस्त्रैणमुखेन्दुभासा, संकोचमापुः कमलानि यस्याम् ।
विरोधिवर्गेऽभ्युदयं प्रपन्ने, क्व वा विकाशः कमलाकराणाम् ? ॥५७॥

वज्रेति—यस्यां वाप्याम् वज्रायुधस्य स्त्रैणस्य स्त्रीसमूहस्य मुखेन्दुना भासा कान्त्या कम-

लानि संकोचमशोभमानत्वमापुः प्रापुः, कमलापेक्षया तन्मुखानामधिकसुन्दरत्वादितिभावः। इन्दुभासा च कमलसंकोच एव। तदेव श्लेषमूलेनार्थान्तरन्यासेनाह–विरोधिवर्गे शत्रुवर्गे अभ्युदयम् उन्नतिमुदयञ्च प्रपन्ने प्राप्ते सति कमलाकराणां कमलसमूहानाम्, अथ च कमलायाः लक्ष्म्याः आकराणां निधीनां धनाढ्यानामिति यावत् क्व वा विकाशः प्रफुल्लता उल्लासो वा न क्वापीत्यर्थः ॥५७॥

**समीरसम्पातसमुत्थलोलकल्लोलदम्भात् सलिलानि यस्याः।**
**वज्रायुधस्याऽऽपततः कुमारस्याऽभ्युत्थितिं चक्रुरिव प्रमोदात् ॥५८॥**

समीरेति— यस्याः वाप्याः सलिलानि प्रमोदात्महाजनागमनहर्षात् समीरस्य वायोः सम्पाताद्वेगेन चलनाद्धेतोः समुत्थस्योत्पन्नस्य लोलस्योद्गच्छतः कल्लोलस्य महातरङ्गस्य दम्भा द्व्याजात् आपततः स्वयमागच्छतः कुमारस्य वज्रायुधस्य अभ्युत्थितिमभ्युत्थानं चक्रुरिव। महाजनं दृष्ट्वा अभ्युत्थानस्य शिष्टाचारत्वादितिभावः। अपह्नुवोत्प्रेक्षाऽलङ्कारः ॥५८॥

**समर्प्य वस्त्राभरणानि दास्याः, संवीय धौतांशुकमेकमेव।**
**रतेः सपत्नीभिरिव स्वभासा, तस्यां स पत्नीभिरमा विवेश ॥५९॥**

समर्प्येति—तस्यां वाप्यां स वज्रायुधः वस्त्राभरणानि दास्याः समर्प्य एकं धौतांशुकं धौतवस्त्रमेकं संवीय परिधाय स्वभासा स्वकान्त्या रतेः कामप्रियायाः सपत्नीभिः प्रतिस्पर्धिनीभिरिव पत्नीभिरमा सह, "अमा सहसमीपयो" रित्यमरः। विवेश ॥५९॥

॥ चतुर्भिः कलापकम् ॥

अथ तेषां जलक्रीडां वर्णयति—

**प्रस्पर्धमानं मम लोचनाभ्यां, दूरादभूदेतदिति प्रकोपात्।**
**उपेत्य काचित् परिगृह्य तत्र, स्वपाणिपद्मेन बिभेद पद्मम् ॥६०॥**

प्रेति मम लोचनाभ्यां प्रस्पर्धमानम् साम्याद् द्विषदेतत्पद्मं दूरादभूत् दूरं गतम्, न हि द्वेषिणोरेकत्र स्थितिरिति भावः। इति हेतोः प्रकोपात्क्रोधात् काचिदुपेत्य समीपमेत्य स्वपाणिपद्मेन परिगृह्य तत्र वाप्यां पद्मं बिभेद त्रोटयामास। समस्य समेन निग्रहः शोभते इति भावः ॥६०॥

**हरिप्रियाऽस्मिन् वसतीति सत्या, प्रसिद्धिरास्ते वितथाऽथवा सा।**
**इति स्वयं काचन तत्र पद्मं, विलोकयामास समन्ततोऽपि ॥६१॥**

हरीति—सा हरिप्रिया लक्ष्मीः अस्मिन् पद्मे वसतीति प्रसिद्धिः वार्ता तस्याः पद्मालया इत्यभिधानादिति भावः। सत्या आस्ते, अथवा वितथा मिथ्या इति हेतोः तत्र वाप्यां काचन स्त्री स्वयं समन्ततः सर्वतोऽपि पद्मं विलोकयामास ॥६१॥

श्वासान्मदीयादधिकं किमस्य, स्यात्सौरभं न श्विदिति स्वतोऽपि ।
प्रतीतिमाधातुमजिघ्रदेका, तत्राऽऽयताक्षी प्रचितत्य पद्मम् ॥६२॥

श्वासानिति—मदीयात् श्वासान्निःश्वासानिलात् तासां पद्मिनीत्वादिति भावः । अस्य पद्मस्य सौरभम् आमोदः किमिति प्रश्ने । अधिकं स्यात् श्विदथवा न इति सन्देहात्तत्र वाप्यां काचनैका आयताक्षी दीर्घाक्षी स्वतोऽपि पद्मं प्रवितत्योद्दाह्य प्रतीतिमाधातुं निश्चेतुमजिघ्रत घ्राणविषयमकरोत् ॥६२॥

कस्तूरिकाकुंकुममिश्रतोयैः, सम्पूर्य सम्पूर्य सुवर्णशृङ्गाः ।
वज्रायुधस्ता असिचत् सुमेषोः, सन्तापसम्भारमिव व्युदस्यन् ॥६३॥

कस्तूरीति—वज्रायुधः कस्तुरिकाभिः कुङ्कुमै घुसृणैश्च मिश्रैस्तोयैः सुवर्णस्य शृङ्गात् सेचनसाधननालाकारयन् विशेषान् । सम्पूर्य सम्पूर्य सुमेषोः कामस्य सन्तापं व्युदस्यन् निरस्यन्निव ताः स्त्रियः असिचत् सिञ्चति स्म ॥६३॥

इदं विशालं यदि वा मदीये, नेत्रे विशाले इति तत्र काचित् ।
निर्णेतुमादाय सरोजपत्रं, ममौ समाभ्यां स्वविलोचनाभ्याम् ॥६४॥

इदमिति—इदं पद्मपत्रं विशालं महत्, यदिवा मदीये नेत्रे विशाले इति निर्णेतुम् निश्चेतुम् काचित्तत्र वाप्याम् सरोजस्य कमलस्य पत्रमादाय मा लक्ष्मीस्तया सहिताभ्यां समाभ्यां सश्रीकाभ्यां स्वविलोचनाभ्यां ममौ माति स्म ॥६४॥

सुवर्णशृङ्गीजलसंप्रयोगैः, सेक्तुं प्रवृत्ता प्रियमेव काचित् ।
पुनर्निवृत्तेति विचिन्त्य तत्र, जडैर्न सङ्गः कृतिनोऽस्य कार्यः ॥६५॥

सुवर्णेति— तत्र वाप्यां काचित् सुवर्णशृङ्ग्याः जलस्य सम्प्रयोगैः व्यवहारैः कृत्वा प्रियं वज्रायुधमेव सेक्तुं प्रवृत्ता, अस्य कृतिनो विदुषो विहितसेचनस्य वज्रायुधस्य जडैः मूर्खैरथ च डलयोः साम्यात् जलैश्च सङ्गः न कार्यः इति विचिन्त्य पुनः निवृत्ता जलसेचनाद्विरतेत्यर्थः ॥६५॥

स्नानं विनिर्माय विनिर्गतास्ता, वापीसमीपे विबभुर्निविष्टाः ।
वासोभिरार्द्रैरपि निर्जरेन्द्र–, वामा इव व्योमनदीजलार्द्राः ॥६६॥

स्नानमिति—स्नानं विनिर्माय कृत्वा विनिर्गताः जलादबहिर्निःसृताः उपर्यायाताः ताः स्त्रियः वापीसमीपे निविष्टाः उपविष्टाः सत्यः आर्द्रैः क्लिन्नैः वासोभिः वस्त्रैरपि व्योमनद्याः आकाशगङ्गाया जलेनार्द्राः निर्जरेन्द्रस्य देवेन्द्रस्य वामाः स्त्रिय इव विबभुः शुशुभिरे ॥६६॥

इत्यम्बुखेलां रचयंश्चिराय, वज्रायुधः स्थैर्यमधत्त धीमान् ।
ललाटदृक्तीव्रललाटदृष्टि-, क्रोधाग्निभीत्येव दशार्द्धबाणः ॥६७॥

इतीति—इत्युक्तप्रकारेण चिराय अम्बुखेलां जलक्रीडां रचयन् कुर्वन् धीमान् वज्रायुधः ललाटदृशः त्रिनेत्रस्य शम्भोः तीव्राया उत्कण्ठायाः ललाटस्य दृष्टेः तृतीयनेत्रस्य क्रोधाग्नेः भीत्या भयेन दशार्धबाणः पञ्चबाणः काम इव स्थैर्यं निश्चलत्वं विरतिं वाऽधत्त ॥६७॥

प्राग्जन्मदुर्हृद् दमितारिजीवो, भवं भ्रमित्वा निजकर्मशिष्ट्या ।
अजायत स्वर्गिभवे स विद्यु-, द्दंष्ट्राभिधो दिव्यमहर्द्धिधाम ॥६८॥

प्रागिति—प्राग्जन्मनः पूर्वभवस्य दुर्हृत् अपराजितशत्रुः दमितारेः जीवः स निजकर्मणः शिष्ट्या शासनेन परिपाकेनेति यावत्, भवं भ्रमित्वा स्वर्गिभवे देवभवे दिव्यानां महर्धीनां धामास्पदं विद्युद् दंष्ट्राभिधः अजायत जज्ञे ॥६८॥

तत्र स्थितं तं रममाणमेष, प्रेक्ष्याभवत् क्रोधविलोहिताक्षः ।
चिक्षेप वापीजलसञ्चरिष्णौ, तस्मिन् कुमारे स तदैव शैलम् ॥६९॥

तत्रेति—तत्र शूरनिपातवने वाप्यां स्थितं रममाणं क्रीडन्तम् तमपराजितजीवं वज्रायुधं प्रेक्ष्य एष स विद्युद्दंष्ट्रः क्रोधेन विलोहिताक्षः रक्तनेत्रोऽभवत्, अतः वापीजलेषु सञ्चरिष्णौ रममाणे तस्मिन् कुमारे वज्रायुधे तदैव शैलं शिलाखण्डं चिक्षेप, हन्तुमिति शेषः । वैरं हि भवान्तरेऽपि न शाम्यतीति भावः ॥६९॥

पादौ तदीयावपि नागपाशै-, र्बबन्ध पाशीव स देवपाशः ।
भवान्तरस्य स्फुरति प्रकोपे, किं किं विधत्ते नहि शक्तिचञ्चुः ॥७०॥

पादाविति—स देवपाशः कुदेवः पाशी वरुण इव "प्रचेता वरुणः पाशी" इत्यमरः । नागपाशैः तदाख्यपाशविशेषैः तदीयौ वज्रायुधसम्बन्धिनौ पादौ बबन्ध । तत्कृतमीदृशमुपद्रवं समर्थयति—भवान्तरस्य प्राग्भवसम्बन्धिनः शत्रोः प्रकोपे स्फुरति उदीर्णे सति शक्तिचञ्चुः समर्थः शत्रुः किं किं नहि विधत्ते ? अपि तु यथाशक्ति सर्वप्रकारोपद्रवं करोति इत्यर्थः ॥७०॥

सञ्चूर्णयामास पतन्तमद्रिं, स मुष्टिना मोदकवत् कुमारः ।
आशीविषांस्तानपि वैरिराज्ञी- र्वेणीरिव स्मैष रयाच्छिनत्ति ॥७१॥

समिति—स कुमारः वज्रायुधः पतन्तमद्रिं मुष्टिना मुष्टिघातेन मोदकवल्लड्डुकवत् अनायासेन सञ्चूर्णयामास, तथा एव वज्रायुधः तान् वैरिप्रदत्तान् आशीविषान्नागपाशानपि वैरिणः राज्ञ्याः वेणीः धम्मिलानिव रयाज्झटिति छिनत्ति स्म । प्रतीकारविलम्बो ह्यनर्थकारणमिति भावः ॥७१॥

ततः सदारः स च दीर्घिकाया, विनिर्जगामाक्षतविग्रहोऽयम् ।
विस्फूर्त्तिमाक्रामति पुण्यपुण्ये, शरीरभाजां हि न विघ्नभावः ॥७२॥

तत इति–ततः तत्कृतोपद्रवशमनानन्तरम्, सोऽयम् वज्रायुधः सदारः सस्त्रीकः अक्षतविग्रहः अनुपहतशरीर एव दीर्घिकाया वाप्याः विनिर्जगाम निर्गतः। न तु विघ्नेन प्रतिहतः। कुत इति चेत्पुण्यशालिनो विघ्ना नश्यन्ति इत्याह–हि यतः शरीरभाजां पुण्ये पवित्रे निर्मले पुण्ये सुकृतौ सति विघ्नभावः विघ्नक्रिया विस्फूर्तिम् सप्रसरत्वं नाक्रामति न गच्छति ॥७२॥

तदा विदेहेषु जिनान् विनम्य, नन्दीश्वरद्वीपजिनान् निनंसुः ।
व्रजन् बिडौजा निबिडौजसं तं, विलोकयामास लसत्कलत्रम् ॥७३॥

तदेति–तदा तद्दिवसे विदेहेषु महाविदेहेषु जिनान् विनम्य प्रणम्य नन्दीश्वरद्वीपजिनान् निनंसुः नन्तुमिच्छुः व्रजन् गच्छन् बिडौजाः इन्द्रः निबिडौजसं दृढबलं लसन्ती देदीप्यमाना स्त्री यस्य तं सादरमित्यर्थः। यद्वा लसत्कलत्रं सदारं तं वज्रायुधं विलोकयामास ॥७३॥

भवांस्तु चक्री भविता भवेऽत्रेतः पञ्चमे पञ्चम एव चक्री ।
भावी पुनर्भारत एव वर्षे, त्वं षोडशः सात्त्विक ! धर्मचक्री ॥७४॥
इतीरयित्वा प्रणिपत्य भक्त्या, सम्पूज्य देवद्रुमपुष्पजातैः ।
नन्दीश्वरद्वीपमियाय वज्री, वज्रायुधस्त्वात्मनिकेतनं सः ॥७५॥ (युग्मम्)

भवानिति—सात्त्विक ! सत्त्वगुणसम्पन्न ! भवाँस्तु अत्र भवे चक्री भविता, तथा इतः पञ्चमे भवे पञ्चमः चक्री चक्रवर्ति एव, भावी. पुनर्भारते वर्षे एव त्वं षोडशः धर्मचक्री, भावीत्यनुषज्यते, इतीत्थमीरयित्वा कथयित्वा प्रणिपत्य प्रणम्य देवद्रुमस्य कल्पवृक्षस्य पुष्पजातैः पुष्पसमूहैः भक्त्या सम्पूज्य वज्री शक्रः नन्दीश्वरद्विपमियाय ययौ, स वज्रायुधस्तु आत्मनः स्वस्य निकेतनं गृहम्, इयायेति सम्बध्यते ॥७४॥७५॥

क्षेमङ्करः क्षोणिपतिः स काले, लोकान्तिकामर्त्त्यविबोधितः सन् ।
दीक्षां जिघृक्षुर्निजकेऽपि राज्ये, न्यधत्त वज्रायुधमेव पुत्रम् ॥ ७६ ॥

क्षेमेति—काले दीक्षासमये स क्षेमङ्करनामा क्षोणिपतिः नृपः लोकान्तिकामर्त्येन लोकान्तिकदेवेन धर्मतीर्थं प्रवर्त्तयेति विबोधितः सन् अवधिज्ञानेन निजदीक्षासमयं विज्ञाय दीक्षां जिघृक्षुः निजके निजे राज्ये वज्रायुधं पुत्रमेव न्यधत्त न्यवेशयत् ॥७६॥

दानं स सांवत्सरिकं प्रदाय, चारित्रमादत्त विदीर्णरागः ।
अशङ्कमानश्च परीषहेभ्य–, श्चिरं धरित्रीं विजहार देवः ॥७७॥

दानमिति—स क्षेमङ्करनृपः सांवत्सरिकं दानं प्रदाय चारित्रसंयममादचाग्रहीत्, विदीर्णरागः गलितमोहः अत एव परीषहेभ्यः अशङ्कमानःअबिभ्यत् चिरं देवः स तीर्थङ्करः धरित्रीं विजहार विहारमकरोत् ॥७७॥

समागतः क्षीणविघातिकर्मा, भूयः स तत्रैव जगत्त्रयेशः ।
अनन्तविज्ञानमवाप, चक्रे, शक्रैरवक्रैः परमोत्सवश्च ॥ ७८ ॥

समेति— स जगत्त्रयेशः क्षेमङ्करः भूयः पुनस्तत्र मणिसञ्चयपूर्यां समागतः क्षीणं विघातिकर्म यस्य स तादृशः सन् अनन्तविज्ञानं केवलज्ञानमवाप। अवक्रैः नत्रैः भक्तिमद्भिरिति यावत्, शक्रैरिन्द्रैश्च तस्य केवलज्ञानस्य परमोत्सवः चक्रे कृतः ॥७८॥

जगद्गुरुर्वज्रिणि सन्निविष्टे, वज्रायुधे चापि पुरो निविष्टे ।
परोपकाराय दिदेश धर्मं, समग्रभाषानुगया गिरा सः ॥७९॥

जगदिति—स जगद्गुरुः तीर्थङ्करः क्षेमङ्करः वज्रिणीन्द्रे सन्निविष्टे उचितासनोपविष्टे वज्रायुधे चापि पुरोऽग्रे निविष्टे उपविष्टे च सति परोपकाराय समग्रभाषानुगया वागतिशयप्रभावाद् सर्वभाषानुसारिण्या मधुरया गिरा वाण्या, धर्मं दिदेश ॥७९॥

अथ तद्देशनाप्रकारमाह—

दशप्रकारे यतिभिः प्रयत्यं, प्रमादमुत्सृज्य सदैव धर्मे।
शर्मैकहेतौ पुनरेव तत्र, द्वयातिरिक्ते गृहमेधिभिश्च ॥८०॥

दशेति—यतिभिः साधुभिः प्रमादमुत्सृज्य त्यक्त्वा सदैव न तु यदा कदाचिदेव दशप्रकारे धर्मे श्रमणधर्मे शर्मैकहेतौ मोक्षसुखाद्वितीयकारणे प्रयत्यम् व्यवसितव्यम्। गृहमेधिभिः गृहस्थैश्च तत्र दशविधात्मके धर्मे द्वयेनातिरिक्ते अधिके द्वादशविधश्रावकधर्मे प्रयत्यम् ॥८०॥

धर्मं दयामूलमुशन्ति सन्तः, ऋते दयां नैव यतोऽस्ति धर्मः ।
धर्मार्थिना तेन दया विधेया, स्वर्मोक्षसौख्याद्भुतरत्नखानिः ॥८१॥

धर्ममिति—सन्तः साधवः धर्मं दयामूलमुशन्ति कथयन्ति, यतः, ऋते दयां दयामन्तरेण धर्मः नास्ति, तेन हेतुना धर्मार्थिना धर्मनिष्ठेन स्वः स्वर्गश्च मोक्षश्च सौख्यं सुखञ्चेत्येतेषामद्भुतानां रत्नानां खानिराकर इव दया विधेया कर्त्तव्या ॥८१॥

अपास्य लौकायतिकं तमेकं, धर्मं निरस्यन्ति न केचनापि ।
विचार्य्य कार्यः प्रतिपद्यता तत्, स चापि सत्त्वं प्रतिपद्यते यः ॥८२॥

अपास्येति तं तथा प्रसिद्धं लौकायतिकं चार्वाकमेकं अपास्य विहाय केचनाप्यन्ये धर्मं न निरस्यन्ति खण्डयन्ति, सर्वे एव अनुमन्यन्ते इत्यर्थः । तत्तस्मात् 'प्रतिपद्वता बुद्धिमता यो धर्मः सत्त्वं पारमार्थिकतत्त्वं प्रतिपद्यते प्रमाणेन सत्स्वरूपतया सिद्धयति स चापि स एव धर्मः प्रतिपद्वता बुद्धिमता विचार्य कार्यः, न तु गतानुगतिकतया, यद्वा सत्त्वं सत्तां प्रमाणसिद्धत्वं प्रतिपद्यते गच्छति, यः सत्पदार्थः वर्तते, न तु चार्वाकखण्डनेनासत्, तस्याप्रामाणिकत्वादिति भाव. । स-चापि धर्म एव विचार्य न तु गतानुगतिकतया कार्यः ॥८२॥

**कथञ्चिदत्राप्यविचार्य कार्यं, कृतं किमादीनवकृद् न भव्याः ! ।**
**किञ्चामृताम्रक्षितिनायकादे-, रिवानुतापं जनयत्यवश्यम् ॥८३॥**

कथमिति–भव्याः ! अत्रापि लोकेऽपि कथञ्चिदविचार्य सारासारावविमृश्य कृतं कार्यं किम् आदीनवकृत्क्लेशकृत् न ? अपितु परिक्लेशकृदेव, यदुक्तम् "अविवेकः परमापदां पदमि" त्यमरः। "आदीनवः पुमान् दोषे परिक्लेशदुरन्तयोः' इति मेदिनी । "आदीनवाश्रवौ क्लेशं" इत्यमरः । किंच अविचारितकार्यम् अमृताम्रनाम क्षितिनायकादेरिव अवश्यमनुतापं दुःखं जनयति ॥८३॥

**अथ प्रभुं विज्ञपयाम्बभूवुर्वज्रायुधाद्याः प्रणिपत्य सर्वे ।**
**जिनेश्वरामी अमृताम्रभूपादयस्त्वयोदाहरणी कृताः के ? ॥८४॥**

अथेति–अथ उपमानत्वेनामृताम्रनृपं नाम श्रुत्वा सर्वे तत्रोपस्थिताः वज्रायुधाद्याः प्रणिपत्य प्रणम्य विज्ञपयाम्बभूवुः प्रार्थयामासुः, किमित्याह–जिनेश्वर ! त्वया उदाहरणीकृताः दृष्टान्तत्वेनोक्ताः अमी अमृताम्रनृपादयः के ? तद्वृत्तं कथयेति यावत् ॥८४॥

**स्वामी ततः प्राह समस्ति जम्बू-, द्वीपेऽत्र वर्षे भरते त्वपाच्ये ।**
**श्रिया विशाला नगरी विशाला, शालेन तुङ्गेन विशालमाना ॥८५॥**

स्वामीति–ततः तत्प्रश्नानन्तरं स्वामी जिनेन्द्रप्रभुः क्षेमङ्करः प्राह–किमित्याह–अत्र जम्बूद्वीपे भरते वर्षे अपाच्ये दक्षिणे दक्षिणार्द्धे भरतक्षेत्रे इत्यर्थः, श्रिया लक्ष्म्या कृत्वा विशाला उत्कृष्ट–लक्ष्मीसम्पन्नेत्यर्थः । तुङ्गेन अत्युडच्चेन शालेन प्रकारेण. "प्रकारो वरणः शाल" इत्यमरः । विशालमाना शोभमाना विशालपरिमाणवती च विशाला तदाख्या उज्जयिनीत्यपरनामा नगरी अस्ति इति शेषः ॥८५॥

**तत्रावनीशो जितशत्रुनाम्ना, धाम्ना निराशीकृतशत्रुवर्गः ।**
**दिवस्पतिर्जाग्रति यत्र जिष्णौ, व्यर्थं दधे जिष्णुरिति स्वनाम ॥८६॥**

तत्रेति–तत्र विशालायाम् धाम्ना प्रतापेन निराशीकृतः शत्रुवर्गो येन तादृशः जितशत्रुनाम्ना अवनीशः राजा, यत्र यस्मिन् जितशत्रौ जिष्णौ जयनशीले जाग्रति जयोद्यते सति "जिष्णुर्लेखर्षभः

शक्रः शतमन्युर्दिवस्पति' रित्यमरः । दिवस्पतिरिन्द्र. जिष्णुरिति स्वनाम व्यर्थं दधौ । इन्द्रस्य नामैव तत्, जयस्यानेनैव सम्पादनादिति भावः ॥८६॥

**देवी तदीया कनकश्रयभिख्या, बभूव सौन्दर्यगुणैकभूमिः ।**
**तद्रूपसम्पद्विजितैव लीना, रम्भासु रम्भा निजनाम चक्रे ॥८७॥**

देवीति–तदीया तस्य सौन्दर्यस्य गुणानाञ्च एका अद्वितीया भूमिः पात्रम् कनकश्र्यभिख्या देवी बभूव । त०पसम्पदा विजिता तिरस्कृता एव, न तु कारणान्तरतः, रम्भासु कदलीषु लीना एकात्मतां गता रम्भा इति निजनाम चक्रे, स्वर्वेश्यायाः रम्भा इतिनामैतद्धेतुकमिति भावः ॥८७॥

**विश्वम्भरा स्वास्य परेद्युरुच्चै,-र्वितत्य वैभातिककृत्यजातम् ।**
**पूर्वाचलं विस्फुरितप्रतापः, सिंहासनं सूर इवाधितष्ठौ ॥८८॥**

विश्वेति—अपरेद्युरेकदा वैभातिकं प्रातःकालिकं कृत्यजातम्, आवश्यकधर्मक्रियादिकार्यं वितत्य सम्पाद्य विश्वम्भरायाः. पृथिव्या' स्वामी नृपो जितशत्रुः विस्फुरितप्रतापः वर्धमानतेजाः सूरः सूर्यः पूर्वाचलं उदयाचलपर्वतमिव उच्चैः उन्नतं सिंहासनमधितष्ठौ ॥८८॥

**दौवारिकोऽभ्येत्य तदैव भूपं, व्यजिज्ञपद् द्वारि जनाधिनाथ ! ।**
**चतुर्मिता राजसुताः समेता–, स्ते किं प्रवेश्या यदि वा निवर्त्याः ! ॥८९॥**

दौवेति–तदैव सिंहासनाधिष्ठानसमय एव दौवारिक. द्वारपालोऽभ्येत्य भूपं व्यजिज्ञपत, किमित्याह–जनाधिनाथ ! नृप ! द्वारि चतुर्मिता चत्वारः राजसुताः राजपुत्रा. समेता आगताः सन्ति, किमिति प्रश्ने ते राजपुत्राः प्रवेश्याः सभायामानेया. यदि वा निवर्त्या' ? तत्र देवः प्रमाण–मित्यर्थः ॥८९॥

**प्रवेशयाऽऽश्वित्यवनीभुजोक्ते, प्रावीविशत्तानथ वेत्रपाणिः ।**
**नम्रान् विनीतान् सविधासनेषु, न्यवीविशच्चाधिपशासनेन ॥९०॥ ।**

प्रवेशयेति–आशु शीघ्रं प्रवेशय इत्येवमवनीभुजा राज्ञा उक्ते कथिते सति वेत्रपाणिर्द्वारपालः तान् प्रावीविशत्, प्रवेशयामास, अथ प्रवेशनानन्तरम् अधिपशासनेन नृपाज्ञया नम्रान् राज्ञो नमनशीलान्, अत एव विनीतान् विनयवतः तान् राजपुत्रान् सविधासनेषु समीपस्थासनेषु न्यवीविशदुपवेशयामास च ॥९०॥

पप्रच्छ तान् भूमिपतिः प्रसन्नो–, भद्रा ! कुतो यूयमुपागताः स्थ ? ।
कैर्नामभिर्वा प्रथिता जगत्यां, कार्यं च किं शंसत तत्समस्तम् ॥९१॥

पप्रच्छेति–भूमिपतिः नृपः प्रसन्नः सन् पप्रच्छ किमित्याह- भद्राः ! सौम्याः ! यूयम् कुतः स्थानादुपागताः स्थ । वा तथा जगत्यां कैः नामभिः प्रथिताः प्रख्याताः ? किं च कार्यम् प्रयोजनम् ? तत् समस्तं शंसत कथयत ॥९१॥

**अथ राजपुत्रकृतोत्तरमाह—**

**तेषु न्यगादीद् वचनं कनीयान्, भाद्राम्बुदध्वानजये समर्थम् ।**
**पुरं नरेन्द्रोत्तरदिक्पथेऽस्ति, यत्काञ्चनं प्राक् तिलकोत्तरं च ॥९२॥**

तेषु चतुर्षु राजपुत्रेषु कनीयान् कनिष्ठः भाद्रस्य भाद्रपदमासस्याम्बुदस्य मेघस्य ध्वानस्य गर्जनस्य जयेऽभिभवे समर्थम् शक्तम्, मेघगर्जितगम्भीरमित्यर्थः । वचनं न्यगादीत्, किन्तदित्याह–नरेन्द्र ! उत्तरदिक्पथे उत्तरापथे यत्पुरं प्रागादौ काञ्चनं काञ्चनशब्दयुक्तम् तिलक शब्द उत्तरं च यस्मिन् तदभिधानं काञ्चनतिलकेति नाम, तत्पुरमस्ति ॥९२॥

**तत्पत्तनं पालयति स्म राजा, श्रीशत्रुमर्दी प्रवराभिधानः।**
**प्रत्यर्थिनो यस्य निशम्य नाम, निलीय कुञ्जेषु दिनानि निन्युः ॥९३॥**

तदिति–तत् काञ्चनतिलकं नाम पत्तनं नगरम् प्रवरमन्वर्थत्वादुत्कृष्टमभिधानं नाम यस्य स तादृशः श्रीशत्रुमर्दी राजा पालयति स्म । यस्य नृपस्य नाम निशम्य प्रत्यर्थिनः शत्रवः कुञ्जेषु वनगृहेषु निलीय आत्मानं तिरोधाय दिनानि निन्युः, प्रकाशे प्राणनिग्रहसम्भवात्, तस्य महाप्रतापित्वादितिभावः ॥९३॥

**तद्देव्यभूद्रूपवती यथार्था–, भिधा विधातुः प्रथमेव सृष्टिः ।**
**तत्कुक्षिशुक्तिप्रभवा इमेऽपि, विभान्ति मुक्ताफलवत् सुभासः ॥९४॥**

तद्देव्येति–तस्य शत्रुमर्दिनो नृपस्य विधातुर्ब्रह्मणः प्रथमा आद्या प्रधाना वा सृष्टिः कृतिरिव, तदुत्कृष्टायाः अन्यस्याः अभावादिति भावः । रूपवती इति यथार्थाभिधादेवी पट्टराज्ञी अभूत् । तस्या रूपवत्या कुक्षेः शुक्तिरिव प्रभवाः जाता इमे सर्वेऽपि वयम् मुक्ताफलवत् सुभासः स्वच्छच्छवयः विभान्ति । शुक्तेः मुक्ताफलोत्पत्तिरुचितैवेति भावः । उपमा ॥९४॥

**मुख्यः सतां वल्लभदेवराज–, स्ततो द्वितीयः खलु वत्सराजः ।**
**तृतीयको दुर्लभराजनामा, मां कीर्तिराजं चरमं निबोध ॥९५॥**

मुख्य इति—मुख्यः तेषु ज्येष्ठः सतां सज्जनानां वल्लभः देवराजः । यद्वा मुख्यः सतां सत्पुरुषाणां प्रधानः वल्लभो देवराजः । सतां सत्पुरुषाणां चतुर्णां मध्ये मुख्यो ज्येष्ठो वल्लभश्चासौ देवराजश्च वल्लभदेवराजः । तन्नामा । ततः मुख्यापेक्षया खलु द्वितीयः वत्सराजः तन्नामा । तृतीयकः दुर्लभराजनामा, चरमं चतुर्थं कनिष्ठं मां कीर्तिराजं तदाख्यं निबोध ॥९५॥

बाल्ये कलाभ्यासमकार्ष्म सर्वे, परस्परं प्रीतिसमृद्धिभाजः ।
उद्यानदेशेषु विहारकेले-, रनन्तलीलाकलिताश्च लक्ष्म्या ॥९६॥

बाल्ये इति—बाल्ये शैशवे सर्वे वयम् चत्वारोऽपि भ्रातरः परस्परं प्रीतेः समृद्धिभाजः सातिशयस्नेहवन्तः लक्ष्म्या सम्पदा हेतुना उद्यानान्येव देशास्तेषु अनन्ताभिर्लीलाभिः विलासप्रकारैः कलिताः युक्ताः विहारप्रभृतीः केलीः क्रीडाः कलाया विद्यायाः अभ्यासञ्चाकार्ष्म ॥९६॥

मूर्ता उपाया इव साममुख्या, वयं महाराज ! महीभुजां स्मः ।
दानादिधर्मा इव पुण्यभाजां, मुदे न केषां मनसां भवामः ॥९७॥

मूर्ता इति—महाराज ! वयं चत्वारः महीभुजां शत्रुमर्दिनृपाणाम्, आदरार्थे बहुवचनम्, साममुख्याः सामदामदण्डभेदरूपाः उपायाः नीतयः मूर्ताः सविग्रहा इव स्मः । सामादि विधानदक्षा वयमिति यावत् । न तावन्मात्रमेव, किन्तु जनताप्रिया अपीत्याह—पुण्यभाजां दानादिधर्मा इव केषां जनानां मनसां मुदे प्रीतये न भवामः ? अपितु सर्वेषामेव, पुण्यभाजां यथा दानादिधर्मकार्ये प्रीतिस्तथा अस्मासु सर्वेऽपि प्रीतिमन्त इत्यर्थः ॥९७॥

वृद्धत्वमासन्नचरं विचिन्त्य, ज्येष्ठं तनूजं विनिवेश्य राज्ये ।
राजा तपस्यां स्ववशां विधाय, स्वर्लोकलक्ष्मीं कलयाञ्चकार ॥९८॥

वृद्धत्वमिति—राजा श्रीशत्रुमर्दी वृद्धत्वम् आसन्नचरं समीपस्थं विचिन्त्य राज्ये ज्येष्ठं तनूजं पुत्रं देवराजं विनिवेश्य स्थापयित्वा तपस्यां स्ववशाम् अनुष्ठानादिना स्वेष्टफलदायिनीं विधाय स्वर्लोकस्य लक्ष्मीं कलयाञ्चकार स्वर्गं ययावित्यर्थः ॥९८॥

दायादगृध्रैश्छलपक्षपातै-, र्दुराशयैराहितकेलिकामैः ।
राज्यामिषं तस्य गृहीतमाराद्, मायाविनः किं न हि कुर्युरुग्राः ॥९९॥

दायादेति—तस्य देवराजस्य राज्यामिषम् राज्यरूपमांसम्, अनौचित्येन तत्राधिकारे राज्यस्य मांसवदेवानुपभोज्यत्वादिति भावः । दुराशयैः दुरात्मभिः आहितः मनसिकृतः केलिकामः विषयसुखेच्छा यैस्तैः तादृशैः, नतु नीतिमद्भिः पुण्यमतिभिर्वा । छलैः पक्षपातैश्च दायादाः सुतबान्धवाः 'दायादौ सुतबान्धवौ' इत्यमरः । कुटुम्बिनो गृध्रा इव, ग्राह्याग्राह्यविचारशून्यत्वादिति भावः । तैः आरादनतिदूरे एव काले गृहीतं स्ववशीकृतम् । शठानामेतदकार्यं सुकरमेवेत्याह—उग्राः प्रचण्डाः स्वार्थान्धतया विवेकशून्याः मायाविनः छलपराः किं नहि कुर्युः अपि तु सर्वमेव परस्वहरणादिकं कुर्युरेवेत्यर्थः ॥९९॥

सोऽयं विनिर्गत्य ततः पुरात् त्वां, सिषेविषुर्देव ! समागतोऽस्ति ।
त्रिभिः समेतोऽवरजैस्त्रिनेत्रो-, नेत्रैरिवोपेक्षित कामचारैः ॥१००॥

सोऽयमिति—सोऽयं देवराजो नृपः ततः पुरात् काञ्चनतिलकपुरात् विनिर्गत्य बहिर्भूय, देव ! त्वां सिषेविषुः सेवितुमिच्छुः उपेक्षितः तिरस्कृतः दूरमुत्सारितो वा कामचारः तथा कामस्य मदनस्य चारः प्रसरः स्वैरप्रवृत्तिः यैः तैः तादृशैः आज्ञावशवर्तिभिः, नेत्रैः त्रिनेत्रः शम्भुरिव अवरजैरनुजैः त्रिभिः समेतः सहितः समागतोऽस्ति ॥१००॥

ईदृक् तदीयं वचनं निशम्य, प्रहृष्टचेता नृपतिः प्रसन्नः ।
अतिष्ठिपत् तांश्चतुरोऽपि पार्श्वे, यथोचितां वृत्तिमसौ विधाय ॥१०१॥

ईदृगिति—ईदृक् पूर्वोक्तप्रकारं तदीयं राजपुत्रोक्तं वचनं निशम्य प्रहृष्टचेताः तदीयविनयानुनीतहृदयः अत एव प्रसन्नः असौ नृपतिः प्रसन्नः सन् तांश्चतुरोऽपि राजपुत्रान् यथोचितां वृत्तिं जीविकां विधाय कृत्वा, राजपुत्रानुरूपकार्ये सवेतनं नियोज्येत्यर्थः । पार्श्वे स्वसमीपे एव न तु दूरे भृत्यवत् । अतिष्ठिपत् स्थापितवान् ॥१०१॥

क्रमेण कालेऽपि कियत्यतीते, नियोजयामास नृपोऽपि चैतान् ।
निजाङ्गरक्षाकरणे विशुद्धान्, विशुद्धशीला हि भवन्ति मान्याः ॥१०२॥

क्रमेणेति-- क्रमेण कियत्यपि कालेऽतीते गते सति नृपः जितशत्रुनृपः विशुद्धान् निष्कपटान्, विज्ञायेति शेषः । तान् राजपुत्रान् निजाङ्गरक्षाकरणेऽपि अङ्गरक्षकत्वेनापि नियोजयामास विश्वासपात्राणामेवाङ्गरक्षणे नियोगः नत्वपरिचितानामिति भावः, ननु ! किमिति तेषां कृते ईदृशमहत्त्वादानमिति चेत्तत्राह—हि यतः विशुद्धशीलाः निष्कपटचरित्राः मान्याः सत्कार्याः भवन्ति ॥१०२॥

भुजैरिव श्रीपतिरोजसाऽऽढ्यैर्वक्त्रैः स्वयम्भूरिव वेदमूलैः ।
नृपः प्रजापालनबद्धकक्षा-, रेजे चतुर्भिः सविधस्थितैस्तैः ॥१०३॥

भुजैरिति–देहलीदीपकन्यायेन ओजसाऽऽढ्यैरित्यस्य भुजैर्वक्त्रैश्चेत्युभयत्रान्वयः, तथा च भुजैरोजसाऽऽढ्यैः पराक्रमशालिभिः श्रीपतिः विष्णुरिव, तस्य चतुर्भुजत्वादिति भावः । वेदस्य मूलैः प्रथमप्रकाशकैः ओजसा दीप्त्या आढ्यैः सम्पन्नैः वक्त्रैः मुखैः स्वयम्भूरिव चतुराननो ब्रह्मा इव, सविधस्थितैः समीपस्थैः तैः चतुर्भिः राजपुत्रैः प्रजापालने बद्धकक्षः बद्धपरिकरः, तत्पर इति यावत्, नृपः जितशत्रुः रेजे । मालोपमाऽलङ्कारः ॥१०३।

अथ प्रसंगाद् ग्रीष्मर्तुं वर्णयति—

प्रोद्दामतिग्मांशु करोऽपरेद्यु-, र्निदाघकालः सहसापपात ।
न यत्र जाड्यं विदुषीव किञ्चित्प्रवर्तते ध्वस्तकला विलासम् ॥१०४॥

प्रोद्दामेति— अपरेद्युः यथाकालम्, प्रोद्दामा उत्कटा दुःसहत्वात्, तिग्मांशोः सूर्यस्य कराः किरणाः यस्मिन् स तादृशः निदाघकालः ग्रीष्मर्तुः सहसा अतर्कित एव आपपात स्वयं समागतः। यत्र ग्रीष्मर्तौ विदुषि पण्डिते इव ध्वस्तः कलाविलासः चन्द्रकलाविकाशः विभ्रमः येन तत्तादृशम् हिमशीकरेण चन्द्रकिरणानां तनूभवादिति भावः। अथ च विनाशितविद्याविलासम्, जाड्यशैत्यं मन्दबुद्धिता च किञ्चिदीषदपि न प्रवर्त्तते। श्लेषमूलोपमा मूलातिशयोक्तिः १०४॥

यस्मिन्नृपाणामधितापभाजां, दासीकराः क्लान्तिमवाप्नुवन्ति ।
इतस्ततः शीतलशीकरौघ,-प्रवर्षकृच्चामरचालनेन ॥१०५॥

यस्मिन्निति—यस्मिन् ग्रीष्मर्त्तौ अधितापभाजाम् घर्मातिशयभाजां नृपाणां दासीनां कराः पाणयः इतस्ततः सर्वतः शीतलानां शीकरौघानां सूक्ष्मजलकणसमूहानाम् आर्द्रत्वात्प्रवर्षकृतां सेचकानाम् चामराणां चालनेन वीजनेन कृत्वा क्लान्तिं खेदम् अवाप्नुवन्ति, सततचालने श्रमः सहज एवेति भावः ॥१०५॥

कूपादपः कर्मकरैरुदञ्च्य, यत्रातिशीताः परिपूरितासु ।
धनेश्वराः कृत्रिमदीर्घिकासु, क्रीडन्ति पस्त्येऽपि समं कलत्रैः ॥१०६॥

कूपादिति—यत्र ग्रीष्मर्त्तौ कर्मकरैः भृत्यैः कृत्वा कूपात् नतु तडागात्, ग्रीष्मे मिहिरे खरकरसम्पर्केण तच्छैत्यस्य तनूभवादिति भावः। अतिशीताः अपः सलिलानि उदञ्च्य उद्धृत्य पस्त्ये गृहेऽपि "निशान्तपस्त्यसदनमि" त्यमरः। कृत्रिमासु स्नानार्थं निर्मापितासु दीर्घिकासु वापीषु, 'वापी तु दीर्घिका' इत्यमरः, परिपूरितासु सतीषु धनेश्वराः इभ्याः, अन्येषां तत्सम्भवाभावादिति भावः। कलत्रैः नारीभिः समं क्रीडन्ति ॥१०६॥

विलोक्य मां पुष्पवतीं दिनेशः, प्रवृद्धवीर्यो भवतीति मल्ली ।
इयं निजं यत्र विकाशदम्भात्-, सौभाग्यमेव प्रथयत्यवश्यम् ॥१०७॥

विलोक्यति—यत्र ग्रीष्मर्त्तौ इयं मल्ली पुष्पलताविशेषः, मां मल्लीं स्त्रियं पुष्पवतीं पुष्पितामथ, च रजस्वलां विलोक्य दिनेशः सूर्यः, दिनेशः पतिः प्रवृद्धवीर्यः अधिकप्रतापः, अथ च कामातुरः भवति, ऋतौ भार्यामुपेयादित्युक्तेरिति भाव'। इति हेतोः विकाशस्य पुष्पितत्वस्य दम्भाद् व्याजान्निजं स्वकीयं सौभाग्यम् सौन्दर्यम्, अथ च भर्तृबहुमतत्वम् अवश्यम् प्रथयत्येव ख्यापयत्येव, अन्यथा कुतो विकसतीति-भावः। ग्रीष्मे सूर्यस्य प्रचण्डत्वान्मल्लीनाञ्च पुष्पोद्गमादेवमुक्तिः। अत्र विशेषणमाहात्म्याद् मल्लीसूर्ययोः नायकनायिकाव्यवहार समारोपात् समासोक्तिरलङ्कारः ॥१०७॥

प्रवर्द्धमानः स दिनाधिनाथः, प्रवर्धयामास दिनानि यत्र ।
किं स्वामिना तेन विधेयमत्र, यः सेवकान् पोषयते न चापि ? ॥१०८॥

प्रवर्धमान इति—यत्र ग्रीष्मर्त्तौ प्रवर्धमानः स्वयमुपचीयमानो दिनस्य अधिनाथः तदाश्रयेणात्मलाभात्स्वामीव सूर्यः दिनानि प्रवर्धयामास, ग्रीष्मर्त्तौ हि सूर्यस्योत्तरायणत्वाद्दिनप्रमाणं वर्धते इत्यतः तथोक्तिरिति भावः । उचितं चैतत्, स्वामिनस्तत्रैवोपयोगादित्याह्–अत्रेह लोके तेन स्वामिना किं विधेयम् किं कर्त्तव्यम् ? न किमपीत्यर्थः । तस्य स्वामिनो न कोऽप्युपयोग इति यावत्. केनेत्याह्–यः स्वामी सेवकानाश्रितान् नचापि नैव पोषयते पालयते, नाममात्रेण तु सर्वः सर्वस्य स्वामीति तादृशः सोऽकिञ्चित्करः इत्यर्थः । पोषकत्वं एव स्वामिपदस्य सार्थक्य-मिति भावः । अतिशयोक्तिमूलोऽर्थान्तरन्यासोऽलङ्कारः ॥१०८॥

**चारित्रभाजो यतिनो विहाय, स कोऽपि यस्मिन्न बभूव मर्त्यः ।**
**यस्तालवृन्तं न दधाति पाणौ, यस्तेन नो वीजयति स्वमङ्गम् ॥१०९॥**

चारित्रेति—यस्मिन् ग्रीष्मर्त्तौ चारित्रभाजः सर्वविरतिचारित्रवतः यतिनः मुनीन् विहाय स तादृशः कोऽपि मर्त्यः मनुष्यो न बभूव, यः पाणौ तालवृन्तं व्यजनं न दधाति, तथा यः तेन तालवृन्तेन स्वमङ्गं न वीजयति । घर्माधिक्याद् व्रतिनो विहाय सर्वे एव व्यजनपाणयः स्वं वीज-यामासुः ॥१०९॥

**इतीदृशे ग्रीष्मऋतौ प्रवृत्ते, श्रीदेवराजो नृपतिं प्रणम्य ।**
**व्यजिज्ञपच्चेति जनाधिनाथ !, त्वच्छासनाद् ग्राममहं व्रजामि ॥११०॥**

इतीति—इतीदृशे उक्तप्रकारे ग्रीष्मऋतौ प्रवृत्ते सति, अत्र ऋकारे सन्ध्यभावो विकल्पेन विधानात्, यद्यपि वैकल्पिकेषु भावानुष्ठानौचित्यम्, तथापि छन्दोऽनुरोधेनाभावपक्षाश्रयणमिति प्रतिभाति, यदुक्तम्, "अपि माषं माषं कुर्याच्छन्दो भङ्गं न चाचरेदि" ति । श्रीदेवराजः नृपतिं जितशत्रुं प्रणम्य इति व्यजिज्ञपच्च, इतीति किमित्याह्–जनाधिनाथ ! त्वच्छासनात् तवाज्ञां प्राप्य अहं ग्रामं व्रजामि, ग्रामगमनाय मामनुजानीहीति यावत् ॥११०॥

**विज्ञप्तिमाकर्ण्य नृपः स विज्ञ–, स्तस्येति तं प्राह निजे पदे त्वम् ।**
**निवेश्य कञ्चिन्निपुणं व्रजेति, श्रुत्वा च तं व्यज्ञपयत्स भूपम् ॥१११॥**

विज्ञप्तिमिति—स जितशत्रुर्नृपः तस्य देवराजस्य इति पूर्वोक्तप्रकारां विज्ञप्तिमाकर्ण्य तं देव-राजं प्राह्–किमित्याह्–त्वं निजे पदे स्थाने कञ्चिन्निपुणं कुशलं नरं निवेश्य स्थापयित्वा व्रज, इति एवं राज्ञोक्तं श्रुत्वा च स तं भूपं व्यज्ञपयत् ॥१११॥

**सायं समेष्यामि महीमहेन्द्र !, विमुच्य कार्याणि परःशतानि ।**
**इति प्रतिज्ञाय गतोऽभिरामं, ग्रामं सकामस्पृहणीयमूर्तिः ॥११२॥**

सायमिति–महीमहेन्द्र ! परःशतानि सहस्राण्याऽऽवश्यकान्यपि कार्याणि विमुच्य त्यक्त्वा सायं समेष्याम्यागमिष्यामि, एवञ्च स्वस्थाने कस्यचिन्निवेशस्य न प्रयोजनमिति भावः । इतीत्थं

प्रतिज्ञाय काम इव स्पृहणीया मूर्त्तिः स्वरूपं यस्य स तादृशः देवराजः अभिरामं मनोहरं ग्रामं स्वाभिजनजनपदं गतः ॥११२॥

मध्याह्नकालेऽत्र निवर्तमाने, निर्वृत्तकार्यः स्वपुरं प्रति द्राक् ।
विष्वक् समीरालिपुरः प्रचारः, प्रचक्रमे वर्षितुमम्बुवाहः ॥११३॥

मध्याह्नेति - निवृत्तकार्यः सम्पादितस्वकृत्यः सन् स्वपुरं प्रति द्राक् शीघ्रं, अत्र अस्मिन् देवराजे मध्याह्नकाले निवर्तमाने सम्पद्यमाने सति निर्वृत्तकार्ये निर्वृत्तं सम्पादितं कार्यं येन तादृशे अत्र अस्मिन् देवराजे सति स्वपुरं प्रति गच्छति सति अम्बुवाहः वारिदः विष्वक् समन्तात् समीराणां झञ्झावातानां पुरः प्रचारः पुरस्सरः सन् वर्षितुम् प्रचक्रमे प्रवृत्तः इति ॥११३॥

धूलीजलक्लेदनशङ्कया स, न्यग्रोधवृक्षं निकटं श्रितश्च ।
तस्योपरिष्टादिदमुच्यमानं, शुश्राव सुश्रव्यगुणावदातः ॥११४॥

धूलीति —स देवराजः, धूल्या मिश्रितेन जलेन क्लेदनस्यार्द्रीभवनस्य शङ्कया निकटं समीपस्थं न्यग्रोधवृक्षं वटवृक्षं श्रितः "न्यग्रोधो बहुपादवटे" इत्यमरः । तथा, सुश्रव्येण कर्णप्रियकीर्तनेन गुणेनावदातः उज्ज्वलः स देवराजः तस्य वटवृक्षस्योपरिष्टादुपरि उच्यमानमिदं वक्ष्यमाणं शुश्राव ॥११४॥

शृण्वन्तु कौतूहलमेव सर्वे-, प्यद्यानघः पुष्पकरण्डिनीशः ।
विभावरी प्राक् प्रहरे विभावान्, विपत्स्यते कृष्णभुजङ्गदष्टः ॥११५॥

शृण्वन्त्विति—उच्यमानमेवाह-अद्य सर्वेऽप्येव कौतूहलं किमप्यभिनवं शृण्वन्तु, किन्तदित्याह-विभावर्याः रात्रेः प्राची प्रथमे प्रहरे अनघः निष्पापः पुष्पकरण्डिन्या उज्जयिन्या ईश नृपः विभावान् कान्तिमान् कृष्णभुजङ्गेन कृष्णसर्पेण दष्टः सन् विपत्स्यते मरिष्यति ॥११५॥

दध्यौ तदाकर्ण्य स कोऽयमेवं, वटोपरिष्ठान् कटुकं प्रवक्ति ? ।
विज्ञातमेतत्स्वगिरा गरीयान्, पिशाचकान् स्वान् न्यगदत्पिशाचः ॥११६॥

दध्याविति—सदेवराजस्तदुक्तमाकर्ण्य दध्यौ, वटस्य उपरिष्टात्कोऽयमेवं कटुकमप्रियं प्रवक्ति ? विज्ञातम् अवगतं मया, किमित्याह–गरीयान् मुख्यः पिशाचः स्वानाश्रितान् पिशाचकान् स्वगिरा स्वभाषया एतदुक्तप्रकारम् न्यगदत्कथितवानस्ति ॥११६॥

स्वस्वामिनोऽनिष्टमिदं निशम्य, रयादयासीत् स्वपुरं दयालुः ।
जज्ञे तदा भाविमहापदोऽस्य, क्षोणीश्वरस्याप्यरतिर्नितान्तम् ॥११७॥

स्वेति–स्वस्वामिनः जितशत्रोरनिष्टमिदं पिशाचोक्तं निशम्य दयालुः यथा न तस्यानिष्टं स्यात् इति तत्प्रतिचिकीर्षुत्वाद्दयावान् स देवराजः रयात्सवेगं स्वपुरम् विशालामेवायासीत्, किंवा

उज्जयिनीमयासीत् । तदा भाविनी महापन्मरणरूपं यस्य तस्य तादृशस्यासन्नमृत्योरस्य क्षोणीश्वरस्य जितशत्रोरपि नितान्तमत्यन्तमरतिः अप्रीतिः जज्ञे जाता ॥११७॥

विसृज्य पार्श्वानुचरान समग्रान्, नृपः प्रदोषेऽपि समं महिष्या ।
शिश्ये निद्रौ च महीपतीनां; वार्ताक्लमानां सुलभा हि निद्रा ॥११८॥

विसृज्येति—समग्रान् पार्श्वानुचरानङ्गरक्षकादीन् विसृज्य त्यक्त्वा नृपः जितशत्रुः प्रदोषे रजनीमुखे, शयनाऽयोग्येऽपि काले महिष्या पट्टराज्या समं शिश्ये, निद्रौ च, ननु कुतो झटिति निद्रागमः ? तत्राह हि यतः वार्तया राज्यशासनादिप्रवृत्त्या क्लमः खेदो येषां तेषाम् तादृशानां महीपतीनां निद्रा सुलभा शीघ्रप्राप्या, खेदो हि झटिति निद्राप्राप्तौ कारणमित्यर्थः ॥११८॥

मा स्वामिनं मे भुजगो निहन्यात्. सक्तावधाने मयि सेवकेऽपि ।
पाणौ कृपाणं विनिवेश्य तीक्ष्ण- मिति स्वयं दीपमनुस्थितोऽयम् ॥११९॥

मेति—मयि सेवके सक्तावधाने पूर्णसावधानेऽपि सति मे मम स्वामिनं भुजगः मा निहन्यादिति हेतोरयं देवराजः पाणौ तीक्ष्णं कृपाणं विनिवेश्य कृत्वा स्वयम् दीपछायां विलोकयन् स्थितः यद्वा दीपमनुदीपस्य पश्चाद्भागेऽनुलक्ष्य स्थितः ॥११९॥

प्रेङ्खास्थपल्यङ्कदृढावलग्ने, प्रलम्बमानं कटके निरीक्ष्य ।
सरीसृपं मङ्क्षु विकृष्य धृत्वा, तुण्डयां द्विधाऽऽधात्तरवारिणाऽयम् ॥१२०॥

प्रेङ्खेति—प्रेङ्खा "स्याद्दोला प्रेङ्खादिका स्त्रियामि" त्यमरवचनात्, आन्दोलिका तत्स्थेन पल्यङ्केन दृढम् यथा स्यात्तथाऽवलग्ने संहिते कटके प्रेङ्खायन्त्रचक्रे सरीसृपं सर्पं प्रलम्बमानं निरीक्ष्यायं देवराजः मङ्क्षु झटिति विकृष्य तुण्डयां मुखाग्रे धृत्वा, तरवारिणा कृपाणेन द्विधा द्विखण्डमधाच्चकार इति ॥१२०॥

पिधाय खण्डद्वितयं क्वचित्त-, द्रक्तबिन्दून् पतितान् महिष्याः ।
हृदि स्वहस्तेन तदाऽपनिन्ये, विषाग्रसङ्क्रान्तिभियाऽयमाशु ॥१२१॥

पिधायेति—खण्डद्वितयं विदारितसर्पभागद्वयं सर्पकृत्तभागद्वयं क्वचित् गुप्तस्थाने पिधायाच्छाद्य तदा महीष्याः हृदि हृदये वक्षःस्थले पतितान् तान्ताननेकान् असृजां सर्पशोणितानां बिंदून् अयं देवराज विषस्य उग्रसङ्क्रान्तिभिया उग्ररूपेण विषप्रसारभयेन आशु शीघ्रमेव स्वयैव हस्तेन अपनिन्ये दूरीकृतवान्, उपकारातिशयबुद्ध्या विलम्बस्यानर्थजनकत्वं संभाव्य राज्ञीहृदयस्पर्शरूपमकार्यमपि शुद्धबुद्ध्या चकारेत्यर्थः ॥१२१॥

तदा विबुद्धेन नृपेण देव्या, वक्षः स्पृशन्नेव निरैक्ष्यतैषः ।
प्रकोपभावारुणलोचनेन, चिरो व्यचिन्तीति सचेतनेन ॥१२२॥

तदेति–तदा तत्काले एव विबुद्धेन गतनिद्रेण नृपेण देव्याः वक्षहृदयं रक्तापनोदार्थं स्पृशन्नेव एषः देवराज निरैक्ष्यत दृष्टः । प्रकोपस्य भावाद्धेतोररुणं रक्तं लोचनं यस्य तादृशेन सचेतनेन बुद्धिमता नृपेण चित्ते इति वक्ष्यमाण प्रकारं व्यचिन्ति ॥१२२॥

नृपचिन्ता प्रकारमेवाह–

मत्प्रेयसीसक्तमनस्कमेतं, निहन्मि सम्प्रत्यपि शक्तरोषः ।
भृशं स्वशक्त्या बलवानयं वा, तस्मादुपायेन विनाश्य एव ॥१२३॥

मदिति–मत्प्रेयस्यां सक्तमनस्कमनुरक्तमेतं सम्प्रत्यपि तत्काल एव शक्तरोषः दृढक्रोधोऽहं निहन्मि, यद्वा अत्र सन्देहः, वा यतः अयं देवराजः स्वशक्त्या भृशं मत्तोऽप्यधिकं बलवान्, तस्मादुपायेन युक्त्यैव विनाश्यः, बलप्रयोगे विपरीतस्यापि सम्भवादिति भाव. ॥१२३॥

इति स्वयं चिन्तयतो नृपस्य, यामो रजन्याः प्रथमो जगाम ।
श्रीदेवराजानुज एव सोऽथ, प्रजेश्वरमाहरिकीबभूव ॥१२४॥

इतीति–इतीत्थं स्वयं चिन्तयतो नृपस्य रजन्याः रात्रेः प्रथमो यामः प्रहरः जगाम व्यतीयाय । अथ अनन्तरं द्वितीये प्रहरे, श्रीदेवराजानुजः वत्सराजः स पूर्वोक्त एव प्रजेश्वरस्य नृपस्य प्राहरिकीबभूव ॥१२४॥

अत्र स्थितः प्राहरिकोऽस्ति को वे-त्युक्ते नृपेणाभिदधे स वत्सः ।
स्वामिन्नहं सम्प्रति जागरूकोऽस्मीतीरिते तेन नृपोऽप्युवाच ॥१२५॥

अत्रेति–अत्र मदङ्गरक्षणे को वा प्राहरिकोऽस्तीतीत्थं नृपेणोक्ते पृष्टे सति स वत्सोऽभिदधे, किमित्याह स्वामिन् !, सम्प्रति अहं वत्सराजः जागरुकः भवद्रक्षार्थं गतनिद्रः अस्मि, इतीत्थं तेन वत्सराजेनेरिते कथिते सति नृपोऽप्युवाच ॥१२५॥

नृपोक्तमेवाह–

आदेशमेकं भवते दिशामि विधास्यसे वत्स ? तमेव चेत् त्वम् ।
किं स्वामिवाचां करणे विचारः, क्रियेत भृत्यैरिति सोऽप्यवादीत् ? ॥१२६॥

आदेशेति–भवते एकमादेशं दिशामि करोमि, वत्स ! तमादेशं त्वं विधास्यसे चेत् कार्यगुरुत्वेऽपि त्वं करिष्यसि किम् ? इति प्रश्न., स. वत्सराजोऽपि इति अवादीत्, किमित्याह–भृत्यैः स्वामिवाचां स्वाम्याज्ञानां करणे सम्पादने विचारः क्रियेत किम् ? नैव क्रियेत, तथासति भृत्यत्वस्यैवापत्तेरिति ॥१२६॥

ततः क्षितीशोऽपि तमादिदेश, श्रीवत्सराज ! श्रितराजपाद ! ।
हत्वाग्रजं तस्य शिरो ममाग्रे, समानयेश्छिन्नविचारभारः ॥१२७॥

तत इति-ततस्तदुत्तरानन्तरम् क्षितीशोऽपि तं वत्सराजमादिदेश, किमित्याह-श्रितराज पाद! राजचरणाश्रित! श्रीवत्सराज! छिन्नविचारभारः किमिदं मया कर्त्तव्यं नवेत्येवमविचार्यैव अग्रजं स्वज्येष्ठभ्रातरं हत्वा तस्य शिरः ममाग्रे समानयेरानय ॥१२७॥

तदैव गोत्राधिपतेर्नियोगं, स्वीकृत्य कृत्याय समुत्थितः सः।
पदानि गत्वा कतिचित् कथञ्चिद्, विचारयामास विचारचारुः ॥१२८॥

तदैवेति-स वत्सराजः गोत्रायाः पृथिव्या अधिपतेः जितशत्रोर्नियोगमाज्ञां स्वीकृत्य कृत्याय राजाज्ञप्तकार्याय समुत्थितः कथञ्चिद् महता कष्टेन कतिचित् पदानि गत्वा विचारचारुः मतिमान् विचारयामास, शुभा मतिर्हि अकार्ये रुणद्धि जानातीति भावः ॥१२८॥

तद्विचारमेवाह—

पीयूषमाक्रामति चेद् विषत्वं, जलं यदि स्याज्ज्वलनस्वरूपम्।
श्रीदेवराजस्य ममाग्रजस्य, तत् सम्भवेद् दूषणमेव किञ्चित् ॥१२९॥

पीयूषेति-पीयूषममृतं विषत्वम् विषभावमाक्रामति गच्छति चेत्, यदि जलं ज्वलनस्वरूपमग्निरूपं स्यात्, तत्तदा ममाग्रजस्य श्रीदेवराजस्य किञ्चिद्दूषणं सम्भवेत्, नान्यथा, पीयूषादीनाञ्च विषादिभावोऽसम्भव एव सर्वथा, तथाच देवराजस्यापि न दूषणसम्भव इति भावः ॥१२९।

ननु देवराजस्य निर्दोषत्वे कुतस्तद्वधाज्ञेत्यत आह—

तदागसा केनचनापि शङ्केऽ, लीकेन तस्मै कुपितो महीशः।
केनाप्युपायेन ततो विलम्ब्य, नृपस्य सम्बोधमहं विधास्ये ॥१३०॥

तदेति-केनचना अलीकेनासत्येनापि तस्य आगसा अपराधेन महीशो नृपः तस्मै कुपितः शङ्के उत्प्रेक्षे, ततोहेतोः विलम्ब्य कार्यविलम्बं कृत्वा अहम् वत्सराजः केनाऽप्युपायेन निर्दोषत्व प्रतीतिकारणेन नृपस्य सम्बोधं निर्दोषोऽयमित्येवं सम्यग्ज्ञानं विधास्ये करिष्ये ॥१३०॥

इति स्वचित्ते परिभाव्य भव्यः, स्थित्वा मुहूर्तं वलितस्ततः सः।
इति स्वयं भूमिपतिं सधैर्य्यः, कृताञ्जलिर्विज्ञपयाम्बभूव ॥१३१॥

इतीति—स्वचित्ते इत्युक्तप्रकारं परिभाव्य विचार्य मुहूर्त्तं किञ्चित्कालं स्थित्वा विलम्ब्य भव्यः शुभबुद्धिः स वत्सराजः ततः भ्रातृवधाद्वलितः परावृत्तः सन् भूमिपति नृपं स्वयम् सधैर्य्यः साहसेन दृढमनाः कृताञ्जलिर्बद्धाञ्जलिरिति वक्ष्यमाणं विज्ञपयाम्बभूव ॥१३१॥

तद्विज्ञप्तिमेवाह—

अद्यापि जागर्ति स देवराज-स्तच्छक्यते देव! न हन्तुमेषः।
क्षणेन चैकेन निहन्तुमेतं, यास्यामि निद्राभरमन्थराक्षम् ॥१३२॥

अद्यापीति—देव ! नृप ! स मद्भ्राता देवराज· अद्यापि साम्प्रतमपि जागर्ति जाग्रदेवास्ति, अतः एष हन्तुं न शक्यते, जाग्रतो हननोद्यमो विफलो विपरीतफलो वा स्यात्, वध्येन प्रतीकार-सम्भवादिति भावः। ननु तर्हि कदा हनिष्यसीति चेत्तत्राह-क्षणेनैकेन च किञ्चित् कालानन्तर-मेव निद्राभरेण मन्थराक्षम् निमिषितनेत्रम् शिथिलेन्द्रियम् वा एतम् देवराजं हन्तुम् यास्यामि इति ॥१३२॥

तल्लीनकोपप्रशमाय वत्सः, सद्वत्सलस्तं नृपमेवाह ।
इयं त्रियामाऽपि सहस्रयामा, विनोदहीनस्य विभोस्त्रियामा ॥१३३॥

तल्लीनेति—सतां वत्सलः प्रियः वत्सः वत्सराजः तस्मिन् राजनि लीनस्य स्थितस्य कोपस्य प्रशमाय शान्तये तमेव नृपमाह—किमित्याह—विनोदरहितस्य विभोर्भवतः स्वामिनः, त्रियामा यामत्रयशेषाऽपीयं त्रियामारात्रिः सहस्रयामा सहस्रयामेव क्षपयितुं निर्गमयितुं कष्टा इति ॥१३३॥

ननु तत्र किं कर्त्तव्यं, तत्राह—

आख्यानकं किञ्चन तन्ममाग्रे, स्वामी प्रवक्तुं यततामिदानीम् ।
यद्वा समाकर्णयतु स्वकर्णौ, निर्दिश्य मत्तः प्रभुरेव विज्ञः ॥१३४॥

आख्येति-—तत्त्रियामाक्षपणाय इदानीम् स्वामी देवः ममाग्रे किञ्चिदाख्यानकं वार्तां प्रवक्तुम् यततामारभताम्, ननु तव विनोदाय मम प्रयासः स्वामिस्थितिविरुद्ध इति सम्भाव्याह-यद्वा विज्ञः प्रभुः भवानेव कर्णौ निर्दिश्य समाधाय मत्तः मत्सकाशात्समाकर्णयतु, आख्यान-कमेवेत्यर्थः ॥१३४॥

आदिष्टमात्रः प्रभुणाऽथ सोऽपि, कथामुपाक्रंस्त विवक्तुमित्थम् ।
वदावदा ये विनियोजिताः स्यु-, स्ते किं नियुक्ताः स्वगेव नैव ? ॥१३५॥

आदिष्टेति—अथानन्तरं प्रभुणा राज्ञा आदिष्ट मात्रः आदिष्टः सन्नेव स वत्सराज एवेत्थमेव वक्ष्यमाणप्रकाराम् कथां वक्तुं कथयितुमुपाक्रंस्तारब्धवान्। तदेव समर्थयति साधर्म्येण ये स्वयमेव नियुक्ताः प्रेरिताः सन्तः किं नैव स्युः ? अपित्ववश्यमेव स्युरित्यर्थः ॥१३५॥

तत्कथामेवाह—

श्रीपाटलीपुत्रपुरे समस्त-, वर्णाश्रये चित्रविधानधुर्यः ।
बभूव पृथ्वीपतिरङ्ग ! पृथ्वी-, राजो विराजद्विपुलप्रतापः ॥१३६॥

श्रीति—अङ्गेति कोमलामन्त्रणे, समस्तानां वर्णानां ब्राह्मणादीनां वर्णानामाश्रये आस्पदे श्रीपाटलीपुत्रपुरे चित्रविधा चित्रकर्मसु, विविधक्रियासु च धुर्योऽग्रेसरः विराजद्विपुलप्रतापः अतितेजस्वी पृथ्वीराजः तदाख्यः पृथ्वीपतिर्बभूव ॥१३६॥

देवी तदीया समभूत् सुतारा, सम्पूर्णतारापतिबिम्बवक्त्रा ।
कलङ्कभृत्तापकराविती मौ, या चन्द्रसूर्यौ न कदाऽप्यपश्यत् ॥१३७॥

देवीति— तदीया पृथ्वीराजस्य देवी सुतारा तदाख्या, सम्पूर्णं यत्तारापतेश्चन्द्रस्य बिम्बं वक्त्रे यस्याः सा तादृशीं चन्द्रसूर्यौ कदापि नापश्यत्, तत्र हेतुमाह—कलङ्कभृत्तापकराविती मौ, चन्द्रः कलङ्कलाञ्छनमथ चापवादं बिभर्ति, सूर्यश्च तापं घर्ममथ च दुःखं करोतीति हेतोः तादृशावुभौ इत्यत एव चन्द्रसूर्यौ कदापि न अपश्यत् । असूर्यम्पश्या राजदारा इति यावत् । पापानां दर्शनमपि न शुभायेति भावः यदुक्तम्—"कथाऽपि खलु पापानामलमश्रेयसे यतः" इति । अत्रापिना दर्शनादि । अत्र पूर्वार्धे लुप्तोपमा, उत्तरार्धे च कलङ्कयोस्तापतापयोरभेदातिशयोक्तिमूला चन्द्रादर्शनोक्तिरूपा जातिरलङ्कारः ॥१३७॥

मान्यस्तयोस्तत्र पवित्रवृत्त,-श्रीरत्नसारः समभूद् महेभ्यः ।
धर्मो यमाश्रित्य सदाऽपि तस्थौ, विशालमालानमिव द्विपेन्द्रः ॥१३८॥

मान्य इति—तत्र पाटलीपुत्रे नगरे तयोः नृपतिदेव्योः मान्यः सत्कारार्हः पवित्रा विशुद्धा-वृत्ता श्रीः शीलश्रीर्यस्य स तादृशः सुचरितः महेभ्यः रत्नसारस्तन्नामा समभूत्, यम् रत्नसारमाश्रित्य विशालमालानम् गजबन्धनस्तम्भं द्विपेन्द्रः इव धर्मः सदापि तस्थौ सततं धर्मप्रवृत्तः स इति भावः ॥१३८॥

भार्या सुरी तस्य सुरीव कान्त्याऽ-, भवल्लसच्छीलविभूषणा सा ।
स्वर्भानुसंस्पर्धनकर्मणैव, यत्केशपाशोऽभृत कृष्णभावम् ॥१३९॥

भार्येति—तस्य रत्नसारस्य भार्या सूरी तदाख्या, सा सूरी लसत् शीलमेव तद्रूपं विभूषणं यस्याः सा तादृशी शीलवती कान्त्या च सूरी देवी वाभवत्, यस्याः केशपाशः स्वर्भानोः राहोः संस्पर्धनकर्मणा स्पर्धया एव कृष्णभावं कृष्णतामभृत । राहुवत्कृष्णाः केशा इत्यर्थः ॥१३९॥

तयोस्तनूजो धनदत्तनामा, कामावतारोऽजनि रूपऋद्ध्या ।
बाल्यं समारभ्य यथैव धीभिः, श्रितस्तथाऽयं सकलाभिराभिः ॥१४०॥

तयोरिति—तयोः सूरीरत्नसारयोस्तनूजः पुत्रः धनदत्तनामा, रूपऋद्ध्यां स्वरूपसम्पदा कामावतारः काममूर्तिः अजनि जातः । स—धनदत्तः बाल्यं समारभ्य बाल्यादेव यथा धीभिः मतिभिः श्रितः तथाऽयं धनदत्तः आभिः प्रसिद्धाभिः कलाभिः श्रितः ॥१४०॥

शृङ्गाररोचिष्णुरागारतोऽसौ, शृङ्गाटके यानपरेर्गुरुक्तम् ।
द्वयोः कयोश्चिन्मिथ एव पुंसो-, रेतम् समाकर्णयति स्म धीरः ॥१४१॥

शृङ्गारेति-अपरेद्युः एकदा असौ धनदत्तः शृङ्गारेण भूषादिना रोचिष्णुः रमणीयः ह अगारतः गृहात् शृङ्गाटके चतुष्पथे यान् गच्छन् धीरः सः, द्वयोः कयोश्चित् पुंसोर्मिथ परस्परमेवोक्तं गुप्तमन्त्रणमेतत् वक्ष्यमाणं समाकर्णयति स्मेति ॥१४१॥

रहस्यमेवाह—

कोऽप्यग्रणीरेष गुणोत्तमानां, पुण्याधिकानां च ललामभूतः ।
भुक्त्वा प्रदायैव वनीपकानां, धनं निजं यः सफलीकरोति ॥१४२॥

क इति-एष गच्छन् पुरुषः गुणोत्तमानामुत्तमगुणवतां पुण्याधिकानां पुण्यवतां ललामभूतः तिलकरूप. अग्रणीः मुख्यः कोऽपि अज्ञातनामादिः यद्वा, कोऽपि अनिर्दिष्टन मादिः एष पुरुषः गुणोत्तमानां गुणैः कृत्वोत्तमानां उत्तमगुणवतामित्यर्थः, अग्रणीः श्रेष्ठः पुण्य धिकां पुण्यवतां च ललामभूतः तिलकरूपो यः निजं धनं भुक्त्वा स्वयमुपभुज्य वनीपका याचकानां कृते प्रदायैव सफलीकरोति । धनस्य भोगदाने फलम्, अन्यथा तु विनाश ए "दानं भोगो नाशस्तिस्रा गतयो भवन्ति वित्तस्ये"त्युक्तेरिति भावः ॥१४२॥

ततः परः प्राह न चास्य मित्र !, श्लाघे वदान्यत्वमहं कथञ्चित् ।
यो वीजिवित्तेन तनोति दानं, भोगांश्च नो चित्तहृदेव मे सः ॥१४३॥

तत इति-ततः प्रथमस्य वचनानन्तरं परः तयोर्द्वितीयः प्राह- तदेवाह—मित्र ! अहमस्य वदान्यत्वं दानशौण्डत्वं कथञ्चित्केनापि प्रकारेण न च नैव श्लाघे, तत्र हेतुमाह—यः वीजिन जनकादेः वित्तेन धनेन, न तु स्वयमुपार्जितेन, दानं भोगांश्च तनोति करोति स मे मम चि हृत् हृत्प्रियः नो एव नैव । स्वोपार्जितस्य दानं दानमिति भावः ॥१४३॥

तदुक्तमित्थं स निशम्य सम्यग्, व्यचिन्तयद् युक्तमवाच्यनेन ।
किं तैर्विनीतैर्गुणिभिः समर्थैः, सुतैर्न येषां स्वभुजार्जिता श्रीः ॥१४४॥

तदिति-स धनदत्तः तदुक्त तयोरुक्तं निशम्य सम्यग् व्यचिन्तयत्, चिन्तामेवाह—अने द्वितीयेन युक्तमुचितमवाचि, तदेव समर्थयति—तैः विनीतैः विनययुक्तैः शिक्षितैश्च गुणि समर्थैः शक्तिशालिभिः सुतैः किम् !, कृतं तैरित्यर्थः । येषां सुतानां स्वभुजाभ्यामर्जि सञ्चिता श्रीः न ॥१४४॥

ध्यायन्निति प्राप निकेतनं स, व्यजिज्ञपत् स्वं पितरं विनीतः ।
नरोत्तमाः स्युर्विषयोपपत्त्या, ते चोपलभ्या विषयोपपत्त्या ॥१४५॥

ध्यायन्निति-स धनदत्त इत्युक्तप्रकारं ध्यायन् चिन्तयन् निकेतनं स्वगृहं प्रापोपस्थितः, तथा स्वं पितरं विनीतः विनययुक्तः सन् व्यजिज्ञपत्, किमित्याह कते जनाः विषयाणां देशानामुपपत्त्या व्यवहारादिना प्रत्याहेतुना या विषयस्य धनादेरुपपत्तिः लाभः तया कृत्वा नरोत्तमा

उपलभ्याः प्राप्याः, स्युः, नरोत्तमत्व प्राप्तिर्धनाप्तेः, सा च देशान्तरेषु व्यवहारादिनेत्यर्थः ॥१४५॥

रूपेऽनुरूपे प्रबले बलेऽपि, बुद्धौ प्रवृद्धाधिकचित्तशुद्धौ ।
कदाऽपि तात ! प्रतिपद्यते न, श्रिया विना ना पुरुषोत्तमत्वम् ॥१४६॥

रूपे इति–तात ! पितः ! रूपे स्वरूपे अनुरूपे योग्ये सति, बले शक्तौ प्रबले प्रकृष्टेऽपि सति, बुद्धौ मत्याम् प्रवृद्धा अधिका चित्तस्य शुद्धिर्यतः तादृश्यां सत्यामपि ना पुरुषः श्रिया लक्ष्म्या धनेन च विना पुरुषोत्तमत्वम् पुरुषश्रेष्ठत्वम् अथ च विष्णुत्वं कदापि न प्रतिपद्यते ॥१४६॥

सम्प्रति कथनीयमाह–

निदेशमासाद्य तवैव तात !, देशान्तरं यामि रमार्जनाय ।
इति स्वपुत्रस्य मनोभिलापं, श्रुत्वा महेभ्यः स सुधीर्बभाषे ॥१४७॥

निदेशमिति–तात ! तवैव निदेशमाज्ञामासाद्य, स्वस्य स्वैरित्वाभावादिति भावः । रमाया-धनस्यार्जनाय देशान्तरं यामि । इतीत्थम् स्वपुत्रस्य मनोऽभिलापं श्रुत्वा सुधीः स महेभ्यः रत्नसारः बभाषे उवाच ॥१४७॥

तदुक्तिमेवाह–

मनोरथं व्यञ्जयता स्वकीयं, मच्चित्तमायासितमाः ! किमर्थम् ? ।
भाग्येन ते वत्स ! गृहे मदीये, प्रवर्धते श्रीरधिकाधिकं च ॥१४८॥

मनोरथमिति–वत्स ! स्वकीयं मनोरथं व्यञ्जयता प्रकटयता सता त्वया, आः, खेदे, किमर्थम् मच्चित्तमायासितम् प्राप्तश्रमं कृतम् । निष्प्रयोजनमेतदित्यर्थः । तत्र हेतुमाह–ते तव भाग्येन, न तु मत्पौरुषेणेत्यावर्जनोक्तिः । मदीये गृहे श्रीः सम्पत्तिरधिका यथेष्टा, तदर्थमुद्यमः विफलः, क्षीयमाणायां हि श्रियामुद्यमः विधेयः, न च तथा, तदेवाह–अधिकञ्च प्रवर्धते यथा स्यात्तथा ॥१४८॥

न च तव तद्विनियोगे निषेधमाह–

यदृच्छया तां विनियोजयस्व, स्ववाञ्छितार्थेषु वधूमिवोढाम् ।
सद्मस्थितोऽपि व्यवसायजातं, कुर्वन् ममानन्दय पुत्र ! चित्तम् ॥१४९॥

यदृच्छयेति––पुत्र ! तां श्रियम् स्ववाञ्छितार्थेषु स्वेष्टकार्येषु ऊढां वधूमिव यदृच्छया स्वैरम् विनियोजयस्व–व्यय । व्यवसायेच्छा चेत् सद्मस्थितः अपि गृहस्थित एव व्यवसायजातं कुर्वन् मम चित्तमानन्दय ॥१४९॥

इति स्ववाचा प्रतिषेधितोऽपि, पित्रा स निर्बन्धमुवाच पुत्रः ।
अप्यूर्जिता तात ! तवार्जिता मे, लक्ष्मीरियं नो भगिनीव भोग्या ॥१५०॥

इतीति—पित्रा इत्युक्तप्रकारेण स्ववाचा प्रतिषेधितः निवारितोऽपि पुत्रः धनदत्तः सनिर्बन्धम् साग्रहमुवाच, तदेवाह-तात ? ऊर्जिता महत्यपि तवार्जिता इयं लक्ष्मीः भगिनी स्वसेव मे भोग्या नो नैव, उभयत्रापि तवार्जितत्वसाम्यादिति भावः ॥१५०॥

**इत्याग्रहग्राहनिपीतचित्तं, स तातमापृच्छ्य गृहीतपण्यः ।**
**शुभे मुहूर्त्ते शकुनेषु सत्सु, देशान्तरं प्रत्यचलद् धनाय ॥१५१॥**

इतीति—इत्युक्तप्रकारेणाग्रहरूपेण ग्राहेण मकरेण निपीतचित्तं ग्रस्तचित्तं पितरम् आपृच्छ्य समाजयित्वा गृहीतपण्यः गृहीतक्रयाणकः स धनदत्तः शुभे मुहूर्त्ते शकुनेषु शुभसूचकनिमित्तेषु सत्सु देशान्तरं प्रति धनायार्थार्जनाय । प्रत्यचलत्प्रतस्थ इति ॥१५१॥

**सोऽजन्यसौजन्यविभावनेन, संवाहयन् सार्थममा चलन्तम् ।**
**विस्मारयन् वेश्मसुखं वनेऽपि, प्रयाणकैः श्रीपुरमाप कैश्चित् ॥१५२॥**

स इति—स धनदत्तः अजन्यस्याकृत्रिमस्य सौजन्यस्य विभावनेन प्रकटनेन कृत्वा अमा सह चलन्तं सार्थम् संवाहयन् नयन् वने साधनासम्पन्नेऽपि स्थाने वेश्मसुखम् गृहसुखं समुचित-प्रबन्धादिना विस्मारयन् कैश्चित् कतिपयैः प्रयाणकैः प्रस्थानैः कृत्वा श्रीपुरं तदाख्यं नगर-माप प्राप ॥१५२॥

**तस्योपकण्ठे पटमण्डपान् स, प्रदाय कील प्रतिबद्धरश्मीन् ।**
**अवासयत् सार्थिकसम्मतेन, सार्थं परिश्रान्तवृषाश्वसार्थम् ॥१५३॥**

तस्येति—स धनदत्तः तस्य श्रीपुरस्य उपकण्ठे समीपे पटमण्डपान् पटनिर्मितानि गृहाणि कीलेषु लोहादिमयकीलकेषु समीपे प्रतिबद्धा संयोजिताः रश्मयः वितानार्थरज्जवः येषां तान् तादृशान् प्रदाय, पटमण्डपान् वितानयित्वेति यावत् । सार्थिकस्य सार्थमुख्यस्य स्वसहायकस्य सम्मतेन सम्मत्या, एतेन स्वस्य स्वैरित्वं निषिद्धम् । परिश्रान्ता अध्वखेदखिन्नाः वृषाणाम् अश्वा-नाञ्च सार्थाः समूहाः यस्य तं तादृशं सार्थम् अवासयत् ॥१५३॥

**तदैव कश्चित् पुरुषोऽतिवेलं, प्रकम्पमानावयवो भयेन ।**
**निश्वासधाराविनिरुद्धकण्ठ-, स्तं सार्थवाहं शरणं प्रपेदे ॥१५४॥**

तदैवेति—तदैव तत्रावाससमय एव कश्चित्पुरुषः भयेन कृत्वा अतिवेलं बहुकालं प्रक-म्पमानावयवः सवेपथुः निश्वासधाराभिः दीर्घनिश्वासैः कृत्वा विनिरुद्धः कण्ठः यस्य स तादृशः दीर्घमुखश्वासचलनाग्रस्तगलः सन् सार्थवाहं धनदत्तं शरणं रक्षकम् प्रपेदे प्राप्तः "शरणंगृहरक्षित्रोः इत्यमरः इति ॥१५४॥

**निघ्नन्तु निघ्नन्त्विति भाषमाणाः, पाणौ दधाना निशितान् कृपाणान् ।**
**अन्वागमंस्तं कतिचित् पुमांसो, धावन्त एवास्खलितांह्रिवेगम् ॥१५५॥**

निघ्नन्त्विति—निघ्नन्तु निघ्नन्तु इत्येवं क्रोधादिना मुहुर्भाषमाणाः कतिचित्पुमांसः पाणा निशितान् तीक्ष्णान् कृपाणान् खड्गान् दधानाः धारयन्तः कुर्वाणाः अस्खलिता अप्रतिहतं अंह्रि-वेगं पादवेगं यथा स्यात्तथा धावन्तः सन्तः, तम् पुरुषमनु पृष्ठतः आगमन् ॥१५५॥

**स सार्थवाहोऽपि बभाण चैतान्, शरण्यरूपः शरणोत्सुकानाम् ।**
**किं वोऽपराद्धं सरुषामनेन, वधं यदर्हत्ययमुग्रवीर्याः ! ॥१५६॥**

स इति—स सार्थवाहः धनदत्तः शरणोत्सुकानाम् रक्षणेच्छूनां शरण्यरूपः रक्षक एतान् आगतान् बभाण च, किमित्याह—उग्रवीर्याः उत्कटपराक्रमाः ! सरुषां सक्रोधानां वो युष्माकमनेन किमपराद्धम्, यथेनायं वधमर्हति भवद्भिरिति प्रश्नः ॥१५६॥

**तेऽप्यूचिरे सत्तम ! सार्थवाह !, प्रेष्यो नृपस्यैष नृपस्य तस्य ।**
**विभूषणं किञ्चन चोरयित्वा, व्यधादयं देवनदेवनं च ॥१५७॥**

त इति—ते समागता पुरुषाः अपि ऊचिरे आवेशात् सम्भूयैव जगुः, तदेवाह सत्तम ! सार्थवाह ! एष त्वत्समीपागतः पुरुषः नृपस्य प्रेष्यो भृत्यः, तस्यैतत्स्वामिनो नृपस्य किञ्चन भूषणं चोरयित्वायमुपस्थितः पुरुषः देवनदेवनं देवनैः पाशकैः देवनं द्यूतं क्रीडां व्यधाच्च ॥१५७॥

**दीव्यन्तमेतं समवाप्य बद्ध्वा, समर्पयामोऽवनिनायकाय ।**
**एतं सकोपः स तदैव वध्यं, समादिशद् दिष्टनयः प्रजानाम् ॥१५८॥**

दीव्यन्तमिति—दीव्यन्तं द्यूतक्रीडां कुर्वन्तमेनं पुरुषं समवाप्य प्राप्य बद्ध्वा अवनिनायकाय नृपाय समर्पयामः प्रजानाम् दिष्टनयः दर्शितनीतिः स नृपः सकोपः सन् तदैव तत्क्षण एव एतं वध्यम्, वध्योऽयमित्येव समादिशत् ॥१५८॥

**विभूषणप्राप्तिमिलेश ! यावत्, सुरक्षगुप्ता वयमेव रक्ष्यः ।**
**विज्ञप्त एवं सचिवेन भूप-, स्तथा तदाऽऽधत्त विधेयगृह्यः ॥१५९॥**

विभूषणेति—सचिवेन कर्त्रा, इलेश ! महीप ! विभूषणप्राप्तिं यावत् अयं वधार्हः पुरुषः सुरक्षाणां रक्षकाणाम् गुप्तिः रक्षणं तस्याम् रक्ष्यः स्थापनीयः, नतु वध्यः, अन्यथा भूषणशुद्ध्य-सम्भवादिति भावः । एवमित्थम् विज्ञप्तः सन् विधेयस्य गृह्यः पक्षपाती, यद्वा विनयादि वश्यः भूपः तदा सचिवविज्ञप्त्यनन्तरं तथा विज्ञप्त्यनुसारेणाधत्त चक्रे ॥१५९॥

**एषोऽद्य यामे चरमे रजन्या, आरक्षमर्त्यं विनिहत्य शक्त्या ।**
**कारागृहादाशु विनिर्जगाम, सपौरुषः किं न करोति यद्वा ? ॥१६०॥**

एष इति—एषः चौरः अद्य रजन्याः रात्रेः चरमे यामे चतुर्थे प्रहरे शक्त्या बलपूर्वकम् आरक्षमर्त्यमारक्षकपुरुषं विनिहत्य हत्वा कारागृहादाशु विनिर्जगाम पलायितवान्, नन्वेतत्कथं

सम्भवीति चेदाह—यद्वा—सपौरुषः शक्तिमान् किं न करोति ? अपितु आरक्षकघातकारागृहभङ्गा दिसर्वमेव करोति इत्यर्थः ॥१६०॥

बलोपयुक्ताननुगच्छतोऽस्मान्, विबुध्य बुद्ध्या झटिति प्रविश्य ।
निलीय तिष्ठन् नलिनीवनान्तः, कियन्तमप्येष निनाय कालम् ॥१६१॥

बलेति—बलोपयुक्तान् कृतबलप्रयोगान् उपयोगशीलान् बलेन सैन्येनोपयुक्तान् सहितान 'बलं सैन्यं चक्रं चानीकमि" त्यमरः । अस्मान् अनुगच्छतः अनुधावतो विबुद्धय ज्ञात्वा बुद्धया युक्त्या एष पुरुषः नलिनीवनान्त पद्मखण्डे झटिति प्रविश्य निलीयात्मानं तिरोधाय तिष्ठ कियन्तमपि कालं निनाय क्षपयामास ॥१६१॥

निर्गत्य तस्मादधुना महेच्छ !, स्वच्छं भवन्तं शरणं प्रपन्नः ।
श्रुत्वेति तद्वृत्तमवृत्तपूर्वं, तान् सार्थवाहः पुनरेवमूचे ॥१६२॥

निर्गत्येति—महेच्छ ! महाशय ! तस्मान्नलिनीगुल्मादधुना निर्गत्य बहिर्भूय स्वच्छं निर्मलाशयं भवन्तं शरणं रक्षकं प्रपन्नः प्राप्तोऽस्ति । तस्य शरणागतपुरुषस्य इतीत्थमवृत्तपूर्वमभूतपूर्वं वृत्तं श्रुत्वा सार्थवाहः तान् पुरुषान् प्रति पुनरेवं वक्ष्यमाणप्रकारमूचे ॥१६२॥

ईदृग्विधाकृत्य विधानतोऽसौ, वधस्य सम्बन्धमुपैति नूनम् ।
निवेद्यतां किञ्चन भूषणं तद्, नृपेण लब्धं यदि वा न चापि ? ॥१६३॥

ईदृग्विधेति—असौ मच्छरणागतः पुरुषः ईदृग्विधस्य भवदुक्तप्रकारस्य अकृत्यस्य दुष्कार्यस्य विधानतः कारणात् नूनम् वधस्य सम्बन्धं कर्मतारूपमुपैति, वधमर्हतीत्यर्थः । तत्तः निवेद्यता कथयन्तु, किमित्याह—नृपेण किञ्चन भूषणं लब्धम् यदिवा अथवा नचापि नैव इति ॥१६३॥

सम्प्राप्तमेवेति निवेदिते तै—, र्भूयो बभाषे धनदत्त एतान् ।
प्रतीक्षतां तर्हि मनाक् प्रतीक्ष्यं, यावद् नृपं विज्ञपयामि चित्रम् ॥१६४॥

सम्प्राप्तमिति—सम्प्राप्तं भूषणं लब्धमितीत्थं तैः पुरुषैः निवेदिते सति धनदत्त एतान् वधोद्यतान् पुरुषान् भूयः पुनरेव बभाषे, किमित्याह—तर्हि भूषणे लब्धे सति, प्रतीक्ष्यं वधकर्मनयाऽपेक्ष्यम एनम् मनाक् किञ्चित्कालं प्रतीक्षताम् कालक्षेपेण सहताम्, यावदिदं नृपं विज्ञपयामि इति ॥१६४॥

सोपायनः सोऽपि तदैव गत्वा, विज्ञाप्य भूपालमतिप्रपन्नम् ।
अमोचयत्तं शरणप्रपन्नं, परोपकारे हि सतां प्रवृत्तिः ॥१६५॥

सोपेति— स धनदत्तोऽपि तदैव न तु विलम्ब्य अन्यथा पुरुषाणां [illegible] वासिन्ति भावः । सोपायन उपहारसहित गत्वा अति प्रपन्नम्, उपायन[illegible] भाव ।

भूपालं विज्ञाप्य सम्प्रार्थ्य शरणप्रपन्नं शरणागतम् तममोचयत्, सतामेष स्वभाव इत्याह–हि यतः सताम् परोपकारे प्रवृत्तिः, न तु परापकारे इत्यर्थः ॥१६५॥

**एत्योपकार्यामथ भोजयित्वा, वासांसि दत्त्वा प्रवराणि तस्मै ।**
**अदत्त लोकद्वयसाधनार्हां, शिक्षामिमां शिक्षितसाधुवृत्तः ॥१६६॥**

एत्येति—अथ वधान्मोचनान्तरम् उपकार्याम् पटमण्डपे एत्यागत्य भोजयित्वा प्रवराण्युत्तमानि वासांसि दत्त्वा शिक्षितः सुधीश्चासौ साधुवृत्तश्च स तादृशः धनदत्तः तस्मै मुक्ताय पुरुषाय लोकयोरिहलोकपरलोकयोः साधनार्हां साधनसमर्थाम् इमां वक्ष्यमाणां शिक्षामुपदेशमदत्त ॥१६६॥

**तच्छिक्षामेवाह—**

**बन्धादि दुःखाप्तिनिदानभूतं, कदापि चौर्यं भवता न कार्यम् ।**
**इहाप्यमुत्रापि सुखाभिलाष–, स्तवास्ति चेच्चेतनया समेत ! ॥१६७॥**

बन्धेति—चेतनया बुद्धया समेत! सहित! धीमन्! तव इहलोकेऽपि अमुत्र परलोकेऽपि सुखाभिलाषश्चेदस्ति, तर्हि बन्धादिदुःखाप्तेर्निदानभूतं मूलकारणं चौर्यं भवता कदापि न कार्यम् ॥१६७॥

**इतीष्टशिक्षामृतपानतृप्तः, परांगतो निर्वृतिमाह तं सः ।**
**त्वदुक्तमेतद् मयकाभ्युपेतं, मत्प्राणविश्राणनपूर्णपुण्य ! ॥१६८॥**

इतीति—इत्युक्तप्रकारेष्टा शिक्षारूपामृतस्य पानेन श्रद्धापूर्वकलोभेन तृप्तः गतदुर्बुद्धिः परामुत्कृष्टाम् निर्वृत्तिं शान्तिं गतः स पुरुषः तं धनदत्तमाह–तदेवाह- मत्प्राणविश्राणेन प्राणदानेन पूर्णं पुण्यं यस्य स तादृशः तत्सम्बोधने, मयका मया त्वदुक्तमेतत् अस्तेयोपदेशमभ्युपेतं स्वीकृतम् ॥१६८॥

**त्वत्तोऽनृणः स्यां न कदाचनापि, जीवाधिकं वस्तु न यज्जगत्याम् ।**
**तथापि भूताद्यभिचारचारुं, मन्त्रं ममादत्स्व कृतप्रतीतिम् ॥१६९॥**

त्वत्त इति—त्वत्तः कदाचनाऽपि अनृणः प्राणदानरूपर्णमुक्तः न स्याम्, यद्यतः जगत्याम् जीवाधिकम् वस्तु नास्ति, अधिकदानेनानृण्यमिति भावः। तथापि मम भूताद्यभिचारे प्राणिमारणादौ चारुम् भूताद्यभिचारचारुं भूतादि निग्रहकारकं वा समर्थम् कृतप्रतीति परीक्षितं मन्त्रमादत्स्व ॥१६९॥

**मा प्रार्थनास्यास्तु मुधेति मन्त्रं, तस्मादुपादत्त स सार्थवाहः ।**
**यत्प्रार्थनाभङ्गविधानतो वा, स्यात् प्राणभङ्गः सुकरो बुधानाम् ॥१७०॥**

मेति—अस्य प्रार्थना मुधा निष्फला मास्तु न भवत्विति हेतोः स सार्थवाहो धनदत्तः तस्मात्पुरुषात् सकाशान्मन्त्रमुपादत्त गृहीतवान्, ननु स्वस्यानिष्टा प्रार्थना पालनीयैवेति न नियम

इति चेत्तत्राह–यद्यतः बुधानाम् न तु मूर्खाणाम् तत्र तेषा मूर्खाणां विवेकाभावादिति भावः। प्रार्थनाभङ्गविधानतः याच्ञा भङ्गकरणात् प्राणभङ्गः सुकरः। प्रार्थनाभङ्गात्प्राणभङ्गः श्रेयानित्यर्थः। सामान्येन विशेषसमर्थनादर्थान्तरन्यासः ॥१७०॥

**स्थित्वैष कञ्चित् समयं सुखेन, ततः पुरात् प्रस्थित इभ्यपुत्रः ।**
**महाटवीं शालविशालमालां, कादम्बरी नाम समाससाद ॥१७१॥**

स्थित्वेति—एष इभ्यपुत्रो धनदत्तः किञ्चित्समयं सुखेन स्थित्वा ततः पुरात् श्रीपुरात् प्रस्थितः कृतप्रयाणः शालानां वृक्षाणां विशाला मालाश्रेणिर्यस्यां तादृशीं कादम्बरीं नाम महाटवीम् समाससाद प्राप्तवान् ॥१७१॥

**तरङ्गिणीतीरकृताधिवासः, शुचाऽऽकुलं व्याधमवेक्ष्य चैकम् ।**
**नेत्राम्बुसंक्लिन्नमुखं सचिन्तं, जजल्प चैवं धनदत्तसाधुः ॥१७२॥**

तरेति—तरङ्गिण्याः नद्याः तीरे कृताधिवासः धनदत्तसाधुः शुचा शोकेनाकुलं विह्वलं नेत्राम्बुना बाष्पेण संक्लिन्नं मुखमार्द्रमुखम् रुदन्तमित्यर्थः। सचिन्तं चिन्तायुक्तञ्चैकं व्याधमवेक्ष्य जजल्प पृष्टवान् इति ॥१७२॥

तत्प्रश्नमेवाह–

**व्याधिर्विधत्ते तव कोऽपि बाधां, किं वाऽऽधिरुच्छ्रायमुपैति किं ते ? ।**
**निमित्तमन्यद् यदि वाऽऽपि किञ्चि–, च्छोकाकुलस्त्वं यदवेक्ष्यसेऽत्र ? ॥१७३॥**

व्याधिरिति—तव कोऽपि व्याधिः रोगः बाधां पीडां विधत्ते, कि वा अथवा ते तव आधिः काऽपि मानसीव्यथा उच्छ्रायमुत्कटत्वमुपैति, केनापि व्याधिनाऽऽधिना वा पीडितः ? इत्यर्थः। यदि वाऽपि अन्यत् किञ्चिद् गृहक्लेशादि निमित्तम् , ननु भवान् कुत एतत्पृच्छतीति चेत्तदाह– यद्यतो हेतोश्चास्मिन् काले त्वं किञ्चित् शोकाकुलः अवेक्ष्यसे ॥१७३॥

**इत्यङ्ग ! पृष्टः स जगाद सर्वं, निशम्यतां श्रेष्ठिगरिष्ठ ! तथ्यम् ।**
**इतः सरित्सन्निधिदुर्गशैल–, पार्श्वेऽस्ति पल्ल्यद्रिकुडङ्गिकाख्या ॥१७४॥**

इतीति—अङ्ग ! करुणायाम् इति उक्त प्रकारेण पृष्टः स जगाद, तदेवाह–श्रेष्ठिषु गरिष्ठ ! श्रेष्ठ ! तथ्यम् सत्यम् न तु कल्पितम् सर्वं श्रूयताम् , किमित्याह–इतोऽत्र सरितः नद्याः सन्निधौ दुर्गशैलस्य पार्श्वे समीपे अद्रिकुडङ्गिकाख्या पल्ली चौरपल्ल्या ग्रामटिका अस्ति ॥१७४॥

**प्रचण्डदोर्दण्डनिपीडितारिः, श्रीचण्डसिंहः पतिरस्ति तस्याम् ।**
**तद्गेहिनी सिंहवती नृसिंह–, कान्तामतिच्छन्दधरेव कान्त्या ॥१७५॥**

प्रचण्डेति—तस्यामद्रिकुडङ्गिकाख्यायां पल्ल्याम् प्रचण्डेन केनाऽप्यनभिभवनीयेन दोर्दण्डेन बाहुदण्डेन निपीडितारिः पराजितशत्रुः श्रीचण्डसिंहस्य गेहिनी भार्या सिंहवती तदाख्या,

या कान्त्या कृत्वा नृसिंहकान्तायाः लक्ष्म्याः प्रतिच्छन्दस्य प्रतिबिम्बस्य धरा इव, लक्ष्मीतुल्यकान्तिरित्यर्थः ॥१७५॥

परेद्यविर्भूतविभूतततीव्र-, दोषेण पीडामुपलम्भिता सा।
तज्जीविताशा गलिता कथञ्चित्, तेनैव किंचित् परिदेवनं मे ॥१७६॥

परे इति--परेद्यविरेकदा भूतेन जातेन प्रेतेन विभूतेन तीव्रदोषेणोत्कटोपद्रवेण कर्त्रा सा पीडामुपलम्भिता प्रापिता अस्ति, भूताविष्टा साऽस्ति इत्यर्थः। कथञ्चित्केनापि प्रकारेण तज्जीविताशा गलिता नष्टा, तद्दोषस्याप्रतिकार्यत्वादिति भावः। तेनैव हेतुना मे मम किञ्चित्परिदेवनं शोकः, अस्तीति शेषः ॥१७६॥

इत्युग्रतदुःखमसौ निशम्य, तेनैव साकं शबरेश्वरस्य।
पार्श्वेऽपि गत्वा प्रथमं श्रुतेन, मन्त्रेण तद्दोषमपाचकार ॥१७७॥

इतीति—असौ धनदत्तः इत्युक्तप्रकारमुग्रं दुःसाध्यं तद्दुःखं निशम्य तेन व्याधेनैव साकं सह शबरेश्वरस्य पल्लीपतेः पार्श्वेऽपि गत्वा प्रथमं प्राक् श्रुतेन चौरदत्तेन मन्त्रेण कृत्वा तस्याः पल्लीपतिपत्न्याः दोषम्भूतोपद्रावमपाचकार दूरीचकार ॥१७७॥

इत्थं सुधादीधितिवत् कलावान्, परोपकारं रचयन् निरीहः।
अवाप गम्भीरपुरं सरस्वद्, गम्भीरचेता धनिसार्थयुक्तः ॥१७८॥

इत्थमिति—इत्थमुक्तप्रकारेण सुधादीधितिवत् चन्द्रवत् कला विद्यानैपुण्यं ज्योत्स्नाभागश्च तद्वान् निरीहः निःस्वार्थः परोपकारं रचयन् कुर्वन् सरस्वत्सागर इव गम्भीरचेताः उदाराशयः स धनिभिः सार्थैः युक्तः गम्भीरपुरं तन्नाम नगरमवाप प्राप ॥१७८॥

मनीषितं लाभमनाप्य तत्रा-, प्ययं प्रयासं बहुमन्यमानः।
यामे रजन्याश्चरमे निदध्या, विति प्रमीलापगमादतन्द्रः ॥१७९॥

मनीषितमिति—तत्र गम्भीरपुरेऽपि मनीषितमभीष्टं लाभमापमनाप्याप्राप्य अयं धनदत्तः प्रयासम् लाभार्थकृतमुद्योगम् ग्रामाद् ग्रामान्तरगमनरूपं बहु इष्टादधिकं मन्यमानः रजन्या रात्रेश्चरमेऽन्तिमे, चतुर्थे इत्यर्थः। प्रमीलायानिद्राया अपगमात् भङ्गाद् हेतोः अतन्द्रः विबुद्धः इति वक्ष्यमाणप्रकारं निदध्यौ ॥१७९॥

विदेशमाक्रान्तवतोऽपि तादृग्, ममापि लाभो न बभूव येन।
तेनापि रत्नाकरनन्दिनीयं, प्राप्या न रत्नाकरमन्तरेण ॥१८०॥

विदेशेति--मम विलक्षणव्यवसायशालिनोऽपि विदेशमाक्रान्तवत उल्लङ्घितवतः अपि येन यतः तादृगभिलषितप्रकारः लाभः न बभूव, तेनैव हेतुना रत्नाकरम् सागरमन्तरेण विना इयं बुद्धिस्था रत्नाकरनन्दिनी लक्ष्मी न प्राप्या, अन्येनेति शेषः ॥१८०॥

इति स्थिरं चिन्तयतोऽस्य साधो,-र्विभावरी पर्यवसानमाप ।
अयं पुनस्तत्क्षणमेव वेला, कूलं वितत्यैव विभातकृत्यम् ॥१८१

इतीति--इत्युक्तप्रकारं स्थिरं शान्तेन मनसा चिन्तयतोऽस्य साधोरुत्तमस्य धनदत्तस्य विभावरी रात्रिः पर्यवसानमाप समाप्ता इत्यर्थः । पुनः अयं धनदत्तः वेलाकूले सागरतट एव विभातकृत्यम् प्रातःकृत्यं वितत्य कृत्वा, अस्याग्रेतनेनाभ्यर्चयामासेत्यनेनान्वयः॥१८१॥

अभ्यागतानामपि दैशिकानां, तृष्णामपाकर्तुमलं न यानि ।
तेषां न गौरत्वमितीव काला,-न्यम्भांसि धत्ते विरसं रसन् यः ॥१८२॥

अभीति--अभ्यागतानामतिथीना दूरदेशादागतानाम् दैशिकानाम् तद् प्रत्यासन्नदेश-भवानाञ्चापि यानि अम्भांसि तृष्णां पिपासामपाकर्तुमपनेतुं नाऽलम् समर्थम्, क्षारत्वादिति भावः । तेषामम्भसां गौरत्वं शुभ्रवर्णता न इति हेतोः इव यः रत्नाकरः विरसमश्रव्यम् रसम् पूत्कुर्वन् आक्रोशमिति यावत्, यद्वचनुपयोगि तत्सदपि निरर्थकमेवेति भावः' । कालानि गभीरत्वात्क्षारत्वाच्चः नीलाभानि अम्भांसि धत्ते, तमित्यग्रेतनेनान्वयः । अर्थ्यनुपयोगितया सदपि जलादि कालमेव, अयशसम्पादकानां कालत्वस्यैव सम्भवादिति भावः ॥१८२॥

यः प्रीणयामास सुरानशेषान्, प्रदाय पीयूषमतन्द्रितः सन् ।
स्फुरत्प्रभामण्डलभास्वराणि, रत्नानि मर्त्यानपि सर्वतोऽपि ॥१८३॥

य इति--यः रत्नाकरः अतन्द्रितः अनलसः, अकृपणस्वभावः सन्, पीयूषममृतं प्रदायाशेषान् सुरान् प्रीणयामास, सर्वतः सर्वान् मर्त्यान् मृत्युलोकस्थानपि स्फुरद्भिः प्रभामण्डलैः तेजपुञ्जैः भास्वराणि प्रकाशशीलानि रत्नानि, प्रदाय प्रीणयामासेत्यन्वयः । समुद्रमथने सुधारत्नानि च सागरान्निर्गतानीति भावः ॥१८३॥

समीरसंजाततरङ्गजालै,-रुत्सर्पिभिर्व्योम विगाहमानैः ।
स्ववल्लभां व्योमतरङ्गिणीं यः, प्रेम्णा परिष्वङ्क्तुमना इवाभात् ॥१८४॥

समीरेति--यः रत्नाकरः उत्सर्पिभिरुच्छलद्भिः, अत एव व्योम गगनं विगाहमानैः स्पृशद्भिः, अत्युच्चत्वात्तरङ्गानामिति भावः । समीरात् पवनवेगमाश्रित्य सञ्जातैः तरङ्गजालैः स्ववल्लभां स्वप्रियां, सागरस्य सरित्पतित्वादिति भावः । व्योमतरङ्गिणीमाकाशगङ्गां प्रेम्णा परिष्वंक्तुमनाः परिरिप्सुरिवाभात् लक्ष्यते स्म । उत्प्रेक्षाऽलङ्कारः, स च सागरस्य जडत्वेनेच्छाऽभावेऽपि तत्सम्बन्धोक्तेऽतिशयोक्तिमूलः ॥१८४॥

रत्नाकरं तं समवेक्ष्य सोऽपि, प्रहृष्टचेता विकसन्मुखश्रीः ।
अभ्यर्चयामास सुचारुपूजा-, सारप्रकारैरुचितैरुदारः ॥१८५॥

रत्नेति—तं तादृशं वर्णितप्रकारं रत्नाकरं जलनिधिं समवेक्ष्य प्रहृष्टचेताः प्रसन्नहृदयः, अत एव, विकसन्मुखश्रीः प्रफुल्लाननः उदारः सुमनाः स धनदत्तोऽपि उचितैः विहितैः सुचारुणामुत्तमानां पूजानां सारैः श्रेष्ठैः प्रकारैः कृत्वा अभ्यर्चयामास अथार्द्ररत्नाकरमेवेत्यर्थः । पूजयामास ॥१८५॥

॥ चतुर्भिःकलापकम् ॥

आपूर्य देश्यैरभिवाञ्छितार्थैः, क्रयाणकैः सोऽप्यथ यानपात्रम् ।
आरुह्य निर्यामकमर्थवस्त्रैः, सन्तोष्य च प्रास्थित तीरमन्यत् ॥१८६॥

आपूर्येति—अथ पूजनान्तरम्, अभिवाञ्छितार्थैः इष्टैः देश्यैः तद्देश्यभवैः क्रयाणकैः पण्यैः यानपत्रम् नवमापूर्य भृत्वा आरुह्य च, निर्यामकं पोतवाहम्, "निर्यामकाः पोतवाहा" इत्यमरः। अर्थैः धनैः वस्त्रैश्च सन्तोष्यान्यत्तीरं प्रास्थित चचाल ॥१८६॥

अन्येद्युरम्भोनिधिमध्यभाग-, मधिश्रिते तत्र स यानपात्रे ।
सांयात्रिकः कीरमवैक्षतैकं, रसालसालस्य फलं दधानम् ॥१८७॥

अन्येद्युरेकदा तत्र तस्मिन् यानपात्रे नावि अम्भोनिधेः सागरस्य मध्यभागमधिश्रिते प्राप्ते सति स सांयात्रिकः पोतवणिग् धनदत्तः "सांयात्रिकः पोतवणिगि"त्यमरः । रसालसालस्याम्रस्य फलं दधानमेकं कीरं शुकं समवैक्षत ददर्श ॥१८७॥

श्रमेण भारेण तथा विखिन्नः, पोतान्तिके नैष पपात यावत् ।
निर्यामकस्तस्य निदेशतस्तं, तावत् सुधीरानयति स्म यानम् ॥१८८॥

श्रमेणेति—श्रमेणोड्डयनश्रमेण तथा भारेण फलभारेण एष शुकः यावत् पोतान्तिके यानपात्रसमीपे समुद्र एव न पपात, तावदेव तस्य धनदत्तस्य निदेशतः सुधीः निर्यामकः पोतवाहः यानं नावमानयति स्म, शुकाधस्थले इति शेषः, यथा स नाव्यौ पतेदिति भावः ॥१८८॥

ततः समीराम्ब्वभिषेचनेन, कृपालुना तेन कृतः स सुस्थः ।
क्षणेन कीरोऽपि फलं विमुच्य, मनुष्यवाचा तमिदं जगाद ॥१८९॥

तत इति—ततः शुकपतनानन्तरम् कृपालुना तेन धनदत्तेन समीरेणाम्बुनाऽभिषेचनेन सिञ्चनेन कृत्वा स शुकः सुस्थः गतश्रमः कृतः । कीरोऽपि क्षणेन फलं विमुच्य त्यक्त्वा तम् धनदत्तं मनुष्यवाचा इदं वक्ष्यमाणं वचनं जगाद कथयामास ॥१८९॥

शुकोक्तिमेवाह—

परोपकारप्रवणस्य मह्यं, प्राणप्रदातुः करुणापरस्य ।
तन्वन्नपि प्रत्युपकारमीषद्, महाशय ! स्यामनृणः कथं ते ! ॥१९०॥

परोपेति—महाशय ! करुणापरस्य दयालोरत एव परोपकारे प्रवणस्याभिमुखस्य महाम् प्राणानां प्रदातुः समुद्रपतननिवारणादिना प्राणरक्षितुः ते तव ईषत्किमपि प्रत्युपकारं तन्वन् कुर्वन्नपि अनृणः कृतनिष्क्रयः कथं स्याम् ! नैव स्यामित्यर्थः । प्राणरक्षारूपोपकारस्य सर्वोपकारापेक्षयोत्कृष्टत्वादिति भावः ॥१९०॥

न केवलं मत्प्राणरक्षैव, किन्तु मत्कुटुम्बरक्षाऽपि त्वया कृतेत्याह—

मत्प्राणविश्राणनकर्मणा मे, न रक्षितौ किं पितरौ त्वयाऽपि ! ।
तौ यातयामावपयातनेत्रौ, यदल्पसारौ च मदेकपुत्रौ ॥१९१॥

मदिति—त्वया भवता मत्प्राणानां विश्राणनकर्मणा दानेन मे मम पितरौ मातापितरावपि किं न रक्षितौ ? अपि तु रक्षितावेवेत्यर्थः । तयोर्मदाश्रितजीवितत्वादिति भावः । तत्र हेतुमाह—यतः तौ पितरौ यातयामौ गतकालौ, जीर्णौ इत्यर्थः । तथा, अपयाते नष्टे नेत्रे ययोस्तादृशाऽन्धावित्यर्थः, अल्पसारौ वृद्धत्वादत्यन्तदुर्बलौ, अहमेवैकः पुत्रो ययोस्तादृशोः एवञ्च, स्वयमसमर्थत्वाद् पुत्रान्तराभावाच्च मदाश्रितजीवनत्वात्तयोः मद्रक्षणेन तयोरपि रक्षणकृतमेवेति भाव ॥१९१॥

ते पुण्यवन्तः पुरुषावतंसा, नित्यं परेषामुपकुर्वते ये ।
परोपकाराक्षममत्र धिग् मां, तिर्यक्स्वभावेन विदूषितं च ॥१९२॥

ते इति—ते पुरुषावतंसा पुरुषश्रेष्ठाः पुण्यवन्तः ये पुरुषाः नित्यं परेषां अन्येषां प्राणिनामुपकुर्वते, अत्र विषये च तिर्यक्स्वभावेन पक्षितया विदूषित साधनाभावेन हीनम् . अत एव परोपकारेऽक्षममसमर्थं मां धिक् , निन्दनीयोऽहमित्यर्थः ॥१९२॥

रसालसालस्य फलं तदेत-,दादीयतां भद्र ! तथाऽप्यतुल्यम् ।
स्वजातिसामान्यगुणेन यस्मा-, ल्लोके परः स्यादुपकार एव ॥१९३॥

रसालेति—भद्र ! तथापि ममोपकाराक्षमत्वेऽपि अतुल्यमनुपममेतद्रसालशालस्य फलमाम्रफलमादीयताम् । एतादृगेव प्रत्युपकार मया सम्भवतीत्याह—यस्माद्धेतोः लोके पर उत्कृष्ट उपकारः स्वजातिसामान्येन स्वजातेः उचितेन लभ्येन वा गुणेन शक्त्या एव स्यात् , नहि कोऽपि स्वजात्यधिकं कर्त्तुं समर्थ इत्यर्थः ॥१९३॥

स विस्मितस्तस्य गिरं निशम्य, प्रोचे शुकैकेन फलेन किं मे ।
आस्वादय स्वादुतमं त्वमेतत् , कूरादिकं किञ्चन च स्वरुच्या ॥१९४॥

सइति—स धनदत्तः तस्य शुकस्य गिरं मनुष्यवाग्रूपं वचनं निशम्य विस्मितः प्रोचे, किमित्याह—शुक ! एकेन फलेन मे किम् ! नैकेन मम कस्यापि प्रयोजनस्य सिद्धिः, अतः स्वादुतमम् एतत्फलम् किञ्चित्कूरादिकं भक्तादिकञ्च स्वरुच्या स्वरुचिपूर्वकम् , यथा तुभ्यं रोचते तथा आस्वादय भुङ्क्ष्व ॥१९४॥

आम्रस्य तस्याथ शुकः प्रभाव,-मस्मै जगौ विन्ध्यमहीधरेऽस्ति ।
महाटवी केशरिणां कुलानि, यस्यामवात्सुर्भयवर्जितानि ॥१९५॥

आम्रस्येति—अथ धनदत्तोक्त्यनन्तरम् शुकः तस्य आम्रस्य प्रभावं सामर्थ्यविशेषमस्मै धनदत्ताय जगौ, किमित्याह—विन्ध्याख्ये महीधरे पर्वते महाटवी अस्ति यस्याम् केशरिणां सिंहानां कुलानि भयवर्जितानि, वनस्य महत्त्वान्तरसञ्चाराभावादितिभावः, अवात्सुः वसन्ति स्म ॥१९५॥

तत्रातितुङ्गद्रुकुलायभाजौ, चिरं मम स्तः पितरौ सुखेन ।
तयोरभूवं सुत एककोऽहं, मद्भक्तिवल्लीद्रुमयोरजस्रम् ॥१९६॥

तत्रेति—तत्र वने अतितुङ्गस्य अत्युच्चस्य द्रोर्वृक्षस्य कुलायभाजौ नीडवासिनौ मम पितरौ मातापितरौ चिरं सुखेनाक्लेशेन स्तः वसतः स्म । तयोः पित्रोः अजस्रम् मद्भक्तिरेव-वल्ली लता तदाश्रयभूतयोः द्रुमयो वृक्षयोरिव, सतोः, अहमेकक एक एव सुतोऽभूवम् ॥१९६॥

एकत्र कुत्रापि वनेऽन्यदाऽहं, रसालशाखाविनिविष्ट एव ।
इति ब्रुवाणं स्वविनेयमग्र्यं, संशुश्रुवानेकमुनिं शमस्थम् ॥१९७॥

एकत्रेति—अन्यदा अहम् एकत्र कुत्राऽपि वने रसालस्य शाखायां विनिविष्ट उपविष्ट एव सन् शमस्थम् शमिनमेकं मुनिम् अग्र्यम् मुख्यं स्वविनेयं स्वशिष्यमिति वक्ष्यमाणप्रकारं ब्रुवाणं कथयन्तं संशुश्रुवान् ॥१९७॥

मुन्युक्तिमेवाह—

अम्भोधिमध्यस्थित विन्ध्यभूभृ-, त्पादे महानाम्रमहीरुहोऽस्ति ।
सदाफलः तस्य फलैरसाम्यै-,रास्वादितैर्व्याधिपरिक्षयः स्यात् ॥१९८॥

अम्भोइति—अम्भोधेः समुद्रस्य मध्यस्थिते विन्ध्याख्यस्य भूभृतः पर्वतस्य पादे नीचैर्भागे प्रत्यन्तपर्वते सदाफलः, न तु ऋतुविशेषे एव महान् आम्रमहीरुहः अस्ति । तस्याम्रवृक्षस्य असाम्यैरनुपमैः फलैरास्वादितैः सद्भिः व्याधिपरिक्षयः रोगविनाशः स्याद् भवति ॥१९८॥

इत्यद्भुतां तस्य निशम्य साधो-, स्तथ्यां च पथ्यां च गिरं तदेमाम् ।
अन्धत्वदोषापगमाय पित्रोरेकं तदीयं फलमाददेऽहम् ॥१९९॥

इतीति—तदा तस्मिन् काले तस्य साधोर्मुनेः तथ्यां सत्यां पथ्यां हिताञ्च इत्युक्तप्रकाराम् अद्भुतामश्रुतपूर्वां गिरं निशम्याहम् पित्रोरन्धत्वदोषस्यापगमाय विनाशाय तदीयं मुन्युक्ताम्रस्यैकं फलमाददे ॥१९९॥

समाव्रजन् वर्त्मनि निर्विलम्बं, फलातिभारेण पतन् पयोधौ ।
सौम्य ! त्वया न्यायवतेव राय-,माकृष्य पार्श्वे समवापितोऽस्मि ॥२००॥

समेति—सौम्य ! निर्विलम्बं शीघ्रं समाव्रजन् गच्छन् वर्त्मनि मार्गे फलस्यातिभारेण हेतुना पयोधौ समुद्रे पतन् न्यायवता नीतिज्ञेन रायं धनमिव त्वया आकृष्य युक्तिपूर्वकमानीय पार्श्वे निजसमीपं समवापितोऽस्मि ॥२००॥

**ज्वरादिरोगापमृतिप्रणाश-, स्फुटप्रभावं फलमेतदेव ।**
**लात्वा धृतिं मे कुरु मानसस्य, नैतावता व्येति तवोपकारः ॥२०१॥**

ज्वरेति—ज्वरादिरोगस्यापमृतेश्च प्रणाशे निवारणे स्फुटप्रभावं व्यक्तसामर्थ्यमेतदेवैकं फलं लात्वा स्वीकृत्य मे मम मनसः धृतिं सन्तोषं कुरु सम्पादय, नायं तवोपकारस्य निष्क्रयः इत्याह एतावता फलैकग्रहणेन तव उपकार. न व्येति प्रतिशुद्ध्यति, फलैकदानापेक्षया प्राणदानस्यातिमहत्त्वादिति भावः ॥२०१॥

**एवं निगद्यामतिशृण्वतेऽपि, फलं प्रदाय प्रययौ शुकोऽस्मै ।**
**पोतः पुनः कैश्चिदवाप घस्त्रैः कञ्चित् तटं पूगतमालमालम् ॥२०२॥**

एवमिति—एवमुक्तप्रकारेण निगद्य कथयित्वा अप्रतिशृण्वते ग्रहीतुमिच्छामप्रकटयतेऽपि अस्मै धनदत्ताय फलमाम्रफलं प्रदाय शुकः प्रययौ । पोतः यानपात्रं पुनः कैश्चिद् घस्त्रैः दिवसैः कृत्वा पूगानां क्रमुकानां तमालानाञ्च माला यस्मिन् तादृशं कञ्चित्तटमवाप । "घोण्टा तु पूग क्रमुक" इत्यमरः ॥२०२॥

**अथ फलदाने धनदत्तचिन्तामाह-**

**आस्वादितेनापमृतिच्छिदाऽपि, स्वादीयसाऽनेन फलेन किं मे !?**
**विश्वोपकारप्रवणाशयस्य, शयस्य कस्य प्रददे तदेवत् ॥२०३॥**

आस्वेति—आस्वादितेन भक्षणेन कृत्वा अपमृतिच्छिदा अपमृत्युनाशकेनाप्यनेन स्वादीयसा अतिस्वादुना फलेनाम्रफलेन मे मम किम् ? न किमपि प्रयोजनमित्यर्थः । तस्मात् एतत्फलम् विश्वस्य सर्वस्योपकारे प्रवणस्तत्पर आशयो मनोवृत्तिर्यस्य तस्य कस्य पुरुषस्य शयस्य हस्ते, सम्बन्धसामान्ये षष्ठी । प्रददे ? "पाणिः शमः शयो हस्त" इत्यमरमाला । विशिष्टं फलमुपकारिणे देयम्, अन्यथा विपरीतोपयोगसम्भवात् , कश्च स पात्रमित्येवं धनदत्तस्य चिन्ता ॥२०३॥

**आः ! ज्ञातमाखण्डलधामधाम-, विश्वम्भरामण्डलपालकस्य ।**
**भूमीशितुः कस्यचन प्रदाय, परोपकर्तॄनखिलान् जयामि ॥२०४॥**

आः इति—आः इति स्मरणे । ज्ञातं स्मृतम् निश्चितम् वा । किमित्याह—आखण्डलधामधाम्नः इन्द्रधामतुल्यतेजस्विनः विश्वम्भरामण्डलपालकस्य महीपतेः कस्यचिद् भूमीशितुः राज्ञः प्रदाय फलमिति सम्बध्यते । अखिलान् परोपकर्तॄन् जयामि महच्चैवंविधः कोऽप्युपकारी य एवं गुणं फलं राज्ञे समर्पयेदिति तथा करणेनाहं सर्वोत्कर्षेण वर्ते, असाधारणक्रियत्वादिति भावः ॥२०४॥

एवं विचिन्त्यैव स तस्य वेला-, कूलाधिपस्योपनिनाय तच्च ।
दिक्चक्रविद्योतकरत्नपूर्ण-, स्थाले निवेश्य प्रमदं दधानः ॥२०५॥

एवमिति—एवमुक्तप्रकारेण विचिन्त्य निर्धार्य स धनदत्तः दिक्चक्राणां दिशां विद्योतकैः रत्नैः पूर्णे स्थाले तत्फलं निवेश्य स धनदत्तः प्रमदं दधान हृष्यन् तस्य वेलाकूलाधिपस्य एव उपनिनाय उपहृतवान् इति ॥२०५॥

माहात्म्यमस्यैव फलस्य तादृक्, तदाननादेव निशम्य भूपः ।
समग्रमेतस्य मुमोच शुल्कं, शरन्निशानायकशुक्लकीर्तिः ॥२०६॥

माहात्म्यमिति -- अस्योपाहृतस्यैव फलस्य तदाननाद् धनदत्तमुखादेव तादृग् अपमृत्य्वादि हरणरूपं माहात्म्यं प्रभावं निशम्य शरदः शरदर्त्तोः निशानायकश्चन्द्र एव शुक्ला कीर्तिर्यस्य तादृशः भूपः अस्य धनदत्तस्य समग्रं शुल्कं वाणिज्यकरं मुमोच अत्यजत् ॥२०६॥

धनानि सन्तोषनिबन्धनानि, तत्रार्जयित्वा सुबहूनि चैषः ।
तेनैव गम्भीरपुरान्तगेन, यथा चचाल स्वपुरं प्रतीभ्यः ॥२०७॥

धनानीति—तत्र वेलाकूले सन्तोषनिबन्धनानि सन्तोषप्रदानि सुबहूनि धनानि अर्जयित्वा चैष-इभ्यः श्रेष्ठी धनदत्त· गम्भीरपुरस्यान्तगेन समीपगेन तेनैव पथा मार्गेण स्वपुरं प्रति चचाल ॥२०७॥

कादम्बरीनाममहाटवीभू ,-भागाधिवासानधितस्थुषोऽस्य ।
पुलिन्दधाटी निपपात रात्रा-, वतर्किता भीमरवा कुतोऽपि ॥२०८॥

कादम्बरीति—कादम्बरीनाम महाटवी भूभागे अधिवासान् वसतीरधितस्थुषोऽधिवसतोऽस्य धनदत्तस्य सतः रात्रौ कुतोऽपि अतर्किता अकस्मात् पुलिन्दधाटी भिल्लसेना भीमरवा भयङ्कर-शब्दायमाना सती निपपात लुण्टनाय समुपस्थिता ॥२०८॥

हताहतेत्युद्धतभीमघोषा, भटास्तदीया धृतमण्डलाग्राः ।
संनह्य संनह्य पुलिन्दवीरै,-र्महौजसो योद्धुमुपाक्रमन्त ॥२०९॥

हतेति—हत आहत इत्येवमुद्धतो तदग्रे भीमो घोषो येषां ते तादृशाः धनदत्तस्य महौजसः महातेजस्विनः भटाः योधाः धृतमण्डलाग्राः करकृतकृपाणाः सन्तः संनह्य संनह्य पुनः पुनः प्रत्येकं सज्जीभूय पुलिन्दवीरैः सह योद्धुमुपाक्रमन्त प्रवृत्ताः ॥२०९॥

युद्धेऽसमानेऽप्यथ जायमाने, तद्द्वारभट्टो विहितोर्ध्वबाहुः ।
जयं वदन्नस्य बभाण चैवं, जयन् घनं तारतरस्वरेण ॥२१०॥

युद्धेति—अथ प्रवृत्ते शस्त्रसम्पाते युद्धेऽसमाने असाधारणे, यद्वा द्वयोः समानबलत्वाभावादतुल्येऽपि जायमाने सति तस्य धनदत्तस्य द्वारभट्टः द्वारपालयोद्धः विहितोर्ध्वबाहु, अस्य धनदत्तस्य

जयं वदन् तारतरेणात्युच्चेन स्वरेण घनं मेघं, तच्छब्दमित्यर्थः । जयन् अधः कुर्वन् एवं वक्ष्य माणप्रकारं बभाण च ॥२१०॥

तद् भणितिमेवाह—

अव्याहतः सिद्धनदीप्रवाह-, इवोपकारप्रकरोऽत्र यस्य ।
असंविदानस्य परात्मभेदं, जयत्ययं श्रीधनदत्त एव ॥२११॥

अव्याहत इति—अत्र लोके परात्मभेदं स्वपरभेदमसंविदानस्याजानानस्य सर्वत्र समबुद्धेरित्यर्थः । यस्य धनदत्तस्य सिद्धनद्या गङ्गायाः प्रवाह इव अव्याहतः अस्खलितः उपकार. सोऽयं श्रीधनदत्त एव जयति जयश्रिया युज्यते न पुलिन्दः ॥२११॥

इदं समाकर्ण्य किरातराजः, स चण्डसिंहः स्वभटानुवाच ।
भो भो भटाः ! युद्धमपास्य तावद् , गिरं मदीयां शृणुतावधानात् ॥२१२॥

इदमिति—इदं भट्टोक्तं समाकर्ण्य किरातराजः स पूर्वम् वर्णितः चण्डसिंहः स्वभटानुवाच, किमित्याह—भोः भोः भटाः ! तावत् युद्धमपास्य त्यक्त्वा मनसा एकाग्रीकरणात् अवधानात्सावधानं मदीयां गिरं शृणुत ॥२१२॥

तदुक्तं गिरमेवाह—

अयं स चेत् सार्थपतिर्ममैवो-, पकारकारी धनदत्तसाधुः ।
तदाहमेव प्रथमं कृतघ्नो-,भवादृशैरप्यनवेक्ष्यवक्त्रः ॥२१३॥

अयमिति—अयं भटोक्तः धनदत्तसाधु. मम उपकारकारी एव सार्थपतिश्चेत् तदाऽहं प्रथमं प्रधानं कृतघ्नः अकृतज्ञ एव अत भवादृशैः अपि अनवेक्ष्यवक्त्र अप्रेक्षणीयमुखः । यो हि उपकारं न मनुते सोऽधम इति सोऽनवेक्ष्यमुख एवेति भावः ॥२१३॥

ततो विनिश्चित्य स तद्भटेभ्य -, स्तमेव गत्वा प्रणिपत्य भक्त्या ।
सखा तवास्मीत्युपरुध्य सोऽपि, पल्लीं निजामानयति स्म मानात् ॥२१४॥

तत इति—ततस्तदनन्तरम् स चण्डसिंह तद्भटेभ्यः सकाशात् पृच्छादिना विनिश्चित्य स एवायमिति निर्णीय तमेव धनदत्तसमीपं गत्वा भक्त्या प्रणिपत्यं सखा मित्रं तवास्मीत्युपरुध्यागृह्य सः चण्डसिंहोऽपि मानात्सम्मानपूर्वकं निजां पल्लीमानयति स्म इति ॥२१४॥

अस्मै स मुक्ताफलचित्रकाय, त्वक्चामरेभायतदन्तराशीन् ।
प्राणप्रियां प्राणयता त्वयेमा-, मुज्जीवितोऽस्मीति वदन्नदत्त ॥२१५॥

अस्मै इति—स चण्डसिंहः इमां मदीयां प्राणप्रियां भार्य्यामुज्जीवयता नीरुजां कुर्वता त्वया उज्जीवितः दत्तजीवनोऽस्मीति वदन् अस्मै धनदत्ताय मुक्ताफलानि चित्रकायानाम् व्याघ्रविशेषाणां मृगाणां वा त्वचः चर्माणि चामराणि बालव्यजनानि इभानां गजानामायतानां दीर्घानां दन्तानां राशींश्च अदत्त ददौ ॥२१५॥

पल्लीशमापृच्छ्य स रात्नसारिः, सार्थेन सार्थेन दिनैः कियद्भिः ।
अनुस्मरंस्तस्य कृतज्ञभावं, प्रत्याययौ स्वं नगरं नगोच्चः ॥२१६॥

पल्लीशमिति–पल्लीशं चण्डसिंहमापृच्छ्य समाजयित्वा नगोच्चः पर्वत इव धीरः स रात्नसारिः धनदत्तः तस्य चण्डसिंहस्य कृतज्ञभावं कृतज्ञतामनुस्मरन् सार्थेन धनसहितेन सार्थेन कियद्भिः दिनैः स्वं नगरं प्रत्याययौ समागमत् ॥२१६॥

कृतार्थयन्नर्थिजनानशेषान्, स्वोपार्जितेनैष धनोच्चयेन ।
गर्वं त्यजन् पूर्वजशीलितस्य, गृहस्थधर्मस्य ललौ फलानि ॥२१७॥

कृतेति–एष धनदत्तः स्वेनोपार्जितेन धनोच्चयेन धनराशिना अशेषान् अर्थिजनान् याचकान् कृतार्थयन् तृप्तान् कुर्वन् गर्वं दानादिजन्याहंभावं त्यजन् पूर्वजेन शीलितस्यानुभूतस्य गृहस्थधर्मस्य फलानि पुमर्थान् त्रीन् ललौ प्राप ॥२१७॥

उपासकानां समुपास्य धर्मं, समाः सुबुद्धिः कियतीः सुभाग्यः ।
प्रव्रज्य पार्श्वे सुगुरोरकामात्, क्रमादकार्षीत् परमार्थसिद्धिम् ॥२१८॥

उपेति–उपासकानाम् श्रावकाणां धर्मं द्वादशविधधर्मं कियतीः समाः वर्षाणि समुपास्य सेवित्वा, "हायनोऽस्त्री शरत्समाः" इत्यमरः। सुबुद्धिः सुष्ठु बुद्धिर्यस्य स तादृशः सुभाग्यः सुष्ठूत्तमं भाग्यं यस्य स धनदत्तः सुगुरोः पार्श्वे प्रव्रज्य प्रव्रज्यामादाय अकामात् निष्कामं व्रताद्यनुष्ठानाद्धेतोः क्रमात् परमार्थसिद्धिमकार्षीत् निर्वाणसम्पादमवापेत्यर्थः ॥२१८॥

इतश्च भूपोऽप्यमृताम्रकम्र–, फलं तदीशो धनदत्तदत्तम् ।
अवीवपत् सर्वजनोपकृत्यै, स्वोद्यानभूमीषु वनावनेभ्यः ॥२१९॥

इत इति इतः पक्षान्तरे च भूपः तदीशः वेलाकूलाधिपः धनदत्तेन दत्तम् अमृताम्रस्य कम्रं मनोहरं फलम् सर्वजनानामुपकाराय, तेनैकेन हि कस्यचिदेकस्यैव लाभः न सर्वेषामिति बुद्ध्येति भावः। वनावनेभ्यः उद्यानपालसकाशात् स्वोद्यानभूमीषु अवीवपत् वेपयति स्म ॥२१९॥

अन्तर्बहिश्चापि वृतैर्निविष्टैः, समं निविष्टैरथ यामिकौघैः ।
संरक्षितश्चूततरुर्जनानां, मनोरथैः सार्धमवर्धतायम् ॥२२०॥

अन्तरिति—अन्तः बहिश्चापि वृतैः कृतावरणैः निविष्टैः निपुणैः समम् रोपणसमकालमेव निविष्टैः नियुक्तैः यामिकौघैः रक्षकवृन्दैः संरक्षितः अयं चूततरुराम्रवृक्षः जनानाम् मनोरथैः फलादिग्रहणेच्छाभिः सार्धमवर्धत इति ॥२२०॥

वर्षेषु गच्छत्सु कियत्स्वपीमे, तपागमे यामिकपूरुषास्ते ।
फलोदयं तस्य निवेद्य राज्ञे,-ऽस्याढौकयन्नेव फलं मनोज्ञम् ॥२२१॥

वर्षेष्विति—कियत्सु वर्षेषु गच्छत्सु व्यतीतेषु तपागमे ग्रीष्मे ते नियुक्ता इमे यामिकपुरुषाः तदाम्रवृक्षरक्षकाः तस्य आम्रवृक्षस्य फलोदयं फलोत्पत्तिं राज्ञे निवेद्य विज्ञाप्य, वृक्षः फलित इत्येवमिति भावः। अस्याम्रस्य मनोज्ञं मनोहरं फलमपि अढौकयन् समर्पितवन्तः ॥२२१॥

श्रुत्वा नृपः सेवधिलाभवत् तच्-, चकार तेभ्यः परितुष्टिदानम् ।
तुष्टः पुनस्तत्फलमीक्षमाणो, विचारयामास हृदेति धीरः ॥२२२॥

श्रुत्वेति—नृपः सेवधेः निधेर्लाभवत्, तत्फलस्य बहूपकारकत्वादिति भावः। तत्तद्वृक्षफलोदयं श्रुत्वा तेभ्यो रक्षकेभ्यः परितुष्टिदानं परितोषितदानं चकार। तुष्टः पुनः धीरः मतिमान् तत्फलमीक्षमाणः हृदा मनसा इति वक्ष्यमाणप्रकारेण विचारयामास ॥२२२॥

स्वदेवगुर्वोरिदमप्रदाय, न युज्यते स्वादयितुं ममापि ।
चित्ते विचिन्त्येति फलं तदाशु, पुरोधसेऽदाद् गुरुभक्तिसक्तः ॥२२३॥

स्वेति—इदं प्रथमं फलं स्वेभ्यो देवेभ्यो गुरुभ्यश्चाप्रदाय मम स्वादयितुं भक्षयितुं न युज्यते, देवगुर्ववशिष्टं भुञ्ज्यादिति गृहस्थधर्मश्रवणादिति भावः। इतीत्थं चित्ते विचिन्त्य गुरुभक्तिसक्तः नृपः तत्फलमाशु पुरोधसेऽदात् ॥२२३॥

पुरोहितोऽप्याप्लवदेवपूजा, पूर्वाणि कार्याणि पुरा विधाय ।
आस्वादयामास फलं रसाढ्यं, माधुर्यभङ्ग्यां विजितामृतं तत् ॥२२४॥

पुरो इति—पुरोहितः अपि पुरा प्रथममाप्लवः स्नानं, "आप्लाव आप्लवः स्नानम्" इत्यमरः। देवपूजा च पूर्वं येषां तानि सन्ध्यावन्दनादीनि कार्याणि विधाय माधुर्यस्य भङ्ग्यां श्रेष्ठतायां विजितामृतं सुधाऽधःकारकं रसाढ्यमतिरसवत् तत्फलमास्वादयामासेति ॥२२४॥

आस्वादमात्रेण स तस्य मूर्च्छन्, शनैः शनैर्मृत्युमवाप विप्रः ।
तद् दुःश्रवं भूमिपतिर्निशम्य, सन्तापितश्चिन्तयति स्म चैवम् ॥२२५॥

आस्वादेति—स विप्रः तस्य आस्वादमात्रेण भक्षणत एव शनैः शनैः मूर्च्छन् मूर्च्छां प्राप्नुवन् मृत्युमवाप। दुःश्रवमप्रियं तत्पुरोहितमृत्युं निशम्य सन्तापितः दुःखितः भूमिपतिरेवं वक्ष्यमाणं चिन्तयति स्म ॥२२५॥

भूपतिचिन्तामेवाह—

अदः फलं केनचिदुग्ररोषाद्, मद्विद्विषा प्रैषि विषाम्रजातम् ।
मात्सर्यभारेण मदीयराज्य-, प्रेक्षाऽक्षमेनाजिपराजितेन ॥२२६॥

मंद इति—विषाम्रेण जातमुत्पन्नमदः प्रत्यक्षं फलमाम्रफलम्, आजौ युद्धे पराजितेन मयाऽभिभूतेन, अतएव, मात्सर्यस्येर्ष्याया भारेणाधिक्येन मदीयराज्यस्य प्रेक्षायामवलोकनेऽक्षमेण स द्वेषेण केनचिन्मद्विद्विषा शत्रुणा उग्ररोषात्सातिशयकोपमाश्रित्य प्रैषि प्रेषितम् इति ॥२२६॥

पट्टेभपट्टाश्वकुमारदेवी, पुरोहितै राडपमृत्युरेतैः ।
विहन्यते चेति पुनः श्रुतिर्या, पुरोधसा तेन ऋतीकृता सा ॥२२७॥

पट्टेति—एतैः उक्तैः पट्टेभैः मुख्यगजैः पट्टाश्वैः कुमारैः राजपुत्रैः देवीभिः राज्ञीभिः पुरोहितैश्च राजः राज्ञः अपमृत्युः विहन्यते निवार्यते इतीत्थञ्च या श्रुतिः नीतिः सा श्रुतिः पुनः तेन मृतेन पुरोधसा पुरोहितेन ऋतीकृता सत्यापिता, स्वयं भुक्त्वा विषफलं मृत्वा च मद्रक्षणं तेन विहितमित्यर्थः ॥२२७॥

ध्यात्वेति राजा निदिदेश भृत्यां-, श्छेत्तुं तमाम्रं प्रसरत्प्रकोपः ।
द्रुतं द्रुतं तेऽपि तदैव गत्वा, कठोरधारैरलुनन् कुठारैः ॥२२८॥

ध्यात्वेति—इतीत्थं ध्यात्वा विचार्य प्रसरत्प्रकोपः विवृद्धक्रोधः राजा तमाम्रमाम्रवृक्षं छेत्तुं लवितुं भृत्यानादिदेशाज्ञापयामास। ते भृत्या अपि द्रुतं द्रुतमतिशीघ्रं गत्वा तदा राजाज्ञा-समकालमेव कठोरधारैरतितीक्ष्णैःकुठारैः छेदसाधनविशेषैः अलुनन् अच्छिन्दन् ॥२२८॥

छिन्नं तमाम्रं विनिशम्य लोका,-विषाम्रबुद्ध्या सुखमृत्युहेतोः ।
त्वग्दोषवाधिर्यरुजादिबाधा,-विबाधिता मङ्क्षु जना अधावन् ॥२२९॥

छिन्नमिति—लोकाः तमाम्रं छिन्नं निशम्य विषाम्रबुद्ध्या विषाम्रफलमिदमिति बुद्ध्या सुखेनाक्लेशेन मृत्युहेतोः मरणाय, प्रकारान्तरेण मरणे क्लेशस्यावश्यम्भावादिति भावः। त्वग्दोषेण कुष्ठादिना वाधिर्यरुजादिरूपया च बाधया पीडया मरणादप्यधिककष्टप्रदया बाधिताः पीडिताः जना मङ्क्षु शीघ्रम् अधावन्, यथा न तदाम्रफलेन वञ्चिता स्याम इति ॥२२९॥

फलानि पूर्वेऽप्यपरे सुमानि, पत्राणि केचित् परिगृह्य चादुः ।
तदैव ते मन्मथमूर्तिरूपा-, स्तत्तद्रुजानां विलयाद् बभूवुः ॥२३०॥

फलानीति— पूर्वे पूर्वमागताः फलानि अपरे पश्चादागता अलब्धफलाः केचित् सुमानि मञ्जरीः पत्राणि अपि परिगृह्य, विषवृक्षस्य सर्वमेव विषप्रदमिति बुद्ध्या आदुः भक्षयामासुश्च। तदैव भक्षणान्तरमेव ते भक्षकाः तत्तद्रुजानां रोगाणां विलयात् नाशाद्धेतोः मन्मथमूर्त्तिरूपात्कामदेवा कृतयो बभूवुः ॥२३०॥

संश्रुत्य चैतान् स्मरवत् सुरूपां–, स्तान् यामिकान् व्याहरति स्म भूपः ।
तरुस्थितं किं फलमाहृतं तत्, किं वा धरित्र्यां पतितं भवद्भिः ? ॥२३१॥

संश्रुत्येति—एतान् भक्षितफलान् स्मरवत्कामदेववत् सुरूपान् संश्रुत्य भूपः तान् यामिकान् प्रहरिकान् व्याहरति पृच्छति स्म, किमित्याह–भवद्भिः तत् मह्यमर्पितं फलं तरुस्थितं तरोरुपरि वृन्तसंलग्नमेवाहृतं सञ्चितम् किं वा धरित्र्यां पतितम् आहृतमिति ? ॥२३१॥

व्यजिज्ञपंस्तेऽथ जनाधिनाथ !, फलं रजन्यां गलितं स्वतोऽपि ।
अस्माभिरासाद्य सुतुष्टचित्तैः, संप्रापितं ढौकनिकात्वमेव ॥२३२॥

व्यजीति—अथ भूपपृच्छानन्तरम् ते यामिकाः व्यजिज्ञपन्, किमित्याह्–जनाधिनाथ ! रजन्यां रात्रौ स्वतोऽपि स्वत एव, न तु यत्नात् गलितं पतितं फलम् अस्माभिरासाद्य गृहीत्वा सन्तुष्टचित्तैः विलक्षणप्रथमपक्वफललाभाद् हृष्टैः सद्भिः ढौकनिकात्वम् उपहारत्वमेव सम्प्रापितम् भवेत् उपहृतमेवेत्यर्थः ॥२३२॥

राजाऽथ निश्चित्य विपश्चिदीड्यो, भुजङ्गमक्ष्वेडपरिप्लुतं तत् ।
विवेकवैकल्यभुजङ्गदष्टं, स्वं संविदन् बह्वनुतापमाप ॥२३३॥

राजेति—अथ यामिकोक्त्यनन्तरम्, विपश्चिद्भिः पण्डितैरीड्यः वर्णनीयः राजा तत्फलं भुजङ्गमस्य क्ष्वेडेन विषेण परिप्लुतं व्याप्तं निश्चित्य स्वञ्चात्मानञ्च विवेकस्य, विचारस्य वैकल्यरूपेण अविवेकरूपेण भुजङ्गेन दष्टं ग्रस्तं संविदन् जानन्, अविवेकेन मया वृक्षश्छिन्न इत्येवं बहु अनुतापं पश्चात्तापमाप ॥२३३॥

अथ वत्सराजः कथामुपसंहरन् जितशत्रुं प्रत्याह—

दुरन्ततैवं कुपरीक्षितस्य, कार्यस्य विद्वद्भिरवेक्षणीया ।
विचक्षणैस्तत्सुपरीक्ष्य कार्यं, कार्यं विवेकप्रतिपत्तिभाग्भिः ॥२३४॥

दुरन्तेति—कुपरीक्षितस्य अविचारितस्य कार्यस्य एवं प्रागुक्तप्रकारेण दुरन्तता दुष्परिणामता विद्वद्भिरपेक्षणीया विचारणीया, हृदि धारणीया वा । तत्तस्मात्प्रागुक्तकुपरिणामाद्धेतोः विवेकस्य प्रतिपत्तिः प्राप्तिः तद्भाग्भिः विवेकिभिः विचक्षणैः सुधीभिः कार्यम् सुपरीक्ष्य सुविचार्य कार्यं विधेयम् ॥२३४॥

कथां निगद्येति पुरो निषण्णं, मनाग्विषण्णं हृदये तथोक्त्या ।
रात्रेर्द्वितीयप्रहरे व्यतीते, धराधवस्तं व्यसृजद् गृहाय ॥२३५॥

कथामिति—इत्युक्तप्रकारां कथां वार्तां निगद्योक्त्वा पुरोऽग्रे निषण्णमुपविष्टं तथोक्त्या भ्रातुः शिरश्छित्वा आनयेत्युक्त्या हृदये विषण्णं खिन्नं तम् वत्सराजम् धराधवः जितशत्रुः रात्रेः द्वितीयप्रहरे व्यतीते गृहाय गृहमागमनाय व्यसृजत् ॥२३५॥

अथागतं वल्लभराजसंज्ञं, प्रवाद्यमानैर्गतयामवाद्यैः ।
विबुद्धमाचष्ट नृपो निदेशं, दिशामि ते चेत् कुरुषेऽविलम्बम् ? ॥२३६॥

अथेति—अथ वत्सराजगमनानन्तरम् वारक्रमेण प्रवाद्यमानैः गतयामस्य व्यतीतप्रहरस्य सूचकैः वाद्यैः विबुद्धम् गतनिद्रम्, अथ चागतम् वल्लभराजसंज्ञं नृपः आचष्ट, किमित्याह–निदेशं दिशामि आज्ञापयामि चेत्ते, तर्हि अविलम्बं कुरुषे करिष्यसि ? ॥२३६॥

विज्ञस्ततो व्यज्ञपयत् स चार्यं, विभो ! न भृत्याः प्रभुवागुपेक्षाः ।
नृपः पुनः प्राह तदाशु गत्वा, विचारवर्जं जहि देवराजम् ॥२३७॥

विज्ञ इति—ततः राजोक्त्यनन्तरम् स चार्यं विज्ञः सुमतिर्वल्लभराजः व्यज्ञपयत्, किमित्याह–विभो ! भृत्याः प्रभुवागुपेक्षाः स्वामिनिदेशोपेक्षका न, भवन्तीति शेषः । पुनः नृपः प्राह, किमित्याह–तत्तर्हि आशु गत्वा विचारवर्जम्, अयं हन्तव्यो न वेत्येवमविचार्य मन्निदेशमात्रतः देवराजं जहि ॥२३७॥

प्रमाणमादेश इतीरयित्वा, विलम्ब्य किञ्चिद् विनिवृत्त्य सोऽपि ।
निजाग्रजं जाग्रतमेव राज्ञे, निवेद्य चैतां स कथामवादीत् ॥२३८॥

प्रमाणमिति—आदेशः प्रमाणं इतीत्थमीरयित्वा कथयित्वा किञ्चिद्विलम्ब्य वत्सराजवत् विनिवृत्त्य स वल्लभराजोऽपि निजाग्रजं देवराजं जाग्रतमेव देवराजो जाग्रत्येवातो हननावसरो न प्राप्त इत्येवं निवेद्य च स वल्लभराजः एतां वक्ष्यमाणां कथामवादीत् ॥२३८॥

पुरोत्तमे राजपुरे पुरे राड्, यथार्थनामा रिपुमर्दनोऽभूत् ।
औदार्यधैर्यप्रमुखा गुणौघा, यमाश्रयन् वर्ण्यविवेकभाजम् ॥२३९॥

पुरोत्तमे इति—पुराणामुत्तमे श्रेष्ठे राजपुरे तदाख्ये पुरे नगरे यथार्थनामा रिपुमर्दनम् रिपुं मर्दयतीत्यर्थसम्पादकत्वात्तदाख्य राट् राजाऽभूत् यं नृपं वर्ण्यं प्रशस्यं विवेकं सदसद्विचारं भजतीति तं तादृशम् विवेकिनम् औदार्यधैर्यप्रमुखा गुणौघा आश्रयन् स्वयमेवाश्रयन्ति स्म ॥२३९॥

तद्वल्लभाऽजायत रत्नमाला, सुरत्नमाला धृतभूषणा या ।
भोगान् यथाऽमाऽनुभवन् निनाय, शच्येव शक्रः समयं स राजा ॥२४०॥

तदीति—तस्य रिपुमर्दनस्य वल्लभा भार्या रत्नमाला तदाख्या अजायत। तया धृतं शोभितं या रत्नमाला सुरत्नानां माला श्रेणिः धृतिः भूषणं यस्याः सा तादृशी सुरत्नभूषणेत्यर्थः आसीत्। यया रत्नमालया अमा सह शक्रः इन्द्रः शच्या इन्द्राण्या सहेव भोगान् सुखानि अनुभवन् स राजारिपुमर्दनः समयं कालं निनाय यापयामास ॥२४०॥

आस्थानमास्थाय नृपे स्थितेऽस्मिन्, विज्ञापितो वेत्रभृताऽन्यदाऽऽगात्।
कश्चिद् बटुर्माल्यविभासिहस्तः, शस्तः प्रसिद्धैः स्वगुणैर्विचित्रैः ॥२४१॥

आस्थानमिति—अन्यदा आस्थानं सभामण्डपमास्थायाधिष्ठाय स्थितेऽस्मिन् नृपे सति वेत्रभृता द्वारपालेन विज्ञापितः निवेदितः माल्येन विभासिहस्तः शोभितपाणिः प्रसिद्धैः विचित्रैः विविधैः स्वगुणैः शस्तः प्रशंसार्हः कश्चिद्बटुः ब्रह्मचारी बालः अगात् ॥२४१॥

जयेति वाचं प्रणिगद्य हृद्यां, विप्रो यथास्थानमुपाविशत् सः।
तां संसदं क्षोणिपतिः क्रमेण, विसर्जयामास ततो नयज्ञः ॥२४२॥

जयेतीति—जयेतीत्थं हृद्यां प्रियां वाचं प्रणिगद्योक्त्वा आशीः वचनं प्रयुज्येत्यर्थः। स बटुः यथास्थानमुपाविशत्। ततः बटूपवेशानानन्तरम् नयज्ञः नीतिज्ञः क्षोणिपतिः क्रमेण तां संसदं सभां विसर्जयामास ॥२४२॥

स्नात्वा तदानीतसुमानि मान्यः, क्षोणीभुजामेष करे विधाय।
उदीरयामास गिरं गरिष्ठः, कुतस्त्वमागा द्विज! वा किमर्थम्? ॥२४३॥

स्नात्वेति—स्नात्वा क्षोणीभुजां मान्यः पूज्य एव रिपुमर्दनः तेन बटुना आनीतानि सुमानि पुष्पाणि करे हस्ते विधाय कृत्वा गरिष्ठः महीयान् स राजा गिरं वाचं, उदीरयामास किमित्याह—द्विज! त्वं कुतः किमर्थं वा आगाः ॥२४३॥

जगौ स कौबेरदिगन्तराले, विभो! पुरेऽरिष्टपुरे वरिष्ठे।
द्विजोत्तमो यज्ञनिविष्टचित्तः, श्रीयज्ञदत्तोऽस्ति निरस्तदोषः ॥२४४॥

जगाविति—स बटुर्जगौ, किमित्याह विभो! कौबेरदिगन्तराले उत्तरदिग्मध्ये वरिष्ठे वर्णनीये अरिष्टपुरे तदाख्ये पुरे नगरे यज्ञे देवपूजनादौ निविष्टचित्तः संसक्तमनाः, अत एव, निरस्तदोषः निर्मलाशयः श्रीयज्ञदत्तः तदाख्यः द्विजोत्तमोऽस्ति ॥२४४॥

विद्युन्मुखाकुक्षिभवोऽभवं त-,स्ततः प्रतीतोऽस्मि शुभङ्कराख्यः।
उत्क्रान्तबाल्यो जनकेन वेदा-, नध्यापितो बुद्धिधनः क्रमेण ॥२४५॥

विधुदिति—तस्य यज्ञदत्तस्य सुतः पुत्रः विधुन्मुखायाः तदाख्या या द्विजभार्यायाः कुक्षिभवः गर्भजः अभवम् अहमिति विशेषः, तथा, शुभङ्कराख्यः प्रतीतः प्रसिद्धोऽस्मि, उत्क्रान्तबाल्यः बाल्यावस्थामतीतः बुद्धिधनः तीक्ष्णबुद्धिरहम् क्रमेण जनकेन पित्रा वेदानध्यापितः ॥२४५॥

देशान्तरं द्रष्टुमना निरीतो, भ्रमन् समागां नगरे वरेऽस्मिन् ।
नेत्रातिथीकृत्य च देवपादां–, श्चिरात् फलं जन्मतरोरवापम् ॥२४६॥

देशेति—देशान्तरं द्रष्टुमनाः दिदृक्षुः निरीतः गृहान्निर्गतः भ्रमन् अस्मिन् वरे श्रेष्ठे नगरे समागाम् । देवपादान् भवतः नृपान् नेत्रातिथीकृत्य दृष्ट्वा च चिरात् जन्मतरोः फलमवापम्, भवदर्शनाज्जन्मसाफल्यं जातमित्यर्थः ॥२४६॥

तद्वाक्यचातुर्यमवेत्य भूप–, स्तुष्टस्तमभ्यर्च्य सुवर्णवस्त्रैः ।
वेदार्थवित्कौस्तुभरत्नविष्णुं, पुरोहितं स्वं रचयाञ्चकार ॥२४७॥

तद्वाक्येति—भूपः रिपुमर्दनः तस्य बटोर्वाक्यचातुर्यम् वाक्पटुत्वमवेत्य ज्ञात्वा तुष्टः प्रसन्नः सुवर्णैर्वस्त्रैश्च तम् बटुं सम्पूज्य सत्कृत्य, वेदार्थस्य विद् ज्ञानमेव कौस्तुभरत्नं तत्र विष्णुमिव तं एवं पुरोहितं रचयांचकार ॥२४७॥

द्विजोत्तमः सोऽपि गुणैः स्वकीयै–, र्नृपस्य चित्तान्तरमेव जज्ञे ।
शुद्धान्तमध्येऽपि च संचचार, शुद्धाशयः कौमुदबन्धुवत् सः ॥२४८॥

द्विजोत्तम इति—सोऽपि शुभङ्कराख्यः द्विजोत्तमः स्वकीयैः गुणैः कृत्वा नृपस्य चित्तान्तरं द्वितीयं हृदयमिव जज्ञे, नितरां प्रीतिपात्रमभूदित्यर्थः । स कौमुदबन्धुवच्चन्द्रवत्, शुद्धाशयः निर्मलः चरितः अत एव, शुद्धान्तमध्ये परपुरुषागोचरेऽन्तःपुरेऽपि च संचाचार गतिमानभूत् ॥२४८॥

तयोर्मिथः प्रेमसमृद्धिभाजो–, र्दिनेषु गच्छत्सु कियत्सु चैवम् ।
एकः पुरोपान्तवने कुतोऽपि, सिंहः समागादपरेद्युरुग्रः ॥२४९॥

तयोरिति—मिथः परस्परं प्रेमसमृद्धिभाजोः सातिशयप्रीतिमतोस्तयोः राजपुरोहितयोः एवमुक्तप्रकारेण कियत्सु दिनेषु गच्छत्सु व्यतीतेषु चापरेद्युरेकदा पुरोपान्तवने पुरसमीपोद्याने उग्रः बलवान् एकः सिंहः कुतः अपि समागात् ॥२४९॥

श्रुत्वा समेतं वनपालतस्तं, सिंहं नृसिंहः स्वबलेन सिंहः ।,
दिदृक्षयेव श्रुतसत्त्वराशेः, पुराद् निहन्तुं निरगाज्जवेन ॥२५०॥

श्रुत्वेति—वनपालतः उद्यानरक्षकसकाशात् तं सिंहं समेतं समागतं श्रुत्वा स्वबलेन सिंह इव 'नृसिंह पुरुषश्रेष्ठः स राजा श्रुत' ज्ञातः सत्त्वराशिः पराक्रमसमूहो यस्य तस्य सिंहस्य दिदृक्षयेव पुरात् दिदृक्षया इव अनुद्विग्नः निहन्तुं सिंहम् हन्तुम् जवेन निरगात् ययौ ॥२५०॥

बलं वनद्वार्यनुवर्त्तमानं, स स्थापयित्वा बलवत्पुरोगः ।
आधोरणं तं द्विजमेव कृत्वा, गजाधिरूढो विपिनं विवेश ॥२५१॥

बलमिति—अनुवर्त्तमानं पश्चादागच्छन्तम् बलं सैन्यं वनद्वारि वनप्रदेशद्वारे स्थापयित्वा, बलवतां पुरोऽग्रेसरः स रिपुमर्दनः तं शुभङ्कराख्यं द्विजमेव आधोरणं हस्तिपकं कृत्वा "आधोरणा-हस्तिपका" इत्यमरः । विधाय गजाधिरूढः सन् विपिनं वनं विवेश ॥२५१॥

अघ्रातगन्धद्विपदानगन्ध-, द्विरुक्तरोषः स मृगेश्वरोऽपि ।
अभ्यागमत्तं सहसा कडार-, विलोचनन्यक्कृतविद्युदर्थः ॥२५२॥

आघ्रातेति—स मृगेश्वरः सिंहोऽपि आघ्रातस्य तेन पूर्वं घ्राणेन्द्रिय जन्यानुभवविषयेण गधद्विपस्य राजवाहनभूतमत्तगजस्य दानगन्धेन मदगन्धेन द्विरुक्तरोषः द्विगुणितक्रोधः, अत एव कडारेण कपिलेन विलोचनेन न्यक्कृतोऽधः कृतः विद्युदर्थः विद्युत्कान्तिर्येन स तादृशः सन् सहसा अकस्मात् तं गजं प्रत्यभ्यागमत् अधावत् "कडारः कपिलः" इत्यमर. ॥२५२॥

जिघांसया तस्य ददाति फालां, सिंहः स यावत् प्रतिघप्रकम्प्रः ।
व्यात्ते द्विजस्तावदुपात्ततीक्ष्ण,-शृण्यग्रभागेन मुखे न्यहंस्तम् ॥२५३॥

जिघांसयेति—स धावितः सिंहः प्रतिघेन कोपेन प्रकम्प्रः कम्पितगात्रः सन् "कोप-क्रोधामर्षरोष प्रतिघा" इत्यमरः । तस्य गजस्य जिघांसया हननेच्छया यावत् फलमुत्प्लुतिं ददाति कुरुते, तावत्ते सिंहस्य विवृते मुखे तं सिंहम् द्विजः उपात्तायाः करे गृहीता याः तीक्ष्णायाः शृणेरङ्कुशस्याग्रभागेन न्यहन् "अंकुशोऽस्त्रीशृणिः स्त्रियामि" त्यमरः ॥२५३॥

तालुप्रहारेण निपीडितोऽसौ, प्राणैरमोचि स्वभियेव तूर्णम् ।
तस्यावदातेक्षणतो द्विजस्य, निमीलदक्षः क्षितिपो ह्रियाऽभूत् ॥२५४॥

ताल्विति—तालौ प्रहारेणाङ्कुशाघातेन निपीडितः बाधितः असौ सिंह स्वभिया आत्मभयेनेव तूर्णम् प्राणैरमोचि मृतः । तस्य सिंहहन्तुः द्विजस्य अवदाते क्षणतः भास्वरनेत्रेण क्षितिपः नृपः रिपुमर्दनः ह्रिया लज्जया निमीलदक्षः मुद्रिताक्षोऽभूत् । तस्य पराक्रमेण स्वलघुभावभावा लज्जित इत्यर्थः ॥२५४॥

जगाद विप्रः पृथिवीन्द्र ! हर्ष-, स्थाने विषादं कथमादधासि ! ।
सदाऽवदातैः प्रियकिङ्कराणां, यत् स्यात् प्रभूणां परभागभावः ॥२५५॥

जगादेति—विप्रः शुभङ्करः जगाद, किमित्याह—पृथिवीन्द्र ! राजन् ! हर्षस्थाने विषादं खेदं कथमादधासि ? दैत्यम् मा गा इत्यर्थः, यद्यतः प्रियाणां किङ्कराणामवदातैः पराक्रमकर्मादिभिः प्रभूणां सदा परभागभावः उत्कृष्टभाग्यवत्ता स्यात् सैन्यादिपराक्रमादिभिर्नृपः नृपः, न तु स्वपराक्रममात्रेण, अतो मत्पराक्रमो न खेदविषय इत्यर्थः ॥२५५॥

नृपो न्यगादीद् भवता मृगेन्द्रं, विनिघ्नता पौरुषमाहतं मे ।
किञ्चेदमाकर्ण्य जनश्च वृत्तं, क्लीबं परिज्ञास्यति मामशेषः ॥२५६॥

नृप इति—नृपो रिपुमर्दनो न्यगादीत्, किमित्याह—भवता मृगेन्द्रं सिंहं विनिघ्नता सता मे मम पौरुषम् विक्रमः आहतम् लघूकृतः, किञ्च इदं वृत्तं भवत्कृतसिंहहननमाकर्ण्य अशेषः सर्व-एव जनः, मां क्लीबम् क्लीबवत् कापुरुषं परिज्ञास्यति ॥२५६॥

स स्माह नाहं त्वपरस्य कस्या-, प्यमुं प्रवक्ष्यामि हतं स्वयं यत् ।
हतं त्वया प्रत्युत देव ! वक्ष्ये, तथा जनः स्तोष्यति देवमेव ॥२५७॥

स इति— स द्विज आह स्म जगाद, किमित्याह—यत् यमात्मना हतं तत् अमुं वृत्तान्तं कस्याप्यपरस्यान्यस्य जनस्याहं न प्रवक्ष्यामि, देव ? प्रत्युत उक्तविपरीतम्, त्वया हतं वक्ष्ये, सिंहो राज्ञा हत इत्येवं कथयिष्यामीत्यर्थः । तथा सति देवं भवन्तमेव जनः स्तोष्यति सिंहवधपराक्रमाद्धेतोः प्रशंसयिष्यति इति ॥२५७॥

इतीरितैरस्य गिरां विलासै, रपत्रपां भूमिपतिर्मुमोच ।
मध्येजनं राजपराक्रमं तं, शुभङ्करोऽपि प्रथयाम्बभूव ॥२५८॥

इतीति— अस्य द्विजस्य इत्युक्तप्रकारैरीरितैः गिरां विलासैः वाग्व्यापारैः कृत्वा भूमिपतिः अपत्रपां लज्जां, "साऽपत्रपाऽन्यत." इत्यमरोक्तेः, अपत्रपां परस्मात् लज्जां मुमोच त्यक्तवान्, शुभङ्करः अपि तं सिंहं वधरूपं राजपराक्रमं मध्येजनं जनस्य मध्ये प्रथयाम्बभूव प्रख्यातमकरोत् ॥२५८॥

अथ पौरकृतप्रशंसामाह—

सदाश्रितानामपि सिन्धुराणां, किं वैरनिर्यातनमाततान ! ।
सिंहं विनिघ्नन् यदि वा नृपोऽयं, स्वसारसामर्थ्यमदीदृशद् नः ॥२५९॥

सदेति—अयं नृपः सदापि आश्रितानाम् सिन्धुराणां गजानां वैरनिर्यातनं वैरविशोधनमाततान चकार किम् ? आश्रितवैरी स्ववैरी एवेति कृत्वेति भावः । यदि वा अथवा सिंहं विनिघ्नन् सन् नः अस्मान् स्वस्य सारं श्रेष्ठं सामर्थ्यम् अदीदृशत् दर्शयति स्म ? नान्यो हेतुरत्रेति भावः ॥२५९॥

इत्यादि शंसां मिथ एव पौराः, प्रवर्त्तयन्तो नगरेऽखिलेऽपि ।
अतिप्रमोदेन हृदा वितेनु-, र्वर्धापनं सुन्दरमुत्सवेन ॥२६०॥

इत्यादीति—पौराः मिथः परस्परमेव अखिलेऽपि नगरे इत्यादिकमुक्तप्रकारां शंसां स्तुति प्रवर्त्तयन्तः अतिप्रमोदेन प्रसन्नेन हृदा उत्सवेन उत्सवपूर्वकं सुन्दरम् मनोहरं वर्धापनं वितेनुः चक्रुः ॥२६०॥

अन्तः पुरान्तः समुपेयिवांसं, देवी नृपं विज्ञपयांतमास ।
मध्ये पुरं तूर्यरवः प्रसर्पन् , कमुत्सवं शंसति नाथ ! शंस ॥२६१॥

अन्तरिति—अन्तः पुरान्तः अवरोधे समुपेयिवांसं समुपस्थितं तं नृपं देवी विज्ञपयामास, अत्र विज्ञपयांतमासेति प्रामादिकः प्रयोगः, कृत्रादेरनुपयोगस्य व्यवधानेनाभावात् इति विचारणीयम् । तद्विज्ञापनामेवाह—नाथ ! मध्ये पुरं पुरमध्ये प्रसर्पन् व्याप्नुवन् तूर्यस्य वाद्यस्य रवः शब्दः कम् किं निमित्तमुत्सवं शंसति सूचयति, तत्, शंस कथय ॥२६१॥

नृपोऽप्यवोचत् स्मयमानवक्त्रः, सिंहो मया यन्निहतो मृगाक्षि ! ।
तेन प्रमोदातिशयेन पौराः, कुर्वन्त्यखर्वं महमादरेण ॥२६२॥

नृप इति—नृपः रिपुमर्दनोऽपि स्मयमानवक्त्रः स्मितं कुर्वन्नवोचत्, किमित्याह—मृगाक्षि ! यत् मया सिंहः निहतः तेन हेतुना पौराः प्रमोदातिशयेन हर्षातिरेकेण आदरेण आग्रहपूर्वकम् अखर्वं विशालं महमुत्सवं कुर्वन्ति ॥२६२॥

स्मित्वाऽथ देव्या जगदे स देव !, किमौचितीयं तव वीरतायाः ।
पारीन्द्रमेतं निहतं द्विजेन, स्वयं हतं वक्षि यदग्रतो मे ॥२६३ ॥

स्मित्वेति—अथ राज्ञो वचः श्रुत्वा स्मृत्वा देव्या स नृपः जगदे कथितः, किमित्याह देव ! तव वीरतायाः इयमौचिती किम् ? नैतदुचितमित्यर्थः । तत्र हेतुमाह—यत् एतं पारीन्द्रं सिंहं द्विजेन निहतेन ममाग्रतः स्वयं हतं वक्षि, मया सिंहो हत इत्येवमन्येन हतं कथनं न वीरोचितमित्यर्थः ॥२६३॥

दध्यौ ततः क्षोणिपतिः स दक्षो-, विप्रब्रुवं धिग् धिगधार्मिकं तम् ।
देव्याः पुरो गोप्यमपि प्रकाश्य, प्रपञ्च्य तद्येन विगोपितोऽस्मि ॥२६४॥

दध्याविति—ततः देवीवाक्यं श्रुत्वा स दक्षः निपुणः क्षोणीपतिः नृपो रिपुमर्दनः दध्यौ चिन्तयामास, किमित्याह—तम् अधार्मिकम् प्रतिज्ञाताऽपालकत्वात् पापिष्ठं विप्र वम् द्विजाधमं धिक्, येन द्विजेन देव्याः पुरः गोप्यमप्रकाश्यमपि तद्वृत्तं प्रपञ्च्य प्रकाश्य विगोपितः निन्दास्पदी कृतोऽस्मि ॥२६४॥

दरिद्रवत्ते न महीपतीनां, जना लभन्ते भवने प्रवेशम् ।
स्वतोऽपि गोप्यं रभसा परेषां, प्रकाशितं यैर्निधिवद् रहस्यम् ॥२६५॥

दरीति—ते जनाः महीपतीनां भवने गृहे दरिद्रवत् प्रवेशं न लभन्ते, ते के इत्याह—यैः—जनैः स्वतः आत्मनोऽपि, किम्पुनः परेभ्यः, निधिवन्न्यासवद्गोप्यं रहस्यं परेषामन्येषामग्रे प्रकाशितम् प्रकटीकृतम् रहस्यभेदका न राजभवनार्हा इत्यर्थः ॥२६५॥

षट्कर्मपाशेन तदेतकेन, प्रकाशितं यावदिदं बहिर्न ।
आप्तैर्नरैस्तावदमुं विनाश्य, कीनाशवेश्मातिथितां नयामि ॥२६६॥

षडिति—तत्ततो हेतोः षट्कर्माणः तेषु निन्दनीयेन षट्कर्मपाशेनैतकेन द्विजेन इदं सिंहवधवृत्तान्तं यावद् बहिर्न प्रकाशितं ख्यापितं तावत् तदभ्यन्तर एव अमुं द्विजम् आप्तैः विश्वस्तैः नरैः स्वपुरुषैः, यथा रहस्यभङ्गो न स्यादिति भावः । विनाश्य घातयित्वा कीनाशस्य यमस्य वेश्मनो गृहस्य अतिथितां, मृत्युमिति यावत् नयामि प्रापयामि इति ॥२६६॥

हृदा विमृश्येति पुरोहितस्य, विनाशनाय न्यदिशद् नरान् स्वान् ।
तैः कैतवेन क्वचनापि नीत्वा, स पञ्चतां प्राप्यत पापहीनः ॥२६७॥

हृदेति—इत्युक्तप्रकारेण हृदा विमृश्य पुरोहितस्य शुभङ्करस्य विनाशनाय स्वानात्मीयान् रहस्यसहान् नरान् पुरुषान् न्यदिशदादिष्टवान् । तैः राजादिष्टपुरुषैः कैतवेन छलेन क्वचन गुप्तप्रदेशे नीत्वा स पापहीनः निर्दोषः शुभङ्करः पञ्चतां प्राप्यत हतः ॥२६७॥

नृदेवमन्येद्युरुवाद देवी, विसृज्य सर्वां परिहासकेलिम् ।
कदाचिदेवोरुगुणज्ञधुर्यः, कथं पुरोधाः स न दृश्यते वः ? ॥२६८॥

नृदेवेति—अन्येद्युः देवी सर्वां परिहासकेलिम् हास्यक्रीडाम् विसृज्य समाप्य नृदेवं नृपमुवाद पप्रच्छ, किमित्याह—उरूणां महतां गुणज्ञानां धुर्यः अग्रेसरः स वो युष्माकम् पुरोधाः पुरोहितः शुभङ्करः कथं कुतो हेतोः कदाचिदेव कदापि न दृश्यते ? ॥२६८॥

राज्ञाऽथ तथ्ये कथिते तयोचे, राज्ञ्या महाराज ! कथं त्वया सः ।
ज्ञेना विमृश्यत्वं परायणेन, विनाश्यते स्म प्रवरः कृतज्ञः ! ॥२६९॥

राज्ञेति—अथ देव्या पृष्टे सति राज्ञा तथ्ये सत्ये कथिते सति तया राज्ञ्या ऊचे, किमित्याह—महाराज ? ज्ञेन बुद्धिमता अपि अविमृश्यत्वपरायणेन अविचार्यकारिणा त्वया कथं कृतज्ञः सुहृदयः प्रवरः श्रेष्ठः स पुरोहितः विनाश्यते स्म ? ॥२६९॥

ननु प्रतिज्ञामन्त्रकः स इति चेत्तत्राह—

सैन्येन सार्धं नगराद् यदा त्वं, सिंहं निहन्तुं निरगास्तदानीम् ।
सौधोपरिष्टाच्च कुतूहलेना,-ऽऽक्रान्ता समारूढवती विभोऽहम् ॥२७०॥

यदा त्वम् सिंहं निहन्तुं सैन्येन सार्धं नगरान्निरगाः बहिरगमस्तदानीम् विभो ! स्वामिन् ! कुतूहलेन सिंहः कथं हन्यते इति द्रष्टुमौत्सुक्येन आक्रान्ता आतुरा अहं सौधोपरिष्टात्प्रासादस्योपरि च समारूढवती गता ॥२७०॥

व्यालोकयं सप्तमभूमिभागे, स्थिता स्वरूपं तव वस्तुवृत्त्या ।
गाम्भीर्यधूर्येण शुभङ्करेण, निवेदितं किञ्चन मे न तेन ॥२७१॥

व्यालोकयमिति—सप्तमभूमिभागे प्रासादस्य सप्तम्यां भूमौ क्षेत्रे स्थिता सती वस्तुवृत्त्या यथातथं तव स्वरूपं वृत्तान्तं व्यालोकयम्, गाम्भीर्यधूर्येणातिगम्भीरातिशयेन तेन पुरोहितेन त्वया घातितेन शुभङ्करेण मे महयम् किञ्चन न निवेदितम् कथितम् ॥२७१॥

द्विजोत्तमस्यास्य शुभङ्करस्य, मुहुर्मुहुर्भूमिपतिर्गुणौघम् ।
स्मृत्वाऽनुतापानलहेतिजालै-, र्जाज्वल्यते स्माधिकमाशयेऽपि ॥२७२॥

द्विजोत्तमेति—भूमिपतिः रिपुमर्दनो नृपः अस्य द्विजोत्तमस्य शुभङ्करस्य गुणौघं गुणसमूहम् मुहुर्मुहुः स्मृत्वा आशये मनसि अनुतापः पश्चात्तापः स एव तापकरत्वादनलः तस्य हेतिजालैः ज्वालासमूहैः घातैः कृत्वा अधिकं जाज्वल्यते तातप्यते स्म ॥२७२॥

अथ कथामुपसंहरति—

ततः पुरस्कृत्य जनाः विवेक-, विलोचनं चारुतरं तृतीयम् ।
सद्वस्तुतत्त्वप्रविलोकनाय-, सन्मार्गसञ्चारविधौ यतध्वम् ॥२७३॥

तत्त इति—ततस्तस्माद्धेतोः सहसा कृतस्य दुरन्तत्वाद्धेतो', जनाः लोकाः सतो यथार्थस्य वस्तुतत्वस्य पदार्थसारस्य प्रविलोकनाय ज्ञानाय चारुतरमुत्तमं तृतीयं द्वाभ्यामन्यत, विवेकरूपं विलोचनम् नेत्रम् पुरस्कृत्य साधनत्वेनादाय सन्मार्गे सञ्चारस्य विधावनुष्ठाने यतध्वम्, नत्व विवेकिना वर्त्तनीयम्, पूर्वोक्तदृष्टान्तवदप्रियसम्भवादिति भावः ॥२७३॥

इत्थं कथां दुर्लभराजकस्य, धिया ब्रुवाणस्य विबोधहेतोः ।
द्विजस्तदा वादयति स्म तारं, तारं त्रियामीं घटिकानिकेते ॥२७४॥

इत्थमिति—इत्थमुक्तप्रकारेण विबोधहेतोः राज्ञो मार्गप्रदर्शनाय धिया बुद्धया, कल्पितां कथां वार्त्ता ब्रुवाणस्य कथयतः दुर्लभराजकस्य दुर्लभराजस्य सतः तदा द्विजः चतुर्थः कीर्तिराजः

घटिकानि के ते घण्टागृहे त्रियामीं प्रहरत्रयसमाप्तिसूचिकां घण्टां तारं तारमत्युच्चैः वादयति स्म ॥२७४॥

तस्मिन् समुत्तस्थुषि राजशिष्ट्या, तुर्ये समाजग्मुषि कीर्त्तिराजे ।
नृपोऽथ दध्यौ कथमेतकाभ्यां, विलम्बितं कर्मणि मेऽप्युभाभ्याम्? ॥२७५॥

तस्मिन्निति–तस्मिन् दुर्लभराजे राजशिष्ट्या नृपाज्ञया समुत्तस्थुषि उत्थिते सति तुर्ये चतुर्थे कीर्तिराजे तदाख्ययामिके समाजग्मुषि समागते सति अथानन्तरं नृपो दध्यौ विचारयामास। किमित्याह–एतकाभ्यामुभाभ्याम् वत्सराजदुर्लभराजभ्यामपि मे मम कर्मणि आज्ञापालने कथं कुतो हेतोः विलम्बितम्? ॥२७५॥

ध्यात्वेत्यवादीद् नृपतिस्त्वमेकं, वचो ममाधास्यसि कीर्तिराज!।
इत्युक्त ऊचे स विभो! त्वदुक्तं, जिजीविषुः को न करोति नाम? ॥२७६॥

ध्यात्वेतीति—इत्युक्तप्रकारेण ध्यात्वा विचार्य नृपतिः अवादीत्, किमित्याह–कीर्त्तिराज! मम एकं वच आज्ञाम् आधास्यसि करिष्यसि? इतीत्थमुक्तः स कीर्तिराज ऊचे, किमित्याह–विभो! त्वदुक्तं त्वदाज्ञापितं को जिजीविषुः जीवितुमिच्छुः नरः न करोति, कुर्यात्? त्वदाज्ञाभङ्गे मृत्योरेव सम्भवादिति एवमेव कुर्यात् ॥२७६॥

ईदृक् तदुक्तं विनिशम्य राजा, जगाद मौलिं लघु देवराजम्।
छित्त्वा समानीय नयस्व चक्षुः, पथं महाभाग! ममागसार! ॥२७७॥

ईदगिति—ईदृगुक्तप्रकारं तस्य कीर्तिराजस्योक्तं वचनं विनिशम्य राजा जगाद, किमित्याह–महाभाग अगसार! पर्वततुल्यबल! देवराजं मौलिं मस्तकं छित्वा समानीय मम चक्षुः पथं नयस्व प्रापयस्व, मस्तकं छित्वा देवराजस्य छिन्नमस्तकं तं ममाग्रे आनयेति ॥२७७॥

पौरस्त्यवत् सोऽपि विचिन्त्य किञ्चित्, क्षणं विलम्ब्यैव बहिः समेतः।
सहोदरं जाग्रतमेव मुक्त्वा, दृष्टान्तमाचष्ट नृपाग्रतोऽमुम् ॥२७८॥

पौरस्त्येति—पौरस्त्यवत् पूर्वभ्रातृद्वयवत् स कीर्तिराजोऽपि विचिन्त्य किञ्चित्क्षणं बहिर्विलम्ब्य समेतः समागतः एवम् सहोदरं सोदरं भ्रातरं देवराजं जाग्रतमेवोक्त्वा नृपाग्रतोऽमुं वक्ष्यमाणं दृष्टान्तमाचष्ट ॥२७८॥

महापुरं नाम पुरं समस्ति, श्रिया परिष्वक्तमुपेन्द्रवद् यत्।
शत्रुञ्जयस्तत्र बभूव भूमान्, पुण्यर्द्धिशत्रुञ्जयशैलराजः ॥२७९॥

महापुरमिति—महापुरं नाम पुरं समस्ति अस्ति, यत् पुरम्, उपेन्द्रवद्विष्णुवत् श्रिया लक्ष्म्या सम्पदा परिष्वक्तं समन्वितम्, तत्र महापुरे पुरे पुण्यद्धर्या पुण्यसम्पदा शत्रुञ्जयाख्यः शैलराजः पर्वत इव शत्रुञ्जयः तदाख्यः भूमान् नृपो बभूव ॥२७९॥

सर्वासु दिक्षूदयमादधानो, वारुण्युपश्लेषमुपेक्षमाणः ।
प्रोत्सारयन्नस्तमतीव दूरं, यस्य प्रतापस्तपनं जिगाय ॥२८०॥

सर्वास्विति—यस्य शत्रुञ्जयस्य प्रतापः तपनं सूर्यम् जिगायाभिभूतवान् तत्र हेतुमाह—सर्वासु दिक्षु न केवलं प्राच्यामेव इति व्यतिरेको जयहेतुः उदयमभ्युदयमूर्ध्वगमनञ्चादधानः कुर्वन्, निःसपत्नादिति भावः। वारुण्या मदिरायाः निर्व्यसनत्वान्मदिरापानस्याविहितत्वाच्च, उपश्लेषं सम्पर्कमुपेक्षमाणः वर्जयन्, सूर्यस्तु वारुण्याः वरुणदेवताकायाः पश्चिमदिशः सम्पर्कमस्तमनार्थमपेक्षत एवेत्यतोऽपि व्यतिरेको जयहेतुः, तथा, अस्तम् स्वपलयमतीव दूरं प्रोत्सारयन् निरस्यन् स्थिरायतिमानित्यर्थः । सूर्यस्त्वस्तं प्रत्यहः प्राप्नोतीति व्यतिरेकः, स च श्लेषमूलो वारुण्यम् उदयास्तयोश्च सूर्यप्रतापयोर्भेदेऽप्यभेदोक्तेरतिशयोक्तिमूल इति ध्येयम् ॥२८०॥

प्रियाङ्गसन्तापमपाकरोद् या, निजाङ्गसच्चन्दनपङ्कसेकैः ।
अतुल्यसौभाग्यगुणोज्ज्वला सा, प्रियङ्ग्वभिख्या समभूत् प्रियाऽस्य ॥२८१॥

प्रियेति—या प्रियङ्गुः निजाङ्गे यच्चन्दनपङ्कस्तेन कृत्वा आलिङ्गनादौ सेकैः सम्पर्चनैः प्रियाङ्गस्य सन्तापम् कामोदितापमपाकरोत्, सा अतुल्येन सौभाग्यगुणेनोज्ज्वला प्रियङ्ग्वभिख्या प्रियंगुनाम्नी अस्य शत्रुञ्जयस्य प्रिया भार्या अभूत् ॥२८१॥

भूपे सभाऽऽकाशशशाङ्करूपे, कश्चित्तुरङ्गीयवणिक् कुतोऽपि ।
अन्येद्युरागाद् विदितो विनम्य, भूमिपतिं व्यज्ञपयद् विनीतः ॥२८२॥

भूपेति—अन्येद्युः भूपे नृपे सभा आकाशमिव तत्र शशाङ्करूपे चन्द्रस्वरूपे सति कश्चित्तुरङ्गीयवणिक् तुरङ्गविक्रेता वणिक् अगात्, भूमिपतिं विनम्य विदित प्रसिद्धः आज्ञातः विनीतः सन् व्यज्ञपयत् ॥२८२॥

मया समानीतमुपायनेऽस्ति, तुरङ्गरत्नं नरदेव ! तुभ्यम् ।
तद्वाहकेल्या गमनेन मेऽद्य, सद्यः प्रसादं विदधातु देवः ॥२८३॥

मयेति—नरदेव ! तुभ्यम् उपायने उपहारनिमित्तम् मया तुरङ्गेषु रत्नमिव जात्योऽश्वः समानीतमस्ति, तस्य तुरङ्गस्य वाहः चालनमेव केलिः क्रीडा तया तन्निमित्तम् गमनेन पादावधारणेन देवः मे मम अद्य सद्यस्तत्कालं प्रसादं विदधात्वनुगृहातु, तुरङ्गवाहनार्थं चलेःयर्थः ॥८२३॥

तदैव तद् वीक्षितुमश्वरत्नं, स रत्नगर्भा पतिरप्युदस्थात् ।
विराजितो राजभिर्ऋक्षजातै,-र्निशीथिनीनाथ ! इवोरुकान्तिः ॥२८४॥

तदैवेति—तदैव स रत्नगर्भायाः पृथिव्याः पतिः शत्रुञ्जयोऽपि तदश्वरत्नं वीक्षितुम् ऋक्षजातैः तारासमूहैः निशीथिनीनाथश्चन्द्र इव राजभिः नृपैः विराजितः उरुकान्तिः विशालप्रभ उदस्थात् ॥२८४॥

अद्यापि भूयः परिभूतिमुत्सन्, जवेन यस्यावर्जितो गरुत्मान् ।
लक्ष्मीपतिं नूनमनूनशक्तिं, निषेवते वाहनकैतवेन ॥२८५॥

अद्यापीति—यस्याश्वरत्नस्य जवेन वेगेनावर्जितः पराजितः गरुत्मान् भूयः परिभूतिमधिक-पराभवमुत्सन् अनुभवन् अद्यापि अनूनशक्तिमप्रतिमशक्तिशालिनं लक्ष्मीपतिं वाहनकैतवेन वाहन-व्याजेन निषेवते, तत्प्रसादाल्लब्धेन बलेनैतदश्वपराजयायेत्यर्थः। किन्तु निषेवत एव नतु सफलोऽद्यापि जातः, नूनमित्युत्प्रेक्षायाम् ॥२८५॥

उच्चैःश्रवस्त्वेन निजेन नाम्ना, सदूषणं स्वं परिभाव्य भेजे ।
उच्चैःश्रवा नाकिपतिं नु दृष्ट्वा, य शालिहोत्रोदितलक्षणाऽऽढ्यम् ॥२८६॥

उच्चैरिति यमश्वरत्नम् शालिहोत्रादिनोक्तेन लक्षणेनाढ्यम् सम्पन्नं दृष्ट्वा, न्वित्युत्प्रेक्षायाम्, उच्चैःश्रवा "हय उच्चैःश्रवा" इत्यमरः—इन्द्राश्वः उच्चैः श्रवस्त्वेन उन्नतकर्णत्वेनान्यवैलक्षण्य-रहितेन निजेन नाम्ना स्वमात्मानं सदूषणं दोषदुष्टं परिभाव्य विचार्य नाकिपतिं शक्रं भेजे, दोषो-द्धारायेति भावः ॥२८६॥

तुरङ्गमाः सप्त रवे र्विमाने, क्षमं समालोक्य यमेकमेव ।
अपारलज्जाभरमन्थराक्षाः, खेऽदृश्यभावं प्रतिपद्य तस्थुः ॥२८७॥

तुरङ्गमा इति—रवेः सूर्यस्य विमाने व्योमयाने रथे स्थिताः सप्त तुरङ्गमाः, यमश्वमेक-मेव क्षमम् समर्थम्, अर्थाद्रविविमानस्यैव, समालोक्य अपारेणाधिकेन लज्जाभरेण मन्थराक्षाः अर्धनिमीलिताक्षाः सन्तः खे आकाशे अदृश्यभावमलक्ष्यत्वं प्रतिपद्यास्थाय तस्थुः, कथमन्यथा न दृश्यन्ते इति भावः ॥२८७॥

किमष्टमोऽयं रविवाहनाना, मेकादशः किं शशिवाहनानाम् ? ।
तुरङ्गमाणामिति यं विलोक्य, व्यतर्कयन् ज्ञाः तमपश्यदीशः ॥२८८॥

किमेति—अयमश्वः रविवाहनानां तुरङ्गमाणाम् अष्टमः तेषां सप्तत्वादेषोऽधिकः, किमित्यु-त्प्रेक्षायाम्, शशिवाहनानां दशाश्वानामेकादशः किम् ? इतीत्थं यमश्वं विलोक्य ज्ञाः अश्वहृदयज्ञाः व्यतर्कयन् तमश्वमीशोऽपश्यत् ॥२८८॥

अपश्रमं शेषमहं करोमि, धृत्वा महीभारमहो ! इतीव ।
विदारयन्तं वसुधां खुराग्रैः, समारुरोह क्षितिनायकस्तम् ॥२८९॥

अपेति— महीभारं पृथिवीभारं धृत्वा अहं शेषं शेषनागम्, अपश्रमं श्रमरहितम् करोमि । शेषः स्वशीर्षे महीं बिभर्तीति पौराणिकाः । इति हेतोरिव खुराग्रैः वसुधाम् पृथिवीम् विदारयन्तम् खनन्तम्, अहो आश्चर्यभूतम् तमश्वम् क्षितिनायकः शत्रुञ्जयः समारुरोह ॥२८९॥

ऋजुत्वगत्यैव चचाल सोऽश्व,- स्ततः क्षणं क्षोणिपतिप्रणुन्नः ।
ऋजुत्वमुत्सृज्य नरोत्तमानां, किञ्चित्परं संवननं न चेति ॥२९०॥

ऋज्विति—सोऽश्वः ऋजुत्वगत्यैव सरलगत्यैव क्षणं चचाल, ततः परमुपरिष्टात् क्षोणिपतिना प्रणुन्नः प्रेरितः सन् नरोत्तमानाम् किञ्चित् परमन्यत् संवननम् "वशक्रिय संवननम्" इत्यमरः । वशक्रियाऽस्ति न वा इति जिज्ञासया ऋजुत्वं सरलगतिमुत्सृज्य त्यक्त्वा, चचालेति सम्बद्धचते ॥२९०॥

कृष्ट्वैव कृष्ट्वैव नृपः स वल्गां, परीक्षरद्रक्तकरो बभूव ।
तुरङ्गमोऽपि प्रययौ जवेन, क्ष्मामस्पृशन् साधुरिव स्त्रियं सः ॥२९१॥

कृष्ट्वैवेति—स नृपः वल्गां अश्वरश्मिं प्रग्रहं कृष्ट्वैवाश्वप्रेरणार्थम् पुनः पुनराकृष्यैव परिक्षरद्रक्तः अश्वरज्जुप्रग्रहसंघर्षणात् स्रवच्छोणितः कर पाणिर्यस्य स तादृश. बभूव, स तुरङ्गमोऽपि साधुः संयमी स्त्रियमिव क्ष्मां पृथिवीमस्पृशन् आकाशेनैव जवेन प्रययौ चचाल ॥२९१॥

यता यता तेन तुरङ्गमेण, दुर्गाटवीं भूपतिरापितोऽयम् ।
कुपथ्यसम्बन्धपरिप्लुतेना-, शनेन भुक्तेन रुजामिवाज्ञः ॥२९२॥

यतेति—यता यता गच्छता गच्छता तेन तुरङ्गमेण कर्त्रा अयं भूपतिः तदारूढः शत्रुञ्जयः दुर्गां गहनामटवीमरण्यं आपितः प्रापितः, तत्रोपमामाह–कुपथ्यस्याहितस्य सम्बन्धेन परिप्लुतेनोदीर्णेन भुक्तेन अशनेनान्नादिना, कुपथ्याशनेनेत्यर्थ । अज्ञः मूढः पथ्यापथ्यविवेकशून्यः रुजां रोगमिव, प्रापित इति सम्बध्यते ॥२९२॥

तं वामशिक्षाकलमाकलय्य, श्लथीचकार क्षितिपोऽपि वल्गाम् ।
समं तयैव श्लथमाततान, प्रकाशयन् प्रीतिमिवैष यानम् ॥२९३॥

तमिति—तमश्वं वामशिक्षाकुशलम् कुटिलशिक्षया उन्मार्गगामिनमाकलय्य ज्ञात्वा क्षितिपोऽपि वल्गाम् प्रग्रहं श्लथीचकार गतिरोधाय शिथिलीचकार, एष यान गमनवाहनमश्वोऽपि तया वल्गया समं सह प्रीतिं प्रकाशयन्निव श्लथं गतिमन्दतामाततान चकार ॥२९३॥

क्षुधातृषाभ्यामतिवाधितोऽयं, क्लान्तो ललाटन्तपतापनेन ।
पथा परिश्रान्ततरः स वाढं, तत्पृष्ठतः क्ष्मापतिरुत्ततार ॥२९४॥

क्षुधेति—क्षुधातृषाभ्यां बुभूक्षापिपासाभ्यामत्यन्तं बाधितः पीडितः ललाटन्तपेन मध्याह्नगेन तापनेन तपनातपेन क्लान्तः ग्लानः पथा अध्वातिक्रमेण बाढम् परिश्रान्ततरः खिन्नः स क्ष्मापतिः तस्याश्वस्य पृष्ठतः उत्ततार नीचैरगात् । २९४॥

यावत्तमश्वं भ्रमणीविलासै, रपश्रमं भूमिपतिः करोति ।
श्वासाकुलः पल्ययनावतारा-, दत्याजि जीवेन स तावदाशु ॥२९५॥

यावदिति—भूमिपतिः शत्रुञ्जयः यावत्तमश्वं भ्रमणीवलासैः क्रीडार्थभ्रमणेन शनैर्भ्रमणेन कृत्वा अपश्रमं श्रमरहितं करोति, तावत् सोऽश्वः पल्ययनस्य पर्ल्याणस्य पृष्ठास्तरणस्यावतारादपनयनादवरोपणाद् हेतोः श्वासेन दीर्घश्वासेनाकुलः आशु जीवेन अत्याजि मृतः इति ॥२९५॥

न चञ्चलं पिप्पलपत्रमाहु-, र्न चञ्चलं कुञ्जरकर्णतालम् ।
देहस्य सम्बन्धमधिश्रितस्य, यथैव जीवस्य बुधाः स्वरूपम् ॥२९६॥

नेति—पिप्पलस्य स्वनामाख्यातवृक्षस्य पत्रं चञ्चलं न, आहुः, कुञ्जरस्य हस्तिनः कर्णतालं 'कर्णस्य तालं केशम् कर्णपरि वमणं यत् तत्' विशालकर्णम् चञ्चलं न, आहुः, बुधाः, यथा, देहस्य सम्बन्धमधिश्रितस्य देहिनो जीवस्य स्वरूपम् , चञ्चलम् ॥२९६॥

शुष्यन्मुखः सोऽपि तृषाऽतिवेल-, मन्वेषयन्नम्बु महाटवीं ताम् ।
परिभ्रमन्नेकत ऐक्षतैकमभ्रंलिहानोकहमुच्चशाखम् ॥२९७॥

शुष्यन्निति—सः शत्रुञ्जयोऽपि तृषा पिपासया शुष्यन्मुखः अतिवेलम् भृशम् अम्बु अन्वेषयन्, तां महाटवीं परिभ्रमन् एकतः एकत्र उच्चशाखम् उच्चशाखायुक्तमेकम् अभ्रंलिहं, गगनचुम्बिनमनोकहं वृक्षमैक्षत ॥२९७॥

शाखासमाकीर्णतदेकशाखा-, मूलात् समालोक्य जलस्य विन्दून् ।
अनाविलान्निष्पततः स दध्या-, विति स्वचित्ते नृपतिः प्रहृष्टः ॥२९८॥

शाखेति—शाखासु समाकीर्णायाः निर्गतायाः तस्य वृक्षस्य एकस्या–शाखायाः मूलत् निष्पततः स्रवतः अनाविलान्निर्मलान् जलस्य बिन्दून् समालोक्य प्रहृष्टः स नृपतिः स्वचित्ते इति वक्ष्यमाणप्रकारं दध्यौ चिन्तयामास ॥२९८॥

तच्चिन्तामेवाह—

अद्रेरिवेदं सलिलं कुतोऽद्रेरितो विनिर्याति सितावदातम् ।
वर्षाभवं नूनमवश्यमेतत्, स्थितं च शाखाविवरे गभीरम् ॥२९९॥

अद्रेरिति––अद्रेः पर्वतादिव इतोऽस्माद् अद्रेर्वृक्षात् "अद्रयो द्रुमशैलार्काः" इत्यमरः । सितममलमवदाते पवित्रञ्च सलिलम् कुतो हेतोः विनिर्याति निःसरति तर्केण निर्णयति नूनम् एतत् क्षरज्जलम् वर्षाभवम् शाखाया विवरे कोटरे गभीरे निम्ने "निम्नं गभीरं" इत्यमरः वस्थं स्थितञ्च, कथमन्यथा स्रवतीति भावः ॥२९९॥

क्षणं विचिन्त्येति तदीयशाखा–, दलानि लात्वा पृथुलानि भूपः ।
पुटं विनिर्माय निवेश्य चाधः, प्रपूरयामास जलेन तेन ॥३००॥

क्षणमिति—इत्युक्तप्रकारेण क्षणं विचिन्त्य निर्णीय पृथुलानि विशालानि जलाहरण-क्षमाणि तदीयशाखायाः वृक्षशाखायाः दलानि पत्राणि लात्वा आदाय भूपः पुटं सम्पुटं विनिर्माय विधाय अधः जलपतन् प्रदेशे निवेश्य स्थापयित्वा तेन शाखामूलात्पतता जलेन प्रपूरयामास च, पानार्थमिति शेषः ॥३००॥

यावत्तदम्भः पिबति क्षितीशः, शाखाप्रदेशादुपगत्य तावत् ।
एकः खगः पक्षतिचालनेन, तत् पातयामास पुटं जवेन ॥३०१॥

यावदिति—क्षितीशः यावत्तत्पुटस्थमम्भो जलं पिबति पातुमुपक्रमते तावत् एकः खगः पक्षी शाखाप्रदेशादुपगत्य आगत्य पक्षतिचालनेन स्वपक्षप्रहारेण कृत्वा तज्जलपूर्णं पुटं जवेन झटिति पातयामास ॥३०१॥

अपीपतत् सोऽपि पुटं पतत्री, पुनः प्रपूर्णं सलिलैस्तथैव ।
तृषाविशुष्यत्तरवक्त्रपद्मो, दध्यौ ततः क्षोणिपतिर्विलक्षः ॥३०२॥

अपीति—पुनः भूयः तथैव पूर्वोक्तप्रकारेणैवाधः संस्थापनेन सलिलैः शाखास्कन्धक्षरदभि-र्जलैः प्रपूर्णं पुटमपि सः पतत्री पक्षी अपीपतत् पातयामास, ततस्तदनन्तरम् तृषया पिपासया कृत्वा विशुष्यत्तरमत्यन्तं शुष्यन्तम् वक्त्रं पद्ममिव यस्य स तादृशः नितरां शुष्ककण्ठः क्षोणीपतिः शत्रुञ्जयः विलक्षः खिन्नः सन् दध्यौ चिन्तयामास ॥३०२॥

अहो ! खगः कीदृगयं ममापि, निष्कारणारातिरजातहार्दः ? ।
हठाद् द्वितीयामभिसृत्य वेलां, पाणेः पुटं पातयते य एवम् ॥३०३॥

अहो इति—अहो इति खेदे । अयं खगः पक्षी, अपिना मनुष्यपक्षिणोः शत्रुत्वा सम्भवः सूचितः, मम तृषितस्य अजातहार्दः प्रीतिरहितः, निष्ठुर इति यावत् , निष्कारणम् अरातिः शत्रुः, यः खगः हठादाग्रहात् द्वितीयां वेलां द्वितीयवारेऽपि एवमुक्तप्रकारेणाभिसृ-त्यागत्य पाणेः मम हस्तात्पुटं जलपूर्णं पत्रपुटम् पातयते ? ॥३०३॥

तृतीयवेलाऽऽक्रमणेऽपि पाथ–, श्चेद् भ्रंशयिष्यत्युपगृह्यमाणम् ।
पतत्रिणं प्रेतपतेर्निशान्तं, संप्रापयिष्यामि तदाऽमुमेव ॥३०४॥

तृतीयेति—तृतीयवेलायाः तृतीयवारस्य आक्रमणे उद्योगेऽपि चेद्यदि उपगृह्यमाणम् नीयमानम् पाथोजलं भ्रंशयिष्यति तदा अमुं पतत्रिणं प्रेतपतेर्यमस्य निशान्तं "निशान्तं यमस्य सदनमि" त्यमरः । गृहं संप्रापयिष्यामि हनिष्याम्येव ॥३०४॥

नृपः पुनः पूरयति स्म तृष्णक् , पुटं पयोभिः सितिमानमाप्तैः ।
विचिन्तयामास विहङ्गमोऽयं, कृती निसर्गोपकृतीप्रवृत्तौ ॥३०५॥

नृपः इति—तृष्णक् तृषार्तः नृपः पुनः सितिमानं ततामाप्तैः विकारकृतश्वेतिमभिः पयोभिर्जलैः पुटं पूरयतिस्म, तथा, विचारयामास, किमित्याह—अयं विहङ्गमैः निसर्गेण निःस्वार्थं साहजिकी वा योपकृतिरुपकारः तस्य प्रवृत्तौ करणे कृती कुशलः विचारयामास ॥३०५॥

खगविचारमेवाह—

विस्रंसमानं च पतत्रघातात् , पाथः पिपासत्ययमुर्व्यधीशः ।
विपत्स्यते हा ! भुवनोपकर्ता, कथं त्रिलोकी तिलकस्तदाऽऽव्यः ? ॥३०६॥

अयं उर्व्यधीशः महीपतिः पतत्रस्य पक्षस्य "गरुत्पक्षच्छादाः पत्रे पतत्रं" इत्यमरः । घातात् ताडनाद्धेतोः विस्रंसमानं भूमौ प्रसरत्पाथः जलं पिपासति पातुमिच्छति । हा ! त्रिलोकीतिलकः जगदुत्तमः भुवनस्य सर्वस्योपकर्त्ता कथं विपत्स्यते ? मरिष्यति, नैष निधनमर्हतीत्यर्थः । तत्तस्मात्कारणात् आव्यः क्षरणीयः, मरणान्निवारणीय इत्यर्थः ॥३०६॥

विस्रंसयिष्यामि पुटं पुनश्चेद् , व्यापादयिष्यत्यचिरेण तद् माम् ।
मया मृतेनाप्यमृतेन वा किं, ममापि तज्जीवतु जीवितेन ? ॥३०७॥

विस्रंसेति—पुनश्चेत्पुटं जलपूर्णपुटं विस्रंसयिष्यामि पातयिष्यामि तत्तदा मामचिरेण व्यापादयिष्यति हनिष्यति, वा अथवा, मया पक्षिणा मृतेन अमृतेन जीवितेन वाऽपि किम् ? न किमपि प्रयोजनम् इत्यर्थः, अयं तु जगदुपकर्त्तेति अस्य महत्प्रयोजनमिति भावः । तत्ततः मम जीवितेन प्राणदानेनाऽपि जीवतु, एतत्प्राणरक्षार्थं, स्वप्राणांस्त्यक्ष्यामीत्यर्थः ॥३०७॥

इति प्रबद्धादर एव मृत्यौ, विस्रंसयमास पुटं पुनः सः ।
कशाप्रहारेण नृपस्तु रुष्ट–, स्तं ताडयामास यथा ममार ॥३०८॥

इतीति—इतीत्थं मृत्यौ निधने प्रबद्धादरः कृतनिश्चय एव स खगः पुनः पुटं विस्रंसयामास, नृपस्तु पुनः रुष्टः क्रुद्धः कशायाः प्रहारेण ताडनेन कृत्वा तं खगं ताडयामास, यथा ममार स पक्षी मृतः । ॥३०८॥

अस्मिन् विपन्ने नृपतिः प्रयत्नाद् , दधौ पुनः पत्रपुटं स तत्र ।
तच्छाखिकायाश्च जलं तदाशा,-प्रस्पर्धयेवाऽगमदग्रतोऽग्रे ॥३०९॥

अस्मिन्निति—अस्मिन् खगे विपन्ने मृते सति स नृपतिः पुनः प्रयत्नात् सावधानतया तत्र जलबिन्दुपातस्थाने पुनः दधौ पुटं स्थापयामास । तस्याः शाखिकायाः शाखायाश्च जलं तस्य नृपस्य आशायाः जलाशायाः प्रस्पर्द्धया वृद्धिस्पर्द्धया इव अग्रतोऽग्रे परतः परतः यत्र पुटं न्यस्यति ततः परतः परतोऽगमत् पपात ॥३०९॥

न सांप्रतं पत्रपुटेऽपि पाथः, पतत्यदः पातुकमेव कस्मात् ? ।
ध्यायन्निति व्याकुलितस्तृषाऽपि, मूलाज्जलोत्पत्तिमवैक्षताऽयम् ॥३१०॥

नेति—सम्प्रतम् अदः पातुकं पतत्पाथो जलम् कस्माद्धेतोः पत्रपुटेन पतति । इति ध्यायन् वितर्कयन् तृषा पिपासया व्याकुलितोऽपि अयम् मूलात् वृक्षमूलमारुह्य जलोत्पत्तिं जलनिर्गमस्थानमवैक्षत ॥३१०॥

सुप्तोत्थितं तत्र शनैश्चरन्तं, महाभुजङ्गं नृपतिर्ददर्श ।
तदाननादेव विनिस्सरन्ती-, रधिप्रकारा गरलच्छटाश्च ॥३११॥

सुप्तोत्थितमिति—तत्र जलनिर्गमप्रदेशे नृपतिः पूर्वं सुप्तं पश्चादुत्थितं प्रबुद्धम् अत एव, शनैः चरन्तं चलन्तं महाभुजङ्गं ददर्श, तस्य महाभुजङ्गस्याननान्मुखादेव विनिःसरन्तीः निर्गच्छन्तीः अधिप्रकाराः अधिकमात्राः गरलस्य विषस्यच्छटाः समूहाश्च ददर्श ॥३११॥

व्यचिन्तयद् भूमिपतिः स्वचित्ते, ऽप्यहो ! खगोऽयं परकृत्यनिष्ठः ।
स्वप्राणितं नाशमवाप्य येन, मत्प्राणितं रक्षितमात्मनैव ॥३१२॥

व्यचीति—भूमिपतिः स्वचित्ते व्यचिन्तयद् , किमित्याह-अहो ! इति सशोकविस्मये । अयं मृतः खगः परकृत्यनिष्टः परोपकारी, यत, येन खगेन स्वप्राणितजीवितं नाशमवाप्य त्यक्त्वा आत्मना स्वयमेव मत्प्राणितम् मम जीवितं रक्षितम् ॥३१२॥

अहं जलभ्रान्तिवशादपास्य-, मपास्यमेतद् गरलं यदीह ।
न राज्यसम्पत्प्रभवं सुखं मे, न नाकिलोकस्य रमाऽभविष्यत् ॥३१३॥

अहमिति—यदि इह अहम् जलभ्रान्तिवशात् शुद्धजलभ्रमादेतद् अपास्य त्याज्यम् गरलं विषम् अपास्यम् पिबेयञ्चेत्, मे मम राज्यसम्पत्प्रभवं राजर्धिजन्यं सुखं नाभविष्यत्, तथा नाकिलोकस्य स्वर्गस्य रमा सम्पच्च नाभविष्यत्, विषपानेनापमृत्योः नरकेष्वेव गमनादिति भावः ॥३१३॥

इति स्मरंस्तस्य महोपकार-, मदत्तनेत्राञ्जलिभिर्जलानि ।
सहोदरस्येव नृपः कथं वा, तादृग्वियोगः कुरुते न दुःखम्? ॥३१४॥

इतीति--इतीत्थं तस्य खगस्य महोपकारं स्मरन् नृप: सहोदरस्य निजभ्रातुरिव नेत्राञ्जलिभिः लोचनपुटैः जलानि अदत्त, निवापाञ्जलि ददाति स्म, अरुददिति यावत्। वा तादृशः निष्कारणोपकारिणो वियोगः दुःखं कथं न कुरुते? अपि त्विष्टजनवियोगः दुःखाय प्रभवत्येवेति भावः ॥३१४॥

इत्युद्भवदुःखसमाकुलेऽस्मि-, न्नृपे पताकिन्यपि साऽऽपपात।
क्ष्मापं निरीक्ष्याक्षतगात्रलक्ष्मी,-समन्वितं हर्षमवाप चाऽरम् ॥३१५॥

इत्युद्भेति--इतीत्थं उद्भवतादुःखेन समाकुले अस्मिन्नृपे सति सा वनमुखस्थापिता पताकिनी नृपसेनाऽपि आपपाताजगाम, क्ष्मापं नृपम् अक्षतया घातमप्राप्तया गात्रलक्ष्म्या शरीरशोभया समन्वितम् युक्तं, सुस्थमिति यावत् निरीक्ष्य अरं शीघ्रं हर्षमवाप च ॥३१५॥

जलं जलाध्यक्षवरोऽपि सूदा-, ध्यक्षोऽपि भोज्यानि मनोहराणि ।
उपानयद् भूमिपतिश्च वक्त्रं, प्रक्षाल्य वाः शीतमपात् सुगन्धि ॥३१६॥

जलमिति--जलाध्यक्षवरः जलाधिकारी जलम्, सूदाध्यक्ष पाचकः मनोहराणि भोज्यन्यपि चोपानयत् पानाय भक्षणाय च ददतः स्म। भूमिपतिश्च वक्त्रं मुखं प्रक्षाल्य प्रमार्ज्य सुगन्धि शीतं वा वारि अपात् पिबति स्म। "आपः श्री भूम्निवार्वारी"त्यमरः ॥३१६॥

तथास्थिते पक्षिणि पक्षिभुक्ते, साश्रं क्षिपन्नक्षि विचक्षणेन।
क्षोणीपतिर्व्यज्ञपि सैन्यपेन, स्वामिन्! विषादः किमकाण्ड एषः ॥३१७॥

तथेति--पक्षिणि खगे पक्षिभुक्ते गतप्राणे तथा स्थिते शवावस्थे साश्रं सबाष्पमक्षि नेत्रे क्षिपन् कुर्वन् मृतं तत्पक्षिशवं पश्यन्नित्यर्थः। क्षोणीपतिः विचक्षणेनेङ्गितज्ञेन सैन्यपेन सेनापतिना व्यज्ञपि, तदेवाह-स्वामिन्? अकाण्डेऽनवसरे एष विषादः खेदः किम्? कुतोहेतोरित्यर्थः ॥३१७॥

प्राग्वृत्तकाख्यानपुरस्सरं स, प्रोचे गिरा गद्गदया नरेन्द्रः।
मया कृतघ्नेन विनाशितोऽयं, यो जीवितं मे विततार सारम् ।३१८॥

प्रागिति—प्राग्वृत्तस्य भूतपूर्ववृत्तान्तस्य आख्यानपुरस्सरं कथनपूर्वकम् स नरेन्द्रः शत्रुञ्जयः गद्गदया शोकसंरुद्धया वाचा प्रोचे, किमित्याह-कृतघ्नेन अकृतज्ञेन मया अयं पक्षि विनाशितो हतः, यः खगः मम सारं सर्वमहत् जीवितं विततार ददौ ॥३१८॥

स्वजीवितव्यव्ययतः पतन् मा-, मवन्नयं पुण्यवतां वतंसः।
अहं पुनः पापवतां पुरोगो-, हन्ताऽस्य हन्ता मम का गतिस्तत्? ॥३१९॥

स्वेति—स्वजीवितस्य स्वप्राणाना व्ययतः नाशेनापि मामवन् रक्षन्नयं पतन् खगः पुण्यवतां वतंसः महापुण्यः अहं पुनः अस्य स्वजीवितरक्षकस्य खगस्य हन्ता सन् पापवतां पुरोगोऽग्रेसरः महापापीत्यर्थः, हन्तेति खेदे। तत्तस्मान्मम का गतिः स्यात्? एतादृशपापकर्मणोहि अनिर्वचनीयैव जघन्या गतिर्भवितुमर्हतीत्यतः महान् खेद इत्यर्थः ॥३१९॥

इत्यात्तशोकं वसुधासुधांशुं, सेनापतिः प्राह शुचं नुनुत्सुः।
गते मृते वाऽतिगते न शोकः, कार्यः स्वयं वेत्त्यद एव देवः ॥३२०॥

इत्यात्तेति—इत्युक्त प्रकारेण आत्तशोकं व्याप्तशोकम् वसुधायां सुधांशुश्चन्द्रः स इव त राजानम् सेनापतिः शुचं शोकम् नुनुत्सुः अपाकर्तुमिच्छुः सन् प्राह-तदुक्तिमेवाह-गते प्रयाते मृते अतिगते व्यतीते वा शोकः न कार्यः, अदः वृत्तं देवः स्वयं वेत्त्येव, इति तद्बोध प्रयोजकत्वं मम पुनरुक्तत्वादिति भावः ॥३२०॥

संस्कारमाधाय तदस्य दत्त्वा, जलाञ्जलिं चैव सहोदरस्य।
देवोऽथ नित्यं वितनोतु कृत्यं, कृत्यं विना यन्न हि जीवलोकः ॥३२१॥

संस्कारेति—तत्ततः शोकं मुक्त्वा सहोदरस्य भ्रातुरिवास्य खगस्य संस्कारं दाहादिकां क्रियामाधाय कृत्वा जलाञ्जलि निवापाञ्जलिञ्च दत्त्वा अथानन्तरं देवो नित्यं कृत्यम् नैत्यिकं कर्म वितनोतु करोतु, हि यतः जीवलोकः कृत्यं विना न, स्थातुमर्हतीति शेषः ॥३२१॥

युक्तं तदुक्तं नृपतिः समस्तं, व्यधाद् विमुञ्चन् शुचमाप्तवाक्यैः।
पौरैः कृतारात्रिकसंविधानः, क्रमादविक्षच्च समुच्चसौधम् ॥३२२॥

युक्तमिति—नृपतिः आप्तस्य जनस्य वाक्यैः कृत्वा शुचं शोकं विमुञ्चन् युक्तमुचितं तस्य सेनापतेरुक्तं समस्त सा कल्येन व्यधाच्चकार। क्रमाच्च पौरैः कृतम् आरात्रिकस्य नीराजनायाः प्रत्यावृत्तस्या वर्धापनरूपायाः सविधानमनुष्ठानं यस्य स तादृशः कृतस्वागतः सन् समुच्चं सौधं राजप्रासादमविक्षत् प्रविष्टः प्राप्तः ॥३२२॥

प्रशासतोऽपि क्षितिमण्डलस्या-, ऽऽधिपत्यमाखण्डलपौरुषस्य।
तत्पक्षिनिर्यातनमेव चित्तं, दुनोति तच्छल्यमिवाथ तस्य ॥३२३॥

प्रशेति—अथ पुर प्रवेशानन्तरम् क्षितिमण्डलस्य अधिपत्य राज्यं प्रशासतोऽपि आखण्डलापौरुषस्येन्द्रतुल्यपराक्रमस्य तस्य शत्रुञ्जयस्य चित्तं तस्य प्राणरक्षकस्य पक्षिणः निर्यातनं [illegible], तच्छल्यमिव दुनोत्येव ॥३२३॥

कृत्यावलीशैवलिनीमपारां, समुत्तरद्भिः पुरुषैस्ततश्च ।
ज्ञेया कथञ्चित्कुपरीक्षतोग्र, स्फुरन् महावर्त विवर्त-गर्ता ॥३२४॥

कृत्येति—(अथ कीर्तिराजस्य वचः उपसंहरति)—ततः सहसा कृतस्य दुष्परिणामाद्धेतोश्च अपरां विस्तीर्णां कृत्यावली कार्यसमूहः एव शैवलिनी नदी तां समुत्तरद्भिः पारं गच्छद्भिः पुरुषैः कृत्यनिपुणैः जनैः कथञ्चित केनापि क्रोधादिना हेतुना प्रकारेण कुपरीक्षता अविचार्यकारित्वम् उग्रः अभिभूतिप्रयोजकत्वाद् भयङ्करः स्फुटन् च महावर्तस्य अम्भो भ्रमस्य विवर्तः विस्तारः यस्यां सा तादृशी या गर्ता अवटः सा ज्ञेया, पातप्रयोजकत्वस्योभयत्र तुल्यत्वादिति भाव. ॥३२४॥

इत्थं कथां कीर्तयतस्तदाऽस्य, श्रीकीर्तिराजस्य नृपाङ्गजस्य ।
प्राभातिकानामुरुतूर्यकाणां, श्रोत्राध्वनिध्वानततिर्बभूव ॥३२५.।

इत्थमिति—तदा रात्रौ इत्थमुक्तप्रकारेण कथां वार्त्ताम् कीर्त्तयतः कथयतः नृपाङ्गस्य अस्य प्राहरिकस्य श्रीकीर्तिराजस्य श्रोत्राध्वनि कर्णपक्षे उरुतुर्यकाणाम् विशालवाद्यानाम् प्राभातिकानाम् प्रभाते वाद्यमानानाम् ध्वानततिः शब्दसन्ततिः बभूव प्राभातिकवाद्यशब्दमशृणोदित्यर्थः ॥३२५॥

आयामिनीमापदमस्यपास्य, पद्माकरान् बोधयितुं पटिष्ठः ।
असौ समुद्गच्छति देव ! सूरः-,प्रद्योतिताशस्त्वमिवाग्र्यधामा ॥३२६॥

आयेति—देव ! आयामिनीम् रात्रिपर्यन्तम् आपदम् अस्तमनरूपम् दुःखमपास्य दूरीकृत्य पद्माकरान् पद्मखण्डान् बोधयितुम् विकासयितुम् पटिष्ठः पटुतमः प्रद्योतिताशः प्रकाशितदिक्कः त्वमिवाग्र्यधामा प्रशस्यतेजाः असौ सूर सूर्यः समुद्गच्छत्युदेति ॥३२६॥

वैतालिकस्योक्तमिदं निशम्य, प्राभातिकं कृत्यमसौ वितत्य ।
सिंहासनं भूभृदलंचकार, यथैव पूर्वाचलसानुमर्कः ॥३२७॥

वैतेति—वैतालिकस्य मङ्गलपाठकस्य बन्दिनः इदं पूर्वोक्तमुक्तं वाक्यम् निशम्य प्राभातिकं कृत्यं वितत्य समाप्य असौ भूभृज्जितशत्रुः अर्कः सूर्यः पूर्वाचलस्योदयाचलस्य सानुं शिखरं यथैव सिंहासनमलञ्चकार ॥३२७॥

ततः सभाऽपूर्यत सभ्यमन्त्रि, सामन्तसेनापतिमुख्यलोकैः ।
वनीव जम्बीरकबीज पूर. नारङ्गजम्बूमुखैर्द्रुमौघैः ॥३२८॥

तत इति—ततः नृपे सिंहासनासीने सति सभा वनीउद्यानम् जम्बीरकैः बीजपूरैः नारङ्गैः जम्बूभिश्च प्रमुखैः प्रभृतिभिः द्रुमौघैःतत्तदाख्य तरुसमूहैरिव सभ्यैः मन्त्रिभिः सामन्तैः सेनापतिभिश्च मुख्यैः लोकैश्चापूर्यत भृता ॥३२८॥

विचिन्तयामास ततः क्षितीश,-स्ते वत्सराजप्रमुखास्त्रयोऽपि ।
जग्मुर्ममादेशमसाधयित्वा, कथं महाकैतववृत्तिभाजः ? ॥३२९॥

विचीति—ततः सभाभूतौ सत्याम् क्षितीशः विचिन्तयामास, किमित्याह—ते त्रयोऽपि यामिकाः वत्सराज प्रमुखाः मम आदेशं देवराजवधरूपं निदेशमासाधयित्वा असम्पादयित्वा, अत-एव, महाकैतवस्य महाकपटस्य वृत्तिं भजन्तीति ते तादृशाः छलपराः कथं जग्मुः ? ॥३२९॥

अन्यं तदर्थं विनियोजयामी-, त्येवं स्वचित्ते परिचिन्तयंश्च ।
विज्ञप्त एषोऽपि समागतेन, श्रीदेवराजेन नृपो नतेन ॥३३०॥

अन्यमिति—तदर्थं देवराजवधार्थमन्यं कञ्चित्पुरुषं विनियोजयामि, आदिशामीत्येवं परि-चिन्तयंश्च एष नृपः समागतेन नतेन कृतप्रणामेन श्रीदेवराजेन विज्ञप्तः इति ॥३३०॥

तद्विज्ञप्तिमेवाह—

ह्यो भूतसंभूतगिरेश ! मत्वा, तवापदं सम्पदधिश्रयस्य ।
शय्यागृहाभ्यन्तर एव जाग्र-, च्चक्रे द्विधा सर्पमहं निशायाम् ॥३३१॥

ह्य इति—ईश ! स्वामिन् सम्पदधिश्रयस्य लक्ष्मीवतस्तव आपदं सर्पदंशरूपं भूतेन प्रेतेन सम्भूतया जातया गिरा वाण्या ह्यो गतदिने मत्वा विज्ञाय निशायाम् शय्यागृहाभ्यन्तरे जाग्रदेवाहं सर्पं द्विधा चक्रे हतवान् ॥३३१॥

अवेक्ष्य देवीहृदयोपरिष्टाद्, रक्तं च तस्मात् पतितं जवेन ॥
तत् प्रोञ्छयन् पाणितलेन देव्या, ज्ञातो न वेत्येतदवैमि नैव ॥३३२॥

अवेक्ष्येति—तस्माद् द्विधाभूतात्सर्पात् पतितं रक्तं देव्याः हृदयस्योपरिष्टात् अवेक्ष्य जवेन शीघ्रतया तद्रक्तं पाणितलेन करेण प्रोञ्छयन् दूरीकुर्वन् अहं देव्या ज्ञातो नवेत्येतन्नैवावैमि जानामि ॥३३२॥

इत्युक्त्वा राड्निदेशाद् विषधरशकलद्वन्द्वमानीय मध्ये,
संसत् प्रादीदृशत् स प्रकृतिपरहिताभ्युद्यमे बद्धकक्षः,
तद् दृष्ट्वा भूमिभर्ता स्म वदति विभवद्विस्मयोत्तानचित्तो-,
ऽहो ! कीदृक्ष ममैषां नरजनुषि समेऽपीक्ष्यते त्वन्तरं वै ? ॥३३३॥

इतीति—इत्युक्तप्रकारेणोक्त्वा राज्ञः नृपस्य निदेशात् विषधरस्य सर्पस्य शकलद्वन्द्वं खण्ड-युग्ममानीय मध्ये संसत् सभामध्ये प्रकृत्या स्वभावतः परहितायाम्युद्यमे प्रवृत्तौ बद्धकक्षः सदातत्परः स देवराजः प्रादीदृशत् दर्शयति स्म । तद्विषधरखण्डद्वयं दृष्ट्वा विभवतोत्पद्यमानेन विस्मयेन उत्तानचित्तः विकासिमनाः भूमिभर्ता नृपः वदति स्म, किमित्याह—अहो इति विस्मये, मम एषां देवराजादीनाञ्च नरजनुषि मनुष्यत्वे समे तुल्येऽपि तु पुनः किदृक्षमन्तरं तारतम्यम् एकः परोप-कारबुद्धिरपरश्च सहसा वधबुद्धिरिति महदन्तम् इति भावः ॥३३३॥

अरक्षद् मत्प्राणानयमगणितस्वात्मविलयः–,
कृतघ्नोऽहं त्वस्य प्रशमनविधौ बद्धधिषणः ।
निषिद्धोऽघादेतत्कदनकरणाद् यैरहमहो !,
न किं ते वत्साद्या दधति मम सोदर्यसमताम् ॥३३४॥

अरक्षदिति—अयं देवराजः अगणितस्वात्मविलयः उपेक्षित स्ववधः सन् मम प्राणानरक्षत्, अस्य देवराजस्य प्रशमनविधौ परम्पराके शमनं प्रोक्षणं च वधार्थकमित्यमरोक्तेः, वधे बद्धधिषणः हठी अहं तु पुनः कृतघ्नोऽकृतज्ञः, एतदन्तरमितिभावः । अहो ! यैः वत्सराद्यैः एतस्य देवराजस्य कदनकरणात् वधजन्यात् अघात् पापात् निषिद्धः कालक्षेपादिना निवारितः ते वत्साद्याः वत्सराजाद्याः मम सोदर्यसमताम् सोदरभ्रातृतुल्यताम् न दधति किम् ? अपि त्ववश्यं दधति, पापान्निवारका हि सोदरा एव भवितुमर्हन्तीति भाव' ॥३३४॥

प्राणान् यः प्रददाति तस्य न पुमानानृण्यमास्कन्दति,
प्रायः कोऽपि च जीविताधिकमहो ! यन्नास्ति किञ्चित् क्वचित् ।
प्राणेभ्यो मम लक्षकोटिगुणितां तां वल्लभां रक्षतो–,
नास्याऽऽनृण्यमुपैमि तच्छृणुत मेऽमात्याः ! यथार्थां गिरम् ॥३३५॥

प्राणानिति—यः प्राणान् अन्यरक्षार्थं स्वजीवितं प्रददाति त्यजति, तस्य परोपकारिणः प्रायः कोऽपि पुमान् जनः अनृण्यमृणमुक्ततां नास्कन्दति, अहो ? यधतः जीविताधिकं किञ्चिद्वस्तु क्वचिन्नास्ति, तथा च किं दानेनानृण्यं स्यादिति भावः । अमात्याः ! तत्तः मम प्राणेभ्यः प्राणानपेक्ष्य लक्षकोटिगुणितां तां वल्लभां रक्षतोऽस्य आनृण्यं न नैवोपैमि प्राप्नोमीति मे यथार्थां गिरं शृणुत ॥३३५॥

अथ देवराजस्य राज्याभिषेकं युग्मेनाह—

विद्वांसस्तान्यपत्यान्यभिदधतितमां दुर्गतिं नो पतन्ति,
संजातैः पूर्वजा यैरसमगुणमहारत्नमाणिक्यशैलैः ।
तद् व्युत्पत्त्याऽनयामे पतनविहननान् नूनमेतेऽप्यपत्या–,
न्येतं तद्देवराजं नयविनययुतं राज्यभारेऽधिरोप्य ॥३३६॥
कुर्वेऽहं स्वं कृतार्थं सुकृतकरणतो वः समक्षं विरक्त–,
इत्युक्त्वाऽमात्ययुक्तो नरपतिरकरोत् स्वे पदे देवराजम् ।
सार्धं पौरैरमात्यैः परिवृढवचनाद् संस्मृतैस्तीर्थतोयैः,
सामन्तैः सोऽभ्यषेचि प्रमदजलपरिष्वक्तनेत्रारविन्दैः ॥३३७॥

विद्वांसः तानि अपत्यानि अभिदधतितमां पुनः कथयन्ति, यैः असमानामनुपमेयानां गुणानामेव महारत्नमाणिक्यानां शैलैरत्नद्रूपैरपत्यैः संजातैः उत्पन्नैः सद्भिः दुर्गतिं नरकं पूर्वजा न पतन्ति गच्छन्ति, तत्तया अनया व्युत्पत्त्याऽर्थनिर्वचनेन कृत्वा मे मम पतनस्य प्राणरक्षकवध-जन्यपापजन्यनरकपातस्य विहननान्निवारणाद्धेतोः एते देवराजाद्याः नूनमपत्यानि, तत्ततः एतेन येन विनयेन च युतं देवराजं राज्यभारे अधिरोप्याधिष्ठाप्याहं स्वमात्मानं, वो युष्माकं समक्ष-मेव सुकृतकरणतः पुण्यप्रभावाद्विरक्तः सन् कृतार्थं कुर्वे इत्युक्त्वा अमात्ययुक्तः नरपतिः देवराजं स्वपदे नृपस्थाने अकरोत्, तथा, परिवृढस्य नृपस्य वचनादादेशात् प्रमदजलेन हर्षाश्रुणा परिप्लुत-नेत्रारविन्दैः प्लुतनेत्रकमलैः पौरैः सार्धम् अमात्यैः सामन्तैश्च सभृतैः समानीतैः तीर्थतोयैः तीर्थ-जलैः स देवराजोऽभ्यषेच्यऽभिषिक्तः इति ॥२३६॥ २३७॥

राज्ञा तेन विनिर्मितोत्सवभरः श्रीदत्तसूरिक्रमा-,
म्भोजान्ते व्रतमग्रहीत् समुदयद्वैराग्यरङ्गो नृपः ।
राजर्षेरथ सूरयश्चतसृणां ख्यातिस्पृशामुज्झिता-,
मुख्यानां प्रवरामनागतकथामेतां वधूनां जगुः ॥२३८॥

राज्ञेति—तेन देवराजाख्येन राज्ञा विनिर्मितः कृतः उत्सवभरः निष्क्रमणोत्सवातिशयो यस्य स तादृशः नृपः जितशत्रुः समुदयति वर्धमाने वैराग्ये रङ्गो हार्दं यस्य स तादृशः सन् श्री-दत्तसूरिक्रमाम्भोजान्ते व्रतं दीक्षामग्रहीत्, अथानन्तरम् सूरयः राजर्षेः जितशत्रुनृपं प्रति ख्यातिस्पृशां प्रसिद्धानाम् उज्झितामुख्यानाम् चतसृणाम् वधूनां स्त्रीणाम् प्रवरां श्रेष्ठामनागतां भाविनीमेतां वक्ष्यमाणां कथां जगुः कथयामासुः ॥२३८॥

क्षेत्रेऽस्मिन् भरते समस्ति मगधे देशे प्रसिद्धं पुरं,
श्रीमद्राजगृहं प्रशस्यकमला स्रोतस्विनीवार्धिभम् ।
सौजन्यार्जुनहेमभूधरसमः क्ष्मापालसंमानना-,
सामान्यैकधनो धनोऽप्यभिधया तस्मिन् महेभ्योऽवसत् ॥२३९॥

क्षेत्रे इति—अस्मिन् भरते क्षेत्रे मगधे देशे प्रशस्य सातिशयां या लक्ष्मीः सैव स्रोतस्विनी नदी तस्या वार्धिः समुद्र इव भातीति तत् सम्पदाकरः श्रीमद्राजगृहं नाम प्रसिद्धं पुरमस्तीति शेषः। तस्मिन् राजगृहे पुरे सौजन्येनार्जुन उज्ज्वलः हेमभूधरेण मेरुपर्वतेन समः तुल्यः क्ष्मापालस्य तत्सम्ब-न्धिनी या संमानना सत्कृतिः तस्याः असामान्यमसाधारणमेवैकं यद्वा सामान्यं साधारणमेवै-कं धनं यस्य स तादृशः राजमान्य अभिधया नाम्ना अपि धनः महेभ्योऽवसत् ॥२३९॥

तज्जायाऽजनि धारिणी शुचियशः सन्दोहविस्तारिणी,
शीलालङ्कृतिधारिणी मधुरवाग् मिथ्यात्वसंहारिणी ।
चत्वारस्तनयास्तयोः समभवन् पालोऽथ देवस्तथा,
गोपो रक्षित एव पूर्वगधनध्वानास्त एवं श्रुताः ॥३४०॥

तदिति—तस्य धनस्य जाया भार्या धारिणी नाम, या शुचिनो गौरस्य यशसः सन्दोहस्य पटलस्य विस्तारिणी, शीलमेवालङ्कृतिः तद्धारिणी शीलवती, मधुरवाक् प्रियभाषिणी मिथ्यात्वस्य संहारिणी सम्यक्त्ववती च, तयोः धनधारिण्योः चत्वारः तनया अभवन् तान्नामग्राहमाह—पालः अथ देवः तथा गोपः रक्षितः, स एवश्चार्थे, एवं ते चत्वारः पूर्वगः नामादिगः धन इति ध्वानः शब्दो येषां ते तथा धनपालः, धनदेवः, धनगोपः, धनरक्षित इत्येवं श्रुताः ख्याताः ॥३४०॥

तेषां वध्वः क्रमश इमिका उज्झिता भोगवत्या-,
ख्या विख्याता प्रथितविनया रक्षिता रोहिणी च ।
यासां रूपं नयनपदवीं संनिधायेन्द्रदारा-,
गाढाभ्यासान्नयनविषये जज्ञिरे निर्निमेषाः ॥३४१॥

तेषामिति—तेषां धनपालादीनां वध्वः भार्याः क्रमशः इमिकाः इमाः ता एवाह—उज्झिता तथा भोगवत्याख्या, रक्षिता, रोहिणी च । प्रथितो विनयो यासां ता तादृश्यः विनयवत्यः विख्याताः प्रसिद्धाः यासामुज्झितादीनां रूपं सौन्दर्यं नयनपदवीं संनिधाय नेत्रमार्गे कृत्वा, दृष्ट्वेत्यर्थः । इन्द्र-दाराः इन्द्राण्यः गाढाभ्यासात्पुनः पुन-रवलोकनाद्धेतोः नयनविषये निर्निमेषाः जज्ञिरे । देव्या-दीनां निर्निमेषत्वे तादृशभ्यासादीनामसम्बन्धे सम्बन्धोक्तिरूपा अतिशयोक्तिरलङ्कारः ॥३४१॥

दध्यौ सोऽपि धनोऽन्यदा चरमके यामे रजन्या इति,
प्राज्ञैः कार्यमनागतं दृढतरं गेहस्य सूत्रं स्वयम् ।
बध्वा वत्स्यति मन्दिरं ममकया सम्यक् चिरं सेन्दिरं !,
निर्णीतं तदनागतां विरचयाम्यासां परीक्षां स्वयम् ॥३४२॥

दध्याविति—स धनोऽपि अन्यदा रजन्याश्चरमके अन्तिमे यामे प्रहरे दध्यौ, किमित्याह—प्राज्ञैः अनागतं भविष्यद् गेहस्य सूत्रं प्रबन्धः वर्त्तनव्यवहार इति यावत् स्वयं दृढतरं कार्यम्, यथा न भज्येतेति भावः । मम मन्दिरं गृहं कया बध्वा कृत्वा चिरं सेन्दिरं सलक्ष्मीकं वत्स्यति स्थास्यति, का आसां तादृक् चतुराया व्यवस्थितगृहप्रबन्धैः कृत्वा गृहं ससम्पत्पालयिष्यतीति प्रश्नः, तत्ततः निर्णीतं धनेन निश्चयः कृतः, किमित्याह—स्वयम् आसाम् वधूनामनागतां भवि-ष्यन्तीं परीक्षां विरचयामि, कया रीत्या ताः परीक्षणीयाः इत्येवं विचारयामीत्यर्थः ॥३४२॥

इत्थं ध्यायत एव तस्य रजनी क्षीणा खलप्रीतिवत् ,
प्रातः कृत्यमयं वितत्य सुजनान् सर्वांस्ततो मेलयन् ।
भोज्यैर्मोदकखाद्यकप्रभृतिभिस्तान् भोजयित्वांशुकैः,
सत्कृत्य प्रवरैरजूहवदयं ता उज्झिताद्या वधूः ॥३४३॥

इत्थमिति—इत्थमुक्तप्रकारेण ध्यायतः विचारयत एव तस्य धनस्य रजनी खलस्य प्रीतिवत्क्षीणा, प्रभातेत्यर्थः । ततोऽयं प्रातःकृत्यं वितत्य समाप्य सर्वान् सुजनान् मेलयन् एकत्रीकुर्वन् तान् मोदकखाद्यप्रभृतिभिः मिष्टान्नाद्यैः भोज्यैः भोजयित्वा प्रवरैरुत्तमैर्वस्त्रैः सत्कृत्यायं धनः ता उज्झिताद्या वधूरजूहवदाकारयामास ॥३४३॥

तासां व्रीहिकणान् प्रदाय सुमतिः पञ्चापिपञ्चो चिवा-,
नित्येवं भवतीभिरेष ममक न्यासो वरं रक्षताम् ।
जेष्ठाऽचिन्तयदेष नाम विकलः पश्यत्सु लोकेषु यः,
पञ्च व्रीहिकणान् ददाति यदि वा दूष्यं सतां वार्द्धकम् ॥३४४॥

तासामिति—सुमतिर्धनः तासामुज्झितादीनां पञ्च पञ्च प्रत्येकं तत्सङ्ख्याकान् व्रीहिकणान् प्रदाय भवतीभिः एष ममकन्यासः वरं साधु रक्ष्यताम् । यथा न नश्येदिति भावः, इत्येवमूचिवान् कथयामास । तत्र, ज्येष्ठोज्झिता अचिन्तयत्, किमित्याह—एष मम श्वसुरः विकलः मत्तः नाम, यः लोकेषु पश्यत्सु सत्सु पञ्चव्रीहिकणान् ददाति, लोकेषु पश्यत्सु धनिनो व्रीहिकणात्मकन्यासदानं हास्यकरमिति मत्तादन्यः क इत्थं कुर्यादिति भावः । यदि वा अत एव सतां वार्धकम् वृद्धत्वं दूष्यम् निन्दनीयम् भवतीत्यर्थः ॥३४४॥

व्रीहीनेष यदा पुनर्मृगयिता दत्तान् कदाचिद् निजा-,
नन्यानेव तदाऽवदातधिषणा वृद्धाय दास्याम्यहम् ।
ध्यात्वेतिश्वशुरस्य मानरसिका दृष्टिस्तिरोधाय सा,
तान् पञ्चापि समुज्झतिस्म सहसाऽऽत्मानं च लक्ष्मीपदात् ॥३४५॥

व्रीहीनिति—यदा पुनः एष मम श्वसुरः दत्तान् निजान् व्रीहीन् मृगयिता अन्विष्यति तदा अवदातधिषणा बुद्धिमत्यहमन्यान्नेव व्रीहिकणान् वृद्धाय दास्यामीति ध्यात्वा विचार्य सा मानरसिका अभिमानवती उज्झिता श्वसुरस्य दृष्टेः तिरोधाय व्यवधानं कृत्वा सहसा अविचारेण तान् पञ्चापि व्रीहिकणान्, लक्ष्मीपदात्सम्पदः आत्मानञ्च समुज्झति स्म, या न सञ्चयशीला सा लक्ष्मीमेव त्यजतीति भावः ॥३४५॥

दध्यौ भोगवती न कारणमृते तातः सुबुद्धिस्त्वयं,
दत्ते व्रीहिकणान् कथञ्चन ततो नैतांस्त्यजामि स्फुटम् ।
सन्तानाय भवन्ति मे किल पुरा पूज्यार्पिता एतके,
ध्यात्वैवं निजनामसान्वयतया तान् कुक्षिसात् साऽकरोत् ॥३४६॥

दध्याविति—भोगवती तदाख्यावधू दध्यौ, किमित्याह—अयं तातः मम श्वसुरस्तु सुबुद्धिः अतः, कारणमृते कथञ्चन व्रीहिकणान् न दत्ते, बुद्धिमतः प्रवृत्तिर्न निष्प्रयोजना, सप्रयोजनकर्तृत्वस्यैव बुद्धिमत्त्वादिति भाव. । ततोहेतोः एतान् व्रीहिकणान् स्फुटं न त्यजामि, तर्हि किं कर्त्तव्यमित्याह—पूज्येन श्वशुरेणार्पिता एतके व्रीहिकणाः पुरा प्रथमं सन्तानाय पुत्राय भवन्ति किलेत्यलीके । इति ध्यात्वा निजनाम्नः सान्वयतया भोजनशीला भोगवतीत्येवमन्वर्थतया सा भोगवती तान् व्रीहिकणान् कुक्षिसादुदराधीनमकरोद् भुक्तवती ॥३४६॥

तार्तीयीकतया मिता विमृशति स्मैवं न पूज्यार्पिताः,
सन्त्याज्याः स्युरिमे न चापि कथमप्यास्वादनीया मया ।
रक्ष्याः किन्तु पिशाचराक्षसभयोच्छित्त्यै भविष्यन्ति मे,
बुद्धयेवं परिभाव्य साऽपि सुचिरं तान् पेटिकायां न्यधात् ॥३४७॥

तार्तीति—तार्तीयीकतया मिता तृतीया एवं वक्ष्यमाणप्रकारेण विमृशति स्म, तदेवाह—पूज्येनार्पिता इमे व्रीहिकणाः मया न सन्त्याज्याः, न चापि कथमपि आस्वादनीया भक्षणीया, तर्हि किं कर्त्तव्या इत्याह—किन्तु रक्ष्याः, यतः मे मम पिशाचराक्षसभयस्य उज्झित्यै दूरीकरणाय भविष्यन्ति, एवमुक्तप्रकारेण बुद्धया परिभाव्य विचार्य साऽपि रक्षिता तान् व्रीहिकणान् पेटिकायां न्यधात् ॥३४७॥

त्वा बन्धुभ्योऽर्पयित्वा रहसि सपदि तान् वापयामास काले,
तैरासीत् प्रस्थमात्रं फलभरकलितैर्मागधं सुप्रसिद्धम् ।
उप्त्वा वर्षे द्वितीयेऽप्यजनिषततरां कुम्भकास्ते प्रभूताः,
प्रत्यब्दं चोप्यमानाः क्रमश इति तके पल्यलक्षा बभूवुः ॥३४८॥

त्वेति—त्वा अन्या अन्तिमा रोहिणी रहसि एकान्ते गुप्तम् बन्धुभ्यः अर्पयित्व तान् व्रीहिकणान् काले आषाढादिसमुचितकाले वापयमास । क्षेत्रे रोहार्थं क्षेपितवती, फलभरेण कलितैः पूर्णैः तैः व्रीहिकणैरुप्तैः सुप्रसिद्धम् मागधं प्रस्थमात्रं मगधदेशीय प्रस्थपरिमाणं धान्यमासीत् जातम् । द्वितीये वर्षेऽपि उप्त्वा ते व्रीहिकणाः प्रभूताः वृद्धाः सन्तः बहवः कुम्भकाः कुम्भपरिमाणा

अजनिषततराम् जाताः इतीत्थं प्रत्यब्दं प्रतिवर्षम् उप्यमानसन्तश्च क्रमशः ते व्रीहिकणाः पल्यलक्षाः तत्संख्याकाः बभूवुः ॥३४८॥

अथाहूयश्रेष्ठी प्रथममिव ताः स्वाः प्रियवधू-,
र्ययाचे स्वन्यासं मधुमधुरवाणी समुदयः।
तदुक्त्या तेषां च त्यजनघसिसद् वृद्ध्यवगमात्,
स्थितिं चक्रे तासामिति तदुपचारैरनुगुणाम् ॥३४९॥

अथेति—अथैकदा श्रेष्ठी धनः, प्रथमं पुरेव ता स्वाः प्रियवधूराहूय मधुवन्मधुराणां वाणीनां समुदयः यो यस्य स तादृशः जनकः स स्वन्यासं पुरा दत्तं पञ्चव्रीहिकणात्मकं ययाचे। तासामुक्त्या हेतुना तेषां व्रीहिकणानां त्यजनं त्यागः घसिर्भक्षणम् सत् सत्त्वं वर्तमानत्वम् रक्षणमिति यावत् वृद्धिश्च, क्रमान्वयः, तदवगमात् ज्ञात्वा तासां वधूनां तदुपचारैः व्यवहारैरनुगुणामनुरूपाम् इति वक्ष्यमाणां स्थितिकार्यं नियोगं चक्रे ॥३४९॥

कस्याः क्व स्थितिं चक्रे इत्याकाङक्षानिवृत्तये आह—

आद्या पुञ्जोज्झनाद्येष्वशनविरचने तेन चक्रे द्वितीया,
कोशागारे तृतीया निजगृहपरमैश्वर्ययोगे च तुर्या।
दृष्टान्तस्यास्य साधोरुपनयनमथ श्रूयतां राजसाधो!,
सर्वर्द्धि स्थानराजोपपदगृहपुरं पुम्भवेनाऽऽप्तसाम्यम् ॥३५०॥

आद्येति—तेन धनेन आद्या उज्झिता पुञ्जोज्झनाद्येषु निष्प्रयोजनानां राशीनां मितस्ततस्त्यागादिकर्मसु, द्वितीया अशनविरचने पाकादि कर्मणि, तृतीया कोशागारे, तुर्या निजगृहस्य परमैश्वर्यस्य योगे व्यवहारादौ चक्रे नियुक्ता। अथ राजसाधो! राजर्षे! अस्योक्तस्य साधोरुत्तमस्य दृष्टान्तस्य उपनयन लक्ष्ये गमनं श्रूयताम्। सर्वर्धिस्थानं राजोपपद गृहं नाम पुरं राजगृहपुरम् पुम्भवेन मनुष्यभवेनाप्तसाम्यं प्राप्तसादृश्यम्, पुम्भव एव राजगृहमित्यर्थः॥

अथान्यांश्च घटयति-

ज्ञेयास्तत्र वधूचतुष्टयनिभास्ते भव्यजन्तुव्रजा,
यच्छन् पञ्चमहाव्रतीं गुरुसमस्तेषां धनो धीधनः।
एतान्येव महाव्रतानि सुमुने! ते व्रीहयः पञ्च च,
श्रीसङ्घः स्वजनव्रजप्रतिकृतिः सौजन्यमुन्मीलयन् ॥३५१॥

ज्ञेया इति—तत्र पुम्भवरूपे राजगृहे ते भव्यजन्तुव्रजाः वधू चतुष्टयस्य निभाः सदृशाः तेषां जन्तुव्रजानां पञ्च महाव्रती अहिंसादिपञ्चमहाव्रतात्मकान् व्रीहिकणान् यच्छन् धीधनः ज्ञानी गुरु समः धनः, सुमुने ? ते पञ्चव्रीहयश्च एतानि महाव्रतान्येव, श्रीसङ्घः स्वजन व्रजस्य स्वजन स्वजन समूहस्य प्रकृतिः तुल्यः, सौजन्यम् उन्मीलयन् प्रकटयन् अस्तीति शेषः । धन स्वजनवदित्यवगन्तव्यम् ॥३५१॥

औज्झत् तानि य उज्झितावदधमः स प्राप्नुयाद् नो सुखं,
धत्ते पञ्च महाव्रतानि सुतरां यो लिङ्गमात्रेण च ।
भव्यं भोगवतीव भोगनिरतो भक्तादि विन्देत स,
प्राप्नोत्येवहि सर्व एव भुवने कर्मानुरूपं फलम् ॥३५२॥

औज्झदिति—तत्र, य अधमो मन्दबुद्धिरुज्झितावतानि महाव्रतानि औज्झत् त्यजेत्, स सुखं नो नैव प्राप्नुयात् । यश्चलिङ्गमात्रेण, न तु कर्मणा, सुतरां तानि पञ्च महाव्रतानि धत्ते स भोगवतीव भोगनिरतः भव्यमुत्तमं भक्तादि भोग्यं विन्देत लभेत, हि यतः भुवने सर्व एव कर्मानुरूपं फलं प्राप्नोत्येव ॥३५२॥

योऽवेत् पञ्चमहाव्रतीं च निरतिचारां यथावस्थितां,
दिव्यर्द्धिं स तु रक्षितावदनघः प्राप्नोति कीर्त्या समम् ।
यो वा पालयति स्वयं हितधिया दत्ते परेभ्योऽपि यः,
सौख्यानां किल रोहिणीव स इहामुत्रापि पात्रं भवेत् ॥३५३॥

य इति—यश्च भव्यः, निरतिचाराम् अस्खलिताम् यथावस्थिताम् आगमानुसारिणीं पञ्च-महाव्रतीमवद्रक्षेत् न तु परेषामुपदेशं दत्वा धर्मे प्रवर्त्तयेदिति । स तु रक्षितावदनघः निष्पापः सन् कीर्त्या समं दिव्यर्धिं दैवसम्पदं प्राप्नोति । यो वा यश्च हितधिया स्वयं पञ्च महाव्रतीं पालयति, यः परेभ्योऽपि हितधियैव दत्ते, स इहामुत्र परलोकेऽपि रोहिणीव सौख्यानां पात्रं भवेत् ॥३५३॥

दृष्टान्तो भरते भविष्यति महावीरस्य तीर्थे परम् ,
सिद्धान्तादधिगम्य संमति मयाऽऽख्यातस्तवायं मुने ? ।
तत् त्वं धर्मपरां वधूमनुहरेस्तुर्यामिवार्योदया-,
मित्यादिश्य कथां यथार्थरुचिरां मौनं मुनीशोऽकृत ॥३५४॥

दृष्टान्त इति—मुने ! परं किन्तु अयं दृष्टान्तः भरते भरतक्षेत्रे महावीरस्य तीर्थे भविष्यति मया सम्प्रति सिद्धान्तादागमादधिगम्य ज्ञात्वा तव आख्यातः, तत्ततः त्वम् अवार्योदयाम् अप्रतिहताभ्युदयां धर्मपराम् तुर्याम् चतुर्थींवधूम् दृष्टान्तोक्तामनुहरेरनुसरेः इत्येवं यथार्थो सद्रूपा अतएव रुचिरा मनोहरा ताम् कथां वार्तामादिश्य कथयित्वा मुनीशः मौनमकृत तूष्णीं बभूव ॥

सोऽथ श्रीजितशत्रुसाधुतिलकस्तप्त्वा तपो दुष्करं,
गत्वा धामवतीर्य मानुषभवे निर्वाणमाप क्रमात् ।
इत्याख्याय कथाप्रपञ्चममृताऽऽम्रक्ष्मापमुख्यावनी–
शक्राणामथ देशनामशमयत् क्षेमङ्करस्तीर्थकृत् ॥३५५॥

स इति—अथानन्तरं स श्रीजितशत्र्वाख्यः साधुतिलकः दुष्करं तपः तप्त्वा द्यां स्वर्गं गत्वा अवतीर्य तस्माच्च्युत्वा मानुषभवे क्रमात् निर्वाणं मोक्षमाप । इत्येवमुक्तप्रकारेण अमृताम्रक्ष्माप मुख्यानामवनीशक्राणां राज्ञाम् कथाप्रपञ्चमाख्याय, अथानन्तरं तीर्थकृत् क्षेमङ्करः देशनां प्रवचनमशमयत् समाप्तवान् ॥३५५॥

इत्थं तीर्थकृतो निपीय सरसं धर्मोपदेशामृतं,
संसारस्थितिबाधनं त्रिजगतां कल्याणसंसाधनम् ।
नत्वा भक्तिपुरस्सरं जिनपतेः पादारविन्दद्वयं,
स्वं स्वं धाम विसारिधामविसरा वज्रायुधाद्या ययुः ॥३५६॥

इत्थमिति—इत्थमुक्तप्रकारेण तीर्थकृतः सकाशात् संसारस्थितेः संसारनिवासस्य बाधनं नाशकं त्रिजगतां कल्याणस्य संसाधनम् सरसं मनः प्रियं धर्मोपदेशामृतम् निपीय सादरं श्रुत्वा जिनपतेः पादारविन्दद्वयं भक्तिपुरस्सरं नत्वा विसारी प्रसरणशीलः धाम्नां तेजसां विसरः विस्तारः येषां ते तादृशाः परमतेजस्विनः वज्रायुधाद्याः स्वं स्वं धाम गृहं ययुरिति ॥३५६॥

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः,
पट्टे श्रीगुणभद्रसूरिसुगुरुश्चारित्रभाजां गुरुः ।
तच्छिष्येण विनिर्मितेऽत्र दशमः श्रीशान्तिवृत्ते महा,
काव्ये श्रीमुनिभद्रसूरिकविना सर्गो विशालो ययौ ॥३५७॥

अस्य श्लोकस्य व्याख्या निगदसिद्धा इति न प्रपञ्च्यते ॥

इति श्री शान्तिनाथचरिते दशमसर्गव्याख्या समाप्ता ॥

एकादशसर्गादौ मङ्गलाचरणश्लोकः—

उत्पादध्रौव्यनाशैः प्रतिसमयमिता युक्तता वस्तुमात्रे,
सत्ताऽनेकान्तवादे निजनिजगमकापेक्षया यस्य भव्ये ।
तं नत्वा श्री जिनेन्द्रं स्वसमयधिषणोदर्शनरसं तनोति,
व्याख्यामेकादशेऽस्मिन् जिनवरचरिते पूजनीये तु सर्गे ॥१॥

## ॥ अथ एकादश सर्ग व्याख्या प्रारभ्यते ॥

तत्र सर्गादौ मंगलार्थमाह—

यत्रैव संवेदनतारतम्यं विश्रान्तिमापत् किल तारतम्यात् ।
व्योम्नीवमानाश्रिततारतम्यं शान्तिप्रभुर्वः स मुदं तनोतु ॥१॥

यत्रैवेति—यत्र शान्ति प्रभावेन, नत्वन्यदेव, एतेन तस्य परमज्ञानवत्त्वमुक्तम्, संवेदनस्य ज्ञानस्य तारतम्यमियत्ता, व्योम्नि आकाशे मानं परिमाणं तदाश्रिततारतम्यमिव, आकाशस्य परम महत्परिमाणत्वादितिभावः । तारतम्यात् न्यूनाधिक्यात् ततः कस्याप्यधिकस्याभावादिति भावः। विश्रान्तिम् विरामम्, तस्यैवान्तिमत्वादिति भावः, आपत् किल, स शान्तिप्रभुर्वः युष्माकं मुदं हर्षं तनोतु, यो हि सर्वाधिकज्ञानवान् समुदो हेतुरिति नाधिकमिति भावः, उपमा ॥१॥

अथ वज्रायुधवृत्तान्तमाह—

चक्रप्रभावेण महोदयेन राड् वर्द्धितोऽथास्त्रगृहाधिपेन ।
वज्रायुधोऽभ्यर्चनमाचचार, चक्रस्य शक्रस्य बलानि जिष्णुः ॥२॥

अथ देशनां श्रुत्वा गृहगमनानन्तरम्, महोदयेन इत्यभ्युदयसाधनेन अस्त्रगृहस्य आयुधशालायाः अधिपेन सर्वोत्कृष्टत्वादस्त्रराजेन चक्रस्य प्रभावेण वर्धितः राट् राजा, चक्रस्य प्रभावो यस्मिन् तेन चक्रप्रभावजन्यमहोदयेनास्त्रगृहाधिपेन वर्द्धितो राट् राजा वज्रायुधः शक्रस्य-बलानि सैन्यानि जिष्णुः चक्रस्य चक्ररत्नस्याभ्यर्चनं पूजामाचचार करोतिस्म यद्वा बलानि सैन्यानि जिष्णुः रिपुसैन्यजेता वज्रायुधः शक्रस्य इन्द्रसम्बन्धिनः चक्रस्य तदाख्यास्त्रस्याभ्यर्चन-माचचार ॥२॥

अन्यानि रत्नान्यपि तस्य सेनान्यादीन्यभूवन् भुवनेश्वरस्य ।
पुण्ये समाक्रामति विस्तरं हि किं किं न सान्निध्यमुपैति पुंसाम् ? ॥३॥

अन्यानीति—तस्य भुवनेश्वरस्य वज्रायुधस्य सेनान्यादीनि सेनापतिप्रभृतीनि अन्यान्यपि रत्नानि स्वजातिश्रेष्ठानि अभूवन्, हि यतः पुण्ये समाक्रामति उदीयमाने सति पुंसाम् किं किं विस्तरं श्रेष्ठं विशालं वा वस्तु सान्निध्यं सामीप्यं नोपैति, अपि तु सर्वमेवोपैति, समाधेयम् ॥३॥

धातोरिव प्राद्युपसर्गवर्ग-श्चक्रस्य पश्चात् स चलन् बभासे ।
षट्खण्डके चक्रयपिमङ्गलावत्याख्ये सशैलं विजयं जिगाय ॥४॥

धातोरिति—स वज्रायुधः चक्रस्य पश्चात् धातोः व्याकरणप्रसिद्धभ्वादिधातोः पश्चात् प्राक् प्राद्युपसर्गवर्ग इव, प्राद्युपसर्गाः धातोः 'प्राक्प्रयुज्यन्ते इत्यनुशासनादिति भावः । चलन् बभासे शुशुभे, चक्री अपि षट्खण्डके मङ्गलावत्याख्ये षट्खण्डानि यस्मिन् तादृशे मङ्गलावत्याख्ये विजये सशैलं मङ्गलावतीविजयसीमाकारिपर्वतपर्यन्तं विजयं जिगाय जितवान् मङ्गलावती विजयस्य षट्खण्डानि साधयामासेत्यर्थः, विजयं जिगाय जितवान् ॥४॥

छायां जयन्तं कुसुमायुधस्य पुत्रं सहस्रायुधमिद्धबुद्धिम् ।
न्यस्योग्रशौर्यं स च यौवराज्ये भुंक्तेस्म सौख्यानि निरन्तरायम् ॥५॥

छायामिति—स वज्रायुधः कुसुमायुधस्य कामस्य छायां कान्ति जयन्तं कामादप्यधिकसुन्दरम् इद्धबुद्धिम् प्रशस्तमतिम् उग्रशौर्यं प्रचण्डपराक्रमम् सहस्रायुधं तदाख्यं पुत्रं यौवराज्ये युवराजपदं न्यस्य कृत्वा निरन्तरायं निर्विघ्नं यथास्यात्तथा सौख्यानि भुङ्क्ते स्म इति ॥५॥

अन्येद्युरास्थानमलञ्चकार चक्री महिन्द्रैः परितः परीतः ।
शक्रः सुधर्मामिव रत्नभूषादीपप्रभानिर्मथितान्धकारः ॥६॥

अन्येद्युरिति—अन्येद्युः परितः समन्तात् महीन्द्रैः सामन्तनृपैः परीतः परिवेष्टितः, रत्नभूषाणां दीप्तामिः भास्वरामिः निर्मथितो निरस्तोऽन्धकारो येन तादृशः निर्मथितान्धकारः निरस्ततमाः चक्री वज्रायुधः आस्थानं सभामण्डपं शक्रः सुधर्मां देवसभामिवाऽलञ्चकार ॥६॥

व्योम्नस्तदा कश्चन कम्पमान क्षेत्रोभृशं व्योमचरो युवैकः ।
वज्रायुधं तं शरणं जगाम, केषां महान्तः शरणं न वा स्युः ? ॥७॥

व्योम्न इति—तदा व्योम्नः आकाशात् कश्चन व्योमचरः विद्याधरः एकः युवा भृशं कम्पमानक्षेत्रः कम्पमानगात्रः सन् तं वज्रायुधं शरणं जगाम । ननु स तस्य शरणं कथं बभूवेति चेत्याशङ्कायामाह—महान्तः केषां वा शरणं न स्युः ? अपि तु सर्वेषामेव शरणं स्युरेव, महत्त्वस्यान्यथानुपपत्तेरिति भावः ॥७॥

आगात तस्यानुपदं पदार्हा काचिच्च विद्याधरवल्लभैका ।
देवाङ्गनेवाद्भुतरूपधेया-विभ्रत्यसिं खेटकमुत्कटं च ॥८॥

आगात इति—तस्य विद्याधरस्यानुपदं पृष्ठतः काचिदेका पदार्हा गौरवशालिनी देवाङ्गना इवाद्भुतरूपधेया असाधारणरूपवती असिम् उत्कटमुग्रं खेटकं तदाख्यमस्त्रञ्च बिभ्रती विद्याधरवल्लभा विद्याधरी एका आगात आयाता च, अत्र आगातेति पाठश्चिन्त्यः, तस्य मध्यमपुरुषस्य बहुवचने साधुत्वेऽपि अत्र प्रयोगासम्भवात् । तत आगाच्चेति पाठः साधीयान् ॥८॥

एकस्तु विद्याधरवंशकेतु-र्विद्याधरस्तामनु चाजगाम ।
बिभ्रद् गदां वैरिबलावलेपप्रध्वंसने विश्वकृतप्रतीतिम् ॥९॥

एक इति—तां विद्याधरीमनुपश्चाच्च विद्याधरवंशे केतुः ध्वजइव विद्याधर श्रेष्ठः विद्याधरः एकः वैरिबलानां शत्रुसैन्यानामवलेपस्य गर्वस्य प्रध्वंसने विश्वस्मिन् कृतप्रतीतिं ख्यातकीर्तिं गदां तदाख्यं शस्त्रं बिभ्रद् आजगाम प्राप्तः ॥९॥

तं स्त्री बभाषे नृपमौलिमौले ! दुष्टं निकृष्टं विसृज त्वमेतम् ।
दुर्न्यायशाखिप्रभवं यथाऽस्य प्रादुष्करोमि प्रसभं फलं च ॥१०॥

तमिति—स्त्री विद्याधरी तं वज्रायुधं बभाषे किमित्याह–नृपमौलिमौले ! नृप शिरोमणे ! त्वम् दुष्टम् निकृष्टमधममेतं शरणायातं विद्याधरं विसृज त्यज, कुत इत्याह–यथा येन प्रकारेण अस्यत्वच्छरणाया तस्यास्य विद्याधरस्य दुर्न्यायः दुराचारः शाखीतरुरिव तत्प्रभवं फलं निग्रहादिरूपं प्रसभं बलात् प्रादुष्करोमि प्रकटी करोमि च ॥१०।

विद्याधरः स्माह च सार्वभौम-माकर्ण्य तामस्य सकर्ण ! वृत्तम् ।
एषाऽप्यहं येन निहन्तुमेतं हन्ताऽऽगमाव द्विषतां निहन्तः ॥११॥

विद्येति—विद्याधरः गदाहस्तः खेचरश्चाहस्म, किमित्याह–द्विषतां निहन्तः ! विद्याधरश्च सार्वभौमं चक्रवर्त्तिनमहस्म, किमित्याह–द्विषतां निहन्तः ! शत्रुघातिन् ! सकर्ण ! श्रवणपटो ! अस्य त्वच्छरणाऽऽयातस्य वृत्तं चरित्रमाकर्ण्यताम्, येन हेतुना यद्वा अस्य त्वच्छरणायातस्य पार्वभौमं जगद्विख्यातं वृत्तं चरित्रम् आकर्ण्यताम्, येन वृत्तेन हेतुना अहमेषा विद्याधर्यपि एतं त्वच्छरणं निहन्तुमागमाव, हन्तेति खेदे इति ॥११॥

अस्यान्तरीपस्य विदेहकेषु श्रीवल्लिकच्छे विजये सुकच्छे ।
वैताढ्यशैले परिमुक्तशुक्लं नाम्ना पुरं शुक्लपुरं समस्ति ॥१२॥

अस्येति—अस्य अन्तरीपस्य द्वीपस्य जम्बूद्वीपस्य विदेहकेषु विदेहेषु श्रीवल्लीकच्छे सुकच्छे तन्नाम्नि विजये वैताढ्यशैले परिमुक्तशुल्कममूल्यम्, निरूपमित्यर्थः नाम्ना शुक्लपुरं पुरं समस्त्यस्ति ॥१२॥

तत्रैव विद्याधरनायकोऽभूत् श्रीशुक्लदत्तः प्रसृतप्रतापः।
प्राणप्रिया तस्य यशोधराख्या देवी सदौचित्ययशोधरार्हा ॥१३॥

तत्रैवेति—तत्र शुक्लपुरे एव प्रसृतप्रतापः विख्याततेजाः श्रीशुक्लदत्तः तन्नामा विद्याधरनायकोऽभूत्, तस्य शुक्लदत्तस्य देवी पट्टराज्ञी सदौचित्या सदोचितप्रवृत्तिमती वा सदौचित्येन सर्वदोचितप्रवृत्त्या यशोधरा यशोबिभ्रती, अर्हा योग्या च प्राणप्रिया भार्या, यशोधराख्या तन्नाम्नी, अभूदिति सम्बध्यते इति ॥१३॥

तन्नन्दनोऽहं पवनप्रभाख्यः सन्मानसानन्दनबुद्धिसीमा।
अभ्यस्तनिःशेषकलाकलाप-स्तारुण्यमासादितवानितश्च ॥१४॥

तदिति—तयोः शुक्लदत्तयशोधरयोः नन्दनः पुत्रः पवनप्रभाख्यः पवनवेगाख्य इत्युक्तमन्यत्र, योऽहम्, सतां मानसस्यानन्दने रञ्जने बुद्धिसीमा निखिलबुद्धिसम्पन्न. अभ्यस्तः उद्गतः कृतः निःशेषः समग्रः कलाकलापो येन तादृशः सकलकलाविद् तारुण्यमासादितवान् प्राप्तवान्, इतश्चेत्यस्याग्रिमश्लोके सम्बन्धः। पक्षान्तरे इत्यर्थः ॥१४॥

तत्रैव शैले जिनसद्मरम्ये-,ऽभूदुत्तरश्रेणिललामभूते।
क्ष्मापः पुरे किन्नरगीतनाम्नि विद्याधरेन्द्रः किल दीप्तिचूलः ॥१५॥

तत्रैवेति—इतश्चेति 'पूर्वश्लोकान् सम्बध्यते,' तत्रैव शैले वैताढ्यशैले जिनानां सद्मभिश्चैत्यैः रम्ये उत्तरश्रेण्याः ललामभूते तिलकरूपे किन्नरगीतिनाम्नि पुरे दीप्तिचूलः तदाख्यः क्ष्मापः नृपः विद्याधरेन्द्रोऽभूत्किल ॥१५॥

विद्याधरी चित्रकचन्द्रकीर्ति-कुक्षिप्रसूतां रतिरम्यरूपाम्।
तस्याङ्गजां पर्यणयं कलाभिः कान्तां सुकान्तामभिधानतोऽपि ॥१६॥

विवेति—विद्याधरीणां चित्रकस्तिलकरूपा या चन्द्रकीर्तिस्तस्याः कुक्षिप्रसूताम् तनयाम् रतिरम्यरूपाम् रतिवत्सुन्दरीणां मनोहररूपां वा कलाभिः कान्तां मनोहारिणीम् अभिधानतः नाम्नाऽपि सुकान्ताम् सुकान्तानाम्नीं तस्य दीप्तिचूलस्याङ्गजां पुत्रीम् पर्यणयमूढवान् ॥१६॥

तत्कुक्षिजाता मम पुत्रिकेयं शीलोज्वला शान्तिमती मतीड्या।
युष्मत्पुरो याऽस्ति निरस्तदोषा दोषाकराऽऽस्या करजेयपद्मा ॥१७॥

तदिति—तस्याः सुकान्तायाः कुक्षेरुदराज्जाता शीलेन कृत्वा उज्ज्वला नाम्ना शाळिमती मत्या कृत्वा ईड्या प्रशस्या दोषा करास्या चन्द्रमुखी कराभ्यां जेयं पद्मं यया सा तादृशी कमलाधिकरम्यकरा निरस्तदोषा निर्मला या भवत्पुरः अस्ति, इयं मम पुत्रिका, अस्तीति सम्बध्यते ॥१७॥

प्रज्ञप्ति संज्ञामपरेद्युरेषाऽभूत् साधयन्ती यतिनैव विद्याम् ।
स्थाने मणीनां मणिसागराद्रौ विद्याधरत्वं कथमन्यथा स्यात् ? ॥१८॥

प्रज्ञप्तीति—अपरेद्युरेषा मत्पुत्री मणीनां स्थाने मणिसागराख्येऽद्रौ पर्वते यतिना मान्त्रिकेण सहैव प्रज्ञप्तिसंज्ञा विद्यां साधयन्ती अभूत्, ननु—तत्साधनस्य किं प्रयोजनमिति चेत्तत्राह—अन्यथा विद्यासिद्ध्यभावे विद्याधरत्वं कथं स्यात्; नैव स्यादित्यर्थः । विद्यानां धरा एव विद्याधरा इति कथ्यन्ते इति भावः ॥१८॥

आलोक्य विद्याधरपाश एष-एतां तथाभूतसमाधिभावाम् ।
व्योमन्युदासाऽऽस तदैव चास्या विद्याप्रसिद्धिः सुकृताऽनुभावात् ॥१९॥

आलोक्येति—एष त्वच्छरणागतः विद्याधरपाशः निन्द्यो विद्याधरः एतां मत्पुत्रीं तथाभूतसमाधिभावाम् समाधिस्थामालोक्य व्योमनि आकाशे उदास उत्क्षिप्तवान्, तदैव च उत्क्षेपसमये एव चास्या मम पुत्र्याः सुकृतानुभावात् पुण्यप्रभावात् विद्याप्रसिद्धिरासाभूत् ॥१९॥

अस्या अयं किञ्चन कान्दिशीको भ्राम्यंस्ततो निर्गमितार्थवच्च ।
आयातवांस्त्वच्चरणारविन्दच्छायां शरण्यावनिपालतात ! ॥२०॥

अस्याः इति—शरण्यानां शरणे साधूनामवनिपालानाम् तात ! पूज्य ! ततः निर्गमितार्थवत् असफलवत् अयं प्रभावशालिन्या अस्या विद्यायाः सकाशात्कान्दीशीकः "कान्दीशीको भयद्रुतः" इत्यमरः । अत एव—भयद्रुतः भ्राम्यंश्च त्वच्चरणारविन्दस्य छायामाश्रयमायातवान् ॥२०॥

प्रज्ञप्तिपूजारचनाय विज्ञ ! प्राग्वत् समादाय बलिं जगाम ।
तस्मिन् महीध्रे तु निजाङ्गजां तां नाद्राक्षमक्षुद्रचरित्रचित्राम् ॥२१॥

प्रज्ञप्तीति—विज्ञ ! अहमिति अध्याहारः, अहम् प्राग्वत् पूर्वदिवसवत् प्रज्ञप्तेस्तदाख्यविद्यायाः पूजारचनाय बलिं नैवेद्यादि समादाय जगाम । तु किन्तु तस्मिन् महीध्रे मणिसागरपर्वते अक्षुद्रेणोदात्तेन चरित्रेण चित्रामनन्यसाधारणत्वादाश्चर्यभूताम् तां निजाङ्गजाम् स्वपुत्रीम् नाद्राक्षम् नदृष्टवान् इति ॥२१॥

आभोगिनीसंगवशादवेत्य वृत्तान्तमेतं सविधं तवाऽऽगाम्।
न्यायोपदेष्टः! तदमुं च मुञ्च दुष्टत्वमेतस्य यथा हरामि ॥२२॥

आभोगीति—न्यायोपदेष्टः! नीतिवादिन्! नृप! एतम् व्योमोत्क्षेपादिकं वृत्तान्तम् आभोगिन्याः कस्याश्चित्स्त्रियाः विद्याया वा सङ्गवशात् अवेत्य ज्ञात्वा तव सविधं समीपमागाम्, तत्तस्मादुक्तात्कारणात् अमुं विद्याधरं मुञ्च यथा एतस्य विद्याधरस्य दुष्टत्वं दौर्जन्यं हरामि, शिक्षादिना खलत्वमपनयामीत्यर्थः ॥२२॥

वज्रायुधश्चक्र्यवधेर्विबुद्ध्य सर्वं तदीयं चरितं बभाण।
विद्याधराधीश्वर पूर्वजन्म प्रेमाऽस्य पुण्यां भवतस्तथाहि ॥२३॥

वज्रेति—वज्रायुधश्चक्री अवधेः अवधिज्ञानोपयोगे न तदीयं शरणागतविद्याधरसम्बन्धि सर्वं चरितं विबुध्य बभाण, किमित्याह–विद्याधराधीश्वर! भवतः पुण्यामस्य पूर्वजन्म प्रेम पूर्वभवत एव प्रेम वर्त्तत इत्यर्थः। तथाहि–इति तद्वृत्तान्तप्रस्तावे, अग्रिमश्लोके नेयः ॥२३॥

जम्बूमहाद्वीपकमध्यवर्ति क्षेत्रोत्तमैरावतमध्यभागे।
आसीत् पुरे विन्ध्यपुरे धरेन्द्रः श्रीविन्ध्यदत्तोऽवधिर्ऋद्धिभाजाम् ॥२४॥

जम्ब्विति—जम्बूनाम्नः महाद्वीपकस्य मध्यवर्त्तिनि क्षेत्रोत्तमे ऐरावतस्य क्षेत्रस्य मध्यभागे यद्वा जम्बूमहाद्वीपकस्य जम्बूसंज्ञद्वीपस्य मध्यवर्तिषु क्षेत्रेषु सप्तक्षेत्रेषूत्तमस्यैरावतस्य क्षेत्रस्य मध्य-भागे विन्ध्यपुरे तदाख्ये पुरे ऋद्धिभाजामवधिः धनीनां सीमारूपः श्रीविन्ध्यदत्तः धरेन्द्रः नृपः आसीत् इति ॥२४॥

तत्प्रेयसीलक्षणलक्षिताङ्गी कृत्येषु दक्षाऽऽस सुलक्षणाख्या।
पुत्रस्तयोस्तर्जितमीनकेतुः स्वाङ्गश्रियाऽभून्नलिनादिकेतुः ॥२५॥

तदिति—तस्य विन्ध्यदत्तस्य प्रेयसी प्रियतमा लक्षणलक्षिताङ्गी सुलक्षणा कृत्येषु–दक्षा निपुणा सुलक्षणाख्या लक्षणानाम्नी आसाऽभूत्। तयोः सुलक्षणाविन्ध्यदत्तयोः पुत्रः स्वाङ्ग-श्रिया स्वाङ्गः शोभया तर्जितः तिरस्कृतो मीनकेतुः कामः येन तादृशः नलिनादिकेतुः नलिनकेतु-रित्यर्थः, तन्नाभूत् ॥२५॥

तस्मिन् पुरेऽजायत धर्ममित्रः सन् सार्थवाहो भुवनैकमित्रम्।
श्रीदत्तया तत्प्रियया प्रसूत–स्तस्याङ्गभूर्दत्त इति प्रसिद्धः ॥२६॥

तस्मिन्निति—तस्मिन् पुरे विन्ध्यपुरे धर्ममित्रः तन्नामासन् सज्जनः भुवनैकमित्रम् सर्व-प्रियः सार्थवाहः अजायत, तस्य धर्ममित्रस्य प्रियया भार्यया श्रीदत्तया तदाख्यया प्रसूतः उत्पा-दितः दत्त इति प्रसिद्धः दत्तनामा तस्या धर्ममित्रस्याङ्गभूः पुत्रः अभूदिति शेषः ॥२६॥

प्राभङ्करी तस्य बभूव जाया निर्धूतमाया कनकाभकाया ।
प्रालेयभूमीधरपुत्रिकाऽसौ, संभाव्यते यद्भगिनीव दृष्टा ॥२७॥

प्रेति—तस्य दत्तस्य जाया भार्या प्राभङ्करी तदाख्या, निर्धूतमाया निष्कपटा, सरलेत्यर्थः, कनकाभः कायः यस्याः सा तादृशी, सुवर्णवर्णा इत्यर्थः । असौ विप्रकृष्टा अदृश्येत्यर्थः, प्रालेय-भूमीधरस्य हिमाचलस्य पुत्रिका पार्वती, दृष्टा, यदि भवति तर्हि यस्याः प्राभङ्कर्याः भगिनी स्व-सेवकसम्भाव्यते, पार्वतीसमा सदृशीत्यर्थः ॥२७॥

अन्येद्युरुद्यानमियाय सार्द्धं वध्वा वसन्तेन विभूषितं सः ।
उच्चैरधिष्ठाय रथं निधीशः सूनुर्यथा चैत्ररथं रथीनः ॥२८॥

अन्येद्युरिति—अन्येद्युः स दत्तः वध्वा प्राभङ्कर्या सार्द्धम् वसन्तेन तदाख्येन ऋतुना विभू-षितमुद्यानम् उच्चैः श्रेष्ठं रथमधिष्ठायारुह्येयाय, कश्चेत्याह—निधीशः सूनुः कुबेरपुत्रः रथिनः रथारुढः सन् चित्ररथं तदुद्यानं यथा इव ॥२८॥

राज्ञः कुमारोऽपि वने तदानीं तत्र प्रयातः सुभगत्वमारः ।
दत्तस्य जायां समवेक्ष्य जज्ञे मारेषुलक्ष्यं विकसद्विकारः ॥२९॥

राज्ञ इति—तदानीं दत्तस्योद्यानप्राप्तिसमये सुभगत्वेन सौन्दर्येण कृत्वा मारः काम इव राज्ञः कुमारः अपि तत्र वने प्रयतः समायातः, दत्तस्य जायां समवेक्ष्य विकसद्विकारः प्राप्तमनः क्षोभः मारेषूणां काम-बाणानां लक्ष्यं वेध्यं जज्ञे कामाधीनो जात इत्यर्थः ॥२९॥

अथ राजकुमारमनोविकल्पमाह—

एषा मृगाक्षी यदि मानुषी स्या-त्तन्मानुषत्वं धिषणाधनानाम् ।
लोकेषु सर्वेषु विवर्णनीयं यन्नेदृशी लोकयुगे श्रुताऽस्ति ॥३०॥

एषा दृश्यमाना मृगाक्षी यदि मानुषी स्यात्तर्हि तस्यामानुषत्वं धिषणा धनानां, बुद्धिमतो सर्वेषु लोकेषु विवर्णनीयं प्रशस्यम् वर्तते इति शेषः । यद्यत ईदृशी अद्भुतरूपशालिनी लोकयुगे मर्त्ये स्वर्गे च श्रुता नास्ति, अत इयमेव स्तुत्येत्यर्थः ॥३०॥

लावण्यसम्बन्धसमन्वितं तत् सौभाग्यमस्या न करोति कस्य ? ।
लोकोत्तरं भोज्यमिवोपनीतं नानारसैरङ्गरुचिं जनस्य ॥३१॥

लावण्येति—अस्या दृश्यमानायाः नार्याः लावण्यसम्बन्धेन समन्विते लावण्यपूर्णे तद-विकलं सौभाग्यं लोकोत्तरं दिव्यम् नानारसैरुपनीतं समन्वितं भोज्यमिव कस्य जनस्य अङ्गरुचिं बलवदिच्छां न करोति ? अपितु सर्वस्य करोत्येवेत्यर्थः ॥३१॥

इत्यादि तद्वर्णनमादधानः सौभाग्यमाणिक्यनिदानभूताम् ।
कन्दर्पसद्माऽरमपाहरत तां दर्पं भजन् स्वौजसि राजसूः सः ॥३२॥

इत्यादीति—इत्यादिप्रकारम् तस्याः प्राभङ्कर्यावर्णनमादधानः कुर्वन् सराजसूः राजकुमारः कन्दर्पसद्मा कमलाधिष्ठितः स्वौजसि निजबले दर्पं भजन् बलवानहमित्येवमभिमानं वहन् सौभाग्यं माणिक्यमिव तस्य निदानभूताम् सौभाग्यकरसदृशीं तां प्राभङ्करीमरं शीघ्रमपाहरत् हृतवान् ॥३२॥

उद्यानलेखासु मनोहरासु गम्भीरभूमीधरकन्दरासु ।
दौगन्दुकामर्त्य इवाविरामं चिक्रीड सार्द्धं स तया कुमारः ॥३३॥

उद्यानेति—स कुमारः दौगन्दुका मर्त्यः तदाख्यदेवः स इव तया प्राभङ्कर्या सार्धम् उद्यानानां लेखासु श्रेणिषु, "श्रेणी लेखास्तु राजय" इत्यमरः । मनोहरासु गम्भीरासु भूमीधरस्य पर्वतस्य कन्दरासु चाविरामम् अनिशम् चिक्रीड ॥३३॥

हा ! प्रेमशाले ! दयिते ! क चासि क्वसीति बाढं विलपन् समन्तात् ।
बभ्राम तद्रूपमवेक्षमाण–स्तादृग् वियोगो न दुनोति कं वा ? ॥३४॥

हेति–हा ! शोकव्यञ्जकसम्बोधनमिदम् , प्रेम्णा शालते इति सा तत्सम्बोधने ! दयिते ! प्रिये ! क्वासि क्वासिचेति बाढं भृशं विलपन् तद्रूपम् प्राभङ्करीस्वरूपम् अवीक्षमाणः अपश्यन् बभ्राम, अवेक्षमाण इति पाठो मयोपेक्षितः, प्रकृते तत्संगस्य सम्भवात् । ननु किमिति तथा बभ्रामेत्याशङ्काह- तादृक् प्राणप्रियाविषयः वियोगः विरहः कं वा न दुनोति ? अपि तु सर्वमेव दुनोति, पीडयतीत्यर्थः ॥३४॥

बभ्राम्यमाणेन जवेन तेन दत्तेन कुत्रापि वने मुनीन्द्रः ।
आलोकि देवैरभिवन्द्यमानः स ज्ञानयोगात् सुमनोऽभिधानः ॥३५॥

बभ्राम्येति–जवेन सवेगं बाभ्रम्यमाणेन भृशं भ्रमता तेन दत्तेन कुत्रापि वने ज्ञानयोगात् कैवल्योत्पादाद्धेतोः देवैः अभिवन्द्यमानः सुमनोऽभिधानः स प्रसिद्धः मुनीन्द्रः आलोकि दृष्टः । ३५॥

दत्तोऽपि तत्पादसरोजयुग्मे भृङ्गायमाणः श्रुतवागऽतापः ।
दानं समाराध्य चिरं स्वमायुः शेषं व्यतीयाय समाधिनिष्ठः ॥३६॥

दत्त इति—दत्तोऽपि तस्य मुनीन्द्रस्य पादसरोजयुग्मे चरणकमलद्वये भृङ्गायमाणः भ्रमरवदाचरन् तच्चरणावुपासमानः इत्यर्थः । श्रुतवाक् सुमनो मुनेर्देशना येन स श्रुतवाक् अत

एव अतापः तापरहितः दानं समाराध्य दानधर्मं कृत्वा चिरं समाधिनिष्ठः शेषं स्वमायुः व्यतीताय व्यतीतवान् ॥३६॥

आकर्णयेतश्च नभः प्रचार ! प्राच्ये विदेहे विजये सुकच्छे ।
वैताढ्यशैलेऽस्ति पुरं सुवर्ण-पूर्वं प्रसिद्धं तिलकं समृद्धम् ॥३७॥

आकेति—आकर्णय शृणु अङ्गभूतं कथान्तरमिति शेषः, तदेवाह—इतश्च, नभः प्रचार ! विद्याधर ! प्राच्ये पूर्वस्मिन् विदेहे सुकच्छे विजये वैताढ्यशैले समृद्धं सुवर्णपूर्वं तिलकं सुवर्ण-तिलकाभिधानं प्रसिद्धं पुरमस्ति ॥३७॥

तत्राभवद् विक्रमनामधेयो विद्याधरेन्द्रः स महेन्द्रपूर्वः ।
यद्विक्रमं वीक्ष्य परं महेन्द्रः स्वराज्यदम्भादभजद् विदेशम् ॥३८॥

तत्रेति—तत्र सुवर्णतिलके पुरे महेन्द्रपूर्वः विक्रमनामधेयः महेन्द्रविक्रमनामा प्रसिद्धः विद्याधरेन्द्रोऽभवत्, यदस्य परमुत्कृष्टं स्वाधिकं वा विक्रमं वीक्ष्य दृष्ट्वा महेन्द्रः इन्द्रः स्वराजस्य स्वर्गाधिपत्वस्य दम्भात् व्याजात् नाहं महीपः किन्तु स्वर्गप इति मया तत्रैव स्थातव्यमितिच्छल-माश्रित्य, वस्तुतस्तु तद्विक्रमतिरस्कृत एव, विदेशे स्वर्गरूपमभजत्, "सतां माने म्लाने मरण-मथवा दूरगमनमि" त्युक्तेरिति भावः ॥३८॥

देवी तदीयाऽनिलवेगिकेति सौन्दर्यलक्ष्म्या रतिरेव जज्ञे ।
तत्पुत्रतामाप स दत्तजीवः संसिद्धविद्योऽजितसेननामा ॥३९॥

देवीति—अनिलवेगिका इति नाम्नी तदीया महेन्द्रविक्रमस्य देवी पट्टराज्ञी सौन्दर्यलक्ष्म्या रतिः कामप्रिया एव जज्ञे जाता, स दत्तजीवः अजितसेननामा संसिद्धविद्यः विद्याधरः तयोः महेन्द्रविक्रमानिलवेगिकयोः पुत्रतामाप प्राप इति ॥३९॥

याते दिवं विन्ध्यपुराधिनाथे श्रीविन्ध्यदत्तेऽथ तदीयपुत्रः ।
राजा नयज्ञो नलिनो बभूव श्रीवासभावाद्नलिनं विधुन्वन् ॥४०॥

यातेति—विन्ध्यपुराधिनाथे श्रीविन्ध्यदत्ते तदाख्ये दिवं याते मृते सति, अथानन्तरम् नयज्ञः नीतिमान् श्रीवासभावात् लक्ष्म्यास्पदत्वात्, नलिनं कमलं विधुन्वन् तिरस्कुर्वन्, कमलस्य लक्ष्म्यास्पदत्वं प्रसिद्धम्, स च तथा अजनि इति कमलं तेन तिरस्कृतमित्यर्थः । नलिनः तदाख्यः राजा बभूव इति ॥४०॥

प्रासादमन्येद्युरुदारचेता देव्या सहाऽऽरोहद रोहदेहाः ।
धाराधरं शृङ्गमतीव तुङ्गं धराधरश्चञ्चलया यथाऽमा ॥४१॥

प्रासादेति—अन्येद्युः, उदारचेताः अरोहद्देहाः निष्पापः नलिनः देव्या सह अतीव तुङ्गमत्युच्चं धराधरं तदाख्यं प्रासादं आरोहत् धाराधरो मेघः चञ्चलया विद्युता अमासह आवृत्त्या अतीव तुङ्गं शृङ्गं यथा इति ॥४१॥

अथ युग्मेनतस्य मेघावलोकनमाह—

व्योम्न्यञ्जनाद्रीनिव लब्धवृद्धीन् सान्द्रान्धकारानिव निर्विपक्षान् ।
शम्पासमालिङ्गितसन्निवेशा-नुद्दामवास्तोष्पति चापभाजः ॥४२॥
अत्यूर्जितं गर्जितमादधानान् स्निग्धाञ्जनश्यामगजानिवाऽयम् ।
आकस्मिकाभ्युन्नतवारिवाहान् दृष्ट्वा महीन्द्रो मुमुदे हृदन्तः ॥४३॥ युग्मम्

अयं नलिनं महीन्द्रः नृपः व्योम्नि आकाशे अञ्जनाद्रीन् अञ्जनपर्वतानिव लब्धवृद्धीन् उन्नतान् निर्विपक्षान् विपक्षः प्रकाशः तद्रहितान् सान्द्रानतिगाढान् अन्धकारानिव, शम्पाभिः विद्युद्भिः समालिङ्गितः सन्निवेश आभोगो येषां तादृशान् विस्फुरणसहितान् उद्दामं गुणरहितं यद्वास्तोष्पतिरिन्द्रस्य चापं तद्भजः इन्द्रधनुर्युक्तान् अत्यूर्जितं गम्भीरंगर्जितमादधानान् गर्जन इत्यर्थः, स्निग्धानि मसृणानि अञ्जनानिव श्यामान् गजानिव स्थितान् आकस्मिकान् अनवसरजातान् अभ्युन्नतान् उपरिवृद्धान् परिवाहान् मेघान् दृष्ट्वा हृदन्तः मनसि मुमुदे जहर्ष । मालोपमालङ्कारः । अत्र लब्धवृद्धीन् इत्यनेनोक्तस्यार्थस्याभ्युन्नतेत्यनेन पुनः कथनात्पुनरुक्तिरिति, न च श्लोकभेदेन एतत्परिहारः, युग्मेन वर्णनादिति ध्येयम् ॥४२॥ ४३॥

तांश्च क्षणादुद्धतमारुतेन वित्रास्यमानानिव तूलपूलान् ।
प्रत्याऽऽसमालोकयति स्म राजा दुर्दैवपाशैरिव नुद्यमानान् ॥४४॥

तानिति—राजा नलिनः, च तादृशस्य वैपरीत्ये, क्षणात् क्षणानन्तरमेव उद्धतेन प्रबलेन मारुतेन पवनेन तूलानां पूलान् राशीनिव वित्रास्यमानान् विभज्यमानान् तान् मेघान् दुर्दैवपाशैः उद्यमानान् आकृष्यमाणानिव प्रत्यासमालोकयति स्म प्रत्यासं प्रतिक्षिप्तमितस्ततो भ्रंशितं यथा स्यात्तथा पश्यति स्म, पवनेन विनष्टान् मेघान् ददर्शेत्यर्थः ॥४४॥

धाराधरांस्तान् क्षणमात्रतोऽपि जातान् विपन्नांश्च विलोक्य सम्यक् ।
दध्यौ ततोऽसौ नलिनः क्षितीशो नीरन्ध्रवैराग्यसमृद्ध एवम् ॥४५॥

धारेति—क्षणमात्रतोऽपि क्षणेनैव तान् धाराधरान् मेघान् जातानुत्पन्नान् विपन्नान् विनष्टांश्च सम्यग् आलोक्य ततस्तदनन्तरम् नीरन्ध्रेण निश्छिद्रेण अपरावर्त्तनीयेन वैराग्येण समृद्धः समन्वितः असौ नलिनः क्षितीशः एवं दध्यौ चिन्तयामास ॥४५॥

एषां यथोत्पत्तिरहो ! विपत्ति-र्जाता क्षणादेव पयोधराणाम् ।
अस्याप्यसारस्य तथाविसारि संसारिवर्गस्य विचारितस्य ॥४६॥

एषामिति—अहो इति सखेदविस्मये, एषां पयोधराणाम् मेघानाम् यथा क्षणादेवोत्पत्तिः विपत्तिः नाशश्च जाता, तथा, विचारितस्य विचारपूर्वकं दृष्टस्य विसारि संसारि वर्गस्य विस्तृत-प्राणिसमूहस्य असारस्यानित्यस्य अस्यास्मदादेरपि, क्षणादुत्पत्तिविपत्ती इत्यर्थः ॥४६॥

एतत् समस्तं क्षणदृष्टनष्टं सौदामनीदामवदीक्ष्यमाणम् ।
ध्यात्वा सुपुत्रे विनिवेश्य राज्यं क्षेमंङ्करान्ते व्रतमाददे सः ॥४७॥

एतदिति—एतदीक्ष्यमाणं सकलं वस्तु सौदामिनीदामवत् विद्युल्लतावत् क्षणं पूर्वं दृष्टं पश्चान्नष्टम् तथा वर्त्तते, ध्यात्वोक्तप्रकारेण विचार्य सुपुत्रे राज्यं विनिवेश्यारोप्य स नलिनः, क्षेमङ्करान्ते तदाख्यमुनिपार्श्वे व्रतम् दीक्षामाददे गृहीतवानिति ॥४७॥

एकावलीमुख्यतपोविधानैर्निर्माय कर्माय पुनर्भवानि ।
संप्राप्य विज्ञानमनन्तभावं प्रापत् पदं नित्यमनन्तसौख्यम् ॥४८॥

एकेति—एकावलीमुख्यानां तपसां विधानैरनुष्ठानैः कृत्वा अपुनर्भवानि पुनर्भवाऽनुत्पादकानि कर्माणि निर्मायोपार्ज्य अनन्तभावं विज्ञानं समस्तवस्तुविषयं ज्ञानं कैवल्यमित्यर्थः । सम्प्राप्य अनन्तसौख्यं नित्यं पदं मोक्षमित्यर्थः, प्रापत् ॥४८॥

प्राभंकरी साऽपि ऋजुस्वभावा श्रीसुव्रतार्यापदपद्मपार्श्वे ।
चान्द्रायणं नाम तपो वितन्द्रा चन्द्रावदाता विदधे विधिज्ञा ॥४९॥

प्राभङ्करीति—सा ऋजुस्वभावा सरलस्वभावा प्राभङ्करी अपि श्री सुव्रतानाम्न्या आर्यायाः साध्व्याः पदपद्मः पार्श्वे विधिज्ञा वितन्द्रा अप्रमादिनी सती चन्द्रावदाता निर्मला चान्द्रायणं नाम तपो विदधे ॥४९॥

सम्यक्त्वसम्बन्धमृतेऽपि साऽपि काले समासादितकालधर्मा ।
साम्याश्रिता तत्तपसो महिम्ना जज्ञे सुता शान्तिमती तवेयम् ॥५०॥

सम्यक्त्वेति—सम्यक्त्वस्य सम्बन्धम् ऋतेऽपि सम्यक्त्वालाभं विनापि काले यथा कालं समासादितकालधर्मा मृता सती सा प्राभङ्करी अपि साम्याश्रिता समतावती तत्तपसः चन्द्रायणव्रतस्य महिम्ना प्रभावेण नाम्ना शान्तिमती इयं तव सुता जज्ञे जाता इति ॥५० ॥

एतेन तेनाऽजितसेनकेन प्राग्जन्महार्दातिविमोहितेन ।
एषाऽप्युदक्षेपि तदत्र किं ते-रोषो मनः शोषणपोषणाय ? ॥५१॥

एतेनेति—एतेन वर्णितप्रकारेण प्राग्जन्मनः हार्देन कृत्वा अति विमोहितेनाऽतिविशिष्टमोहाधीनेन तेन अजितसेनकेन पूर्वभवभर्त्रा एषा तव पुत्र्यपि उदक्षेपि ऊर्ध्वमाकृष्टा, तत्ततो हेतो अत्रविषये ते तव रोषः क्रोधः मनः शोषणस्य पोषणाय वृद्ध्यै किम्, अत्र रोषेण मनस्तापातिरिक्तं नान्यत्किमपि फलम्, अस्य वस्तुतोऽनपराधित्वादिति भावः ॥५१॥

तस्मात् कषायप्रचयाऽनुबन्धमेतं परित्यज्य परं दुरन्तम् ।
अन्योऽन्यमेव क्षमयध्वऽङ्ग ! यस्माद् भवस्यैव निदानमेषः ॥५२॥

तस्मादिति—तस्माद्रोषस्य मनस्तापमात्रफलकत्वाद्धेतो कषायप्रचयस्य काषायसमूहस्यानुबन्धो यस्मादेवं विधं परमुत्कृष्टं दुरन्तम् दुःखेनान्तो यस्य तादृशं यद्वा काषायसमूहस्य अनुबन्धं परम्परारूपं परमत्यन्तम् दुरन्तं दुष्परिणाममेतं रोषं परित्यज्य अन्योन्यं परस्परमेव, नत्वेकएव, क्षमयध्वम्, अङ्ग ! यस्मादेष रोषः भवस्यैव निदानं बीजम्, क्रोधो हि भवान्तरमनुबध्नाति इत्यर्थः ॥५२॥

इत्युक्तिसंबोधवशात् सुसत्त्वास्ते त्यक्तवैराः क्षमयाम्बभूवुः ।
अन्योन्यमासन्नमहोदयाशा नैवोपदेशा महतां मुधा स्युः ॥५३॥

इत्युक्तीति—इतीत्थमुक्त्या कृत्वा सम्बोधवशात् ज्ञानभावाद्धेतोः सुसत्त्वाः भव्यात्मानस्ते विद्याधराः त्यक्तवैराः सन्तः आसन्ना समीपवर्त्तिनी प्राप्तकालेव महोदयस्य महाभाग्यस्य आशा-येषां ते तादृशाः अचिरभविष्यच्छुभाः अन्योन्यम् क्षमयांबभूवुः तद्वैधर्म्येण समर्थयति तत्र हेतुमाह—महतां महापुरुषाणां उपदेशाः मुधा निष्फलानैव स्युः ॥५३॥

प्रोवाच भूपोऽपि स सार्वभौमः क्षेमंकरार्हत्सविधेऽचिरेण ।
दीक्षा त्रयाणामपि वो भवित्री दुष्कर्मकक्षोषणजातवेदाः ॥५४॥

प्रोवाचेति—सार्वभौमेः षट्खण्डभर्त्तो चक्री सभूपः वज्रायुधोऽपि प्रोवाच; किमित्याह—वो युष्माकं त्रयाणामपि क्षेमङ्करार्हत्सविधे अचिरेण शीघ्रमेव दुष्कर्माण्येव कक्षाणि शुष्कतृणपुञ्जानि, यद्वा दुष्कर्मैव कक्षं वनं "कक्षो विरुधि दोर्मूले कच्छे शुष्कतृणे वने" इति हैमः । तस्योषणे दाहे जातवेदा अग्निरूपा दीक्षा भवित्री भाविनी, शीघ्रमेव भवन्तस्त्रयोऽपि दीक्षां ग्रहीष्यन्तीत्यर्थः ॥५४॥

रत्नावलिं नाम तपो विधाय शान्ताशया शान्तिमती ततोऽसौ ।
प्राणान् विहायाऽनशनेन लब्धे ज्ञानेन्द्ररूपत्वमुदीर्णभोगा ॥५५॥

रत्नेति—असौ नाम्ना शान्तिमती तव पुत्री रत्नावली नाम तपो विधाय शान्ताशया निष्कषाया सती अनशनेन कृत्वा प्राणान् विहाय मृत्वा लब्ध्वा ईशानेन्द्रत्वं लब्धा प्राप्ता सती यथा-

स्यात्तथा उदीर्णः उद्गंगतो भोगस्सुखानुभवो यस्यास्तादृशी भवितेति शेषः, ईशानेन्द्रो भविष्यतीति भावः,' यद्वा उदीर्णभोगोत्कटसौख्यवती, भवितेति शेष ॥५५॥

मत्वाऽथ विज्ञानवशात् तदैव स्वं केवलज्ञानविभासिनोऽर्चाम् ।
मानाऽनुरूपं महिमानमादावागत्य निर्मास्यति चाङ्गपूजाम् ॥५६॥

मत्वेति—अथ तदा इन्द्रत्वे एव विज्ञानवशात् अवधिज्ञानवशात् स्वं स्वसम्बन्धिनं मत्वा आगत्य केवलज्ञानविभासिनः तव मानानुरूपं यथा मानं महिमानं स्तुत्यादि अङ्गपूजामर्चाम् स्वसुनोर्वा पूजाम्, अग्रे तथैव वर्णनादिति ध्येयम् अङ्गपूजारूपामर्चाञ्च निर्मास्यति, यद्वा,—स्वं पूर्वभवसम्बन्धिनं स्वात्मानं स्वसम्बन्धिनञ्च मत्वा ज्ञात्वाऽऽदावागत्य केवलज्ञानविभासिनस्तव मानानुरूपं मानानुकूलं महिमानं केवलज्ञानमहोत्सवं अङ्गपूजामर्चाम् पूर्वभवीयस्वतनुपूजारूपामर्चाञ्च निर्मास्यति इति ॥५६॥

ईशानदेवाधिपतिस्ततश्च च्युत्वा समासाद्यपरं नरत्वम् ।
सर्वार्थसाक्षात्कृतिसंविदं च कैवल्यमाप्स्यत्यपि स क्रमेण ॥५७॥

ईशानेति—ततः ईशानदेवलोकात् ईशानदेवाधिपतिस्तव पुत्रीजीवः च्युत्वा परमुत्कृष्टं नरत्वं मनुष्यभवं समासाद्य सक्रमेण सर्वार्थस्य साक्षात्कारि संविदं ज्ञानम् अखिलविषयावभासकं कैवल्यमाप्स्यत्यपि चेति ॥५७॥

कालत्रयोद्बोधविबोधशुद्धं वज्रायुधस्योक्तमिदं निशम्य ।
सर्वेऽपि ते सभ्यजनैः सहैव विस्मेरतामापुरपेतदर्पाः ॥५८॥

कालेति—कालत्रयोद्बोधेन कालत्रयविकाशकारिणा, यद्वा कालत्रयोद्बोधः कालत्रयदीपकज्ञानं तस्माद् विबोधेनात्मविकाशज्ञानेन संसारविचित्रस्वरूपप्रकाशकं, वा विबोधेन विज्ञानेन शुद्धम् वज्रायुधस्येदमुक्तं वचनं निशम्य सभ्यजनैः सभास्थैः जनैः सहैव सर्वेऽपि ते विद्याधराः अपेतदर्पाः नष्टाहम्भावाः सन्तः विस्मेरतां प्रफुल्लमुखत्वमापुरिति ॥५८॥

तेऽपि त्रयोऽपि प्रणिपत्य भक्त्या तं सार्वभौमं बहुधा प्रशस्य ।
आपृच्छ्य गत्वा जगृहुर्जिनेन्द्रः क्षेमङ्करान्ते व्रतमेकचित्ताः ॥५९॥

तेऽपीति—ते त्रयोऽपि विद्याधराः सार्वभौमं चक्रिणं तम् वज्रायुधम् भक्त्या प्रणिपत्य प्रणम्य बहुधा नैकप्रकारैः प्रशस्य स्तुत्वा आपृच्छ्य सभाजयित्वा एकचित्ताः दीक्षाऽऽदानैकलीनाः, सन्तः जिनेन्द्रस्य क्षेमङ्करस्यान्ते समीपे गत्वा व्रतं जगृहुः ॥५९॥

शाणासमुत्तीर्णकृपाणधारा देश्यं व्रतं ते चिरमाचरंश्च ।
मृत्वा क्रमाच्छान्तिमती शुभा ते-ष्वीशानदेवाऽधिपतित्वमाप ॥६०॥

शाणेति— ते त्रयोऽपि शाणायाः तीक्ष्णताकरणसाधनविशेषात्समुत्तीर्णस्य तेजयित्वा पृथक्कृतस्यातितीक्ष्णस्य कृपाणस्य धारादेश्यं धारेवातिदुःखसह्यं अति गहनं व्रतचिरमाचरणञ्च तेषु त्रिषु शुभा शान्तिमती क्रमान्मृत्वा ईशानदेवाऽधिपतित्वमाप प्राप इति ॥६०॥

विद्याधरर्षी च बभूवतुस्ता-वध्वंस विज्ञान-युजौ तदैव ।
ईशानजिष्णुः सदिवः समेत्य तज्ज्ञानपूजां स्वतनोश्च चक्रे ॥६१॥

विद्येति— विद्याधरर्षी मुनिरूपौ तौ पवनप्रभाजितसेनौ विद्याधरौ च तदैव अध्वंसं ध्वंसरहितं यद् विज्ञानं ध्वंसाऽप्रतियोगिज्ञानम् तद्युजौ बभूवतुः । केवलिनौ जातावित्यर्थः । स ईशानजिष्णुरीशानेन्द्रः दिवः स्वर्गात्समेत्य तज्ज्ञानपूजां तदीयकेवलज्ञानमहोत्सवं स्वतनोः मृतकलेवररूपस्य स्वाङ्गस्य च पूजां चक्रे, तदुक्तं—केवलज्ञानमहिमां तयोः कृत्वाऽर्चनं तथा स्वस्याङ्गस्य निजं स्थानमीशानेन्द्रो गमिष्यति इति ॥६१॥

च्युत्वा द्वितीयत्रिदिवात् क्रमेण सम्प्राप्य मर्त्यत्वमनुत्तमं सः ।
सिद्धस्य लक्ष्मीमवहद् महात्मा तस्मिन् भवे तौ तु मुनी विमुक्तौ ॥६२॥

च्युत्वेति—स शान्तिमतीजीवः द्वितीया त्रिदिवादीशानकल्पाच्च्युत्वा क्रमेणानुत्तमं मर्त्यत्वं मनुष्यभवं सम्प्राप्य महात्मा सन् सिद्धस्य लक्ष्मीमवहत् सिद्धोऽभूदित्यर्थः । तौ मुनी विद्याधरर्षीतु तस्मिन्नेव विद्याधरभव एव विमुक्तौ मोक्षं गतौ ॥६२॥

सूनौ सहस्रायुधनाम्नि चक्री क्ष्माभारमारोप्य सुखं बभाज ।
प्राकाम्यमव्याहतमङ्गजानां पुण्यात्मनां पुण्यवशेन यस्मात् ॥६३॥

सूनाविति—चक्री वज्रायुधः सहस्रायुधनाम्नि सूनौ पुत्रे क्ष्माभारम् राज्याधिकारमारोप्य दत्त्वा सुखं बभाज, भेजे, यस्मात्पुण्यवशेन पुण्यप्रभावात् पुण्यात्मनाम् अङ्गजानाम् प्राणिनां प्राकाम्यमिच्छापूर्त्तिरव्याहतमविघ्नम् भवतीति शेषः । एवं च तस्य सुखित्वमुचितमेवेति भावः इति ॥६३॥

श्रीमत्सहस्रायुधवल्लभाऽथ सुप्ता रजन्यां जयनाऽभिधाना ।
स्वप्ने समालोकत हेमशक्तिं कान्त्या समुद्द्योतित खप्रदेशाम् ॥६४॥

श्रीमदिति—अथ जयनाऽभिधाना श्रीमतः सहस्रायुधस्य वल्लभा प्रिया रजन्यां रात्रौ सुप्ता सती स्वप्ने कान्त्या प्रभया कृत्वा समुद्योतितः प्रकाशितः खप्रदेशआकाशविभागो यया तां हेमशक्तिं समालोकतेति ॥६४॥

स्वप्नानुभावेन निवेदितेन भर्त्रा सहस्रायुधवल्लभा सा ।
गर्भं बभार प्रवरं तदैव स्वप्नात् सुपुण्यात् किमु दुर्घटं स्यात् ? ॥६५॥

स्वप्नेति—भर्त्रा सहस्रायुधेन निवेदितेन कथितेन स्वप्नानुभावेन स्वप्नफलेन सा सहस्रायुध-वल्लभा जयना तदैव प्रवरं गर्भं बभार, तत्कालगर्भधारणे हेतुमाह—सुपुण्यात् स्वप्नात् शुभ-स्वप्नात् किमु किं दुर्लभं स्यात् ? न किमपीत्यर्थः, शुभस्वप्नः सफल एव भवतीति भावः ॥६५॥

स्फूर्जद्गुणश्रेणि विभासमानं विश्वम्भरानायकभूषणार्हम् ।
मुक्ताफलं शुक्तिरिवाऽथ काले साऽजीजनत् सूनुमनूनरूपम् ॥६६॥

स्फूर्जदिति—अथ गर्भधारणानन्तरं सा जयना काले उचिते काले शुक्तिः मुक्ताफलमिव स्फूर्जन्त्या उत्कृष्टया गुणश्रेण्या कान्त्यादिरूपया विभासमानम् विश्वम्भरायाः पृथिव्या नाय-कानां राज्ञाम् भूषणार्हम् मण्डनयोग्यमनूनरूपमतिसुन्दरं सूनुमजीजनत् सुषुवे ॥६६॥

तस्याऽऽदधे नाम च हेमशक्ति स्वप्नाऽनुसारेण पितामहेन ।
ख्यातेन राज्ञामपि हेमशक्तिरित्यार्यभूमीन्द्रपितामहेन ॥६७॥

तस्येति—तस्य जातपुत्रस्य हेमशक्तिस्वप्नानुसारेण राज्ञामपि राजस्वपि आर्याणां वा ख्यातेन आर्येण आर्याणां वा भूमीन्द्राणां वयो वृद्धत्वात्पितामहस्वरूपेण पितामहेन वज्रायुधेन हेमशक्तिरिति नामाऽऽदधे च ॥६७॥

उत्क्रान्तबाल्यो लिपिचक्रविद्या पारङ्गमो यौवनसङ्गचङ्गः ।
कन्यां महामन्दिरपत्तनेश श्रीमेरुमालिक्षितिपालकस्य ॥६८॥

मल्लीप्रिया कुक्षिभवां भवानीरूपामुपायंस्त स शस्तबुद्धिः ।
विद्यागृहं यौवनशालिकायां नाम्नाऽङ्गकान्त्याऽपि च हेममालाम् ॥६९॥

युग्मम्—उदिति—उत्क्रान्तबाल्यः व्यतीतं बाल्यावस्थः लिपिचक्रस्य लेख्यरूपायाः विद्यायाः पारङ्गमः अधीतसर्वशास्त्रः यौवनस्य सङ्गेन चङ्गः सुन्दरः शस्तबुद्धिः स हेमशक्तिः महामन्दिरस्य तदाख्यस्य पत्तनस्येशस्य श्रीमेरुमालिनस्तदाख्यक्षितिपालकस्य मल्लिमल्ला इति मूलपाठः । पत्न्याः प्रियायाः कुक्षिभवां गर्भजाताम् भवानीरूपां पार्वतीतुल्याम् यौवनशालिकायां तारुण्य-रूपशालायां विद्यागृहम् विद्याशालारूपां युवती विद्यावतीञ्चेत्यर्थः, नाम्ना अङ्गकान्त्याऽपि च हेममालातुल्यकान्ति हेममालानाम्नीमुपायंस्तः ॥६९॥

किञ्चाऽजनिष्टाऽत्र मशक्यसार—द्रङ्गे महेन्द्रोऽजितसेननामा ।
तस्य प्रियाऽभूत् प्रियसेनिकाख्या पुत्री तयोरास वसन्तसेना ॥७०॥

किन्वेति—किन्वेत्यङ्गभूतकथान्तरप्रस्तावे, अत्र काले मशक्यसारे तन्नाम्नि द्रङ्गे पत्तने अजितसेननामा महेन्द्र अजनिष्टाभूत्, तस्याजितसेनस्य प्रियसेनिकाख्या प्रियाऽभूत्, तयोः प्रियसेनिकाजितसेनयोः वसन्तसेना तदाख्या पुत्री आसाऽभूत् इति ॥७०॥

तां यौवनोद्‌भेदविशेषकान्तां तातः समीक्ष्य प्रजिघाय मङ्क्षु ।
श्री हेमशक्तेरनुरूपरूपां सौभाग्यभाग्यैकपतिंवरां च ॥७१॥

तामिति—तां वसन्तसेनां यौवनोद्भवेन तारुण्यविभावेन कृत्वा विशेषकान्तां सातिशयरमणीयां समीक्ष्य तातः पिताऽजितसेनः हेमशक्तेः अनुरूपरूपां योग्यरूपवतीं सौभाग्यां भाग्यं यस्य तादृशैकपतिं वराम् मङ्क्षु सद्यः प्रजिघाय प्रेषयत्, हेमशक्तेः समीपे इत्यर्थयात्वाल्लभ्यते ॥७१॥

तां पर्यणैषीज्जनकाऽनुमत्या श्रीमान् सहस्रायुधराजसूनुः ।
एतद्विवाहाद् विततान रोषं तस्याः पितुर्जामिसुतो दुरात्मा ॥७२॥

तामिति—श्रीमान् सहस्रायुधस्य राज्ञः सूनुः हेमशक्तिः जनकस्य नुमत्या सम्मत्या तां वसन्तसेनां पर्यणैषीदुपायंस्त, एतद्विवाहात् कारणात् दुरात्मा दुष्टधीः तस्याः वसन्तसेनायाः पितुर्जामिसुतः भागिनीसुतः वसन्तसेनायाः पैतृष्वसेयः रोषं विततान क्रुद्धोऽभूदित्यर्थः ॥७२॥

आराममन्येद्युरधिष्ठितेन क्रीडा विचित्रा अनुतिष्ठता ना ।
उत्पातपातौ विदधत् व्यलोकि कश्चित् सहस्रायुधनन्दनेन ॥७३॥

आराममिति—अन्येद्युः आराममुद्यानमधिष्ठितेन विचित्राः नानाविधाः। क्रीडाः अनुष्ठिता कुर्वता सहस्रायुधनन्दनेन हेमशक्तिना उत्पातपातौ पातोत्पातौ, अधः पतनमुत्पतनञ्चेत्यर्थः विदधत् कुर्वत्कश्चिन्नापुरुषः व्यलोकि दृष्टः ॥७३॥

प्रोचे कुमारस्तमहो ! किमेव,-मुत्पत्य शक्तो निपतस्यऽकस्मात् ! ।
त्वं भद्रपक्षीव विलूनपक्षो नाऽगोप्यमेतद्यदि मे तदाऽऽत्थ ॥७४॥

प्रोचे इति—तं पुरुषं कुमारः प्रोचे, किमित्याह—अहो शक्तः समर्थः बलवानपि, दुर्बलस्यतु शक्त्यभावात्कदाचिदेवं सम्भाव्यतेऽपि इति भावः। किमेवमुत्पत्य अकस्मादकारणं निपतसि च, त्वम्, कइवेत्यत्याह—विलूनपक्षः पक्षहीनः भद्रपक्षीव, यदि एतत् पातोत्पातकारणमगोप्यम् गोप्यं च तदा मे मह्यमात्थ कथय इति ॥७४॥

प्रत्याह ना सोऽपि भवादृशानां नाख्येयमप्यस्ति किमङ्ग ! धीमन ! ।
युष्मादृशः सन्ति परेङ्गितज्ञा-स्तेष्वेव गोप्यं जडतां व्यनक्ति ॥७५॥

प्रत्याहेति--सोऽपिना पुरुषः प्रत्याह प्रतिवचनमदात्, किमित्याह-अङ्ग ! धीमन्! भवादृशानामपि किम् आख्येयं कथनीयं नास्ति ? अपितु सर्वमेव कथनीयमस्तीत्यर्थः, ननु मम किं वैशिष्ट्यं, यदेवं कथयसीति चेत्याह-युष्मादृशः परेङ्गितज्ञाः पराशयज्ञाः सन्ति, अतः तेषु परेङ्गितज्ञेष्वेव गोप्यम् जडतामल्पबुद्धित्वे व्यनक्ति प्रकटयति इङ्गितेन तदवतेः गोप्तत्वासम्भवा-त्तत्कथनस्यैव वरत्वादित्यर्थः ॥७५॥

वैताढ्यशैलात् क्वचनाऽपि कार्ये विद्याधरोऽहं पुरतोऽपि गत्वा।
व्यावर्त्तमानोऽतिकुतूहलेनो-द्यानेऽत्र तस्थौ क्षणमद्भुतेन ॥७६॥

वैताढ्येति—कचनापि कस्मिंश्चिदपि कार्ये, निमित्त सप्तमी, वैताढ्यशैलात्परतोऽग्रतोऽपि गत्वा व्यावर्तमानोऽहं विद्याधरः अद्भुते नाभूतपूर्वेणाति कुतूहलेनात्रोद्याने क्षणं तस्थावस्थाम् ॥७६॥

एतस्य सौन्दर्यमदृष्टपूर्वं दृष्ट्वा निवृत्तोऽहमितोऽपि यावत्।
तावद् ममाप्यम्बरयानसिद्ध-विद्योपदं विस्मृतमात्मपापात् ॥७७॥

एतस्येति--एतस्योद्यानस्यादृष्टपूर्वं सौन्दर्यं दृष्ट्वा यावदहमित उद्यानान्निवृत्तः, तावत् मम अम्बरयाने आकाशगमने सिद्धविद्यायाः आकाशगामिन्या सिद्धविद्याया एकं पदं यद्वा अम्बरयानस्याकाशगमनस्य सिद्धं विद्यापदं आत्मपापात् स्वदोषात् विस्मृतमिति ॥७७॥

उत्पातपातद्वितयेन तेन प्रद्युम्नमूर्त्ते ! निबिडं विडम्ब्ये।
एतत् तदुक्तं विनिशम्य सम्यग् भूयः कुमारोऽभिदधे तमेवम् ॥७८॥

उत्पातेति--प्रद्युम्नमूर्त्ते ! कामाकृते ! तेन कारणेन उत्पात उत्प्लवनं पातोऽधः पातश्च तयोर्द्वितयेन निबिडमत्यन्तं विडम्ब्ये सीदामि, तदुक्तमेतद्वचनं सम्यग्विनिशम्य तं विद्याधरं प्रति कुमारः हेमशक्तिः भूयः पुनरेवं वक्ष्यमाणप्रकारमभिदधे ऊचे ॥७८॥

विद्याधरेयं यदि नाम विद्या ऽन्यस्याग्रतस्ते पठनोचिताऽस्ति।
तत् पठ्यतां शाठ्यमपास्य मेऽग्र इत्युक्त एषोऽपि तमभ्यधत्त ॥७९॥

विद्येति—विद्याधर ! यदि नाम इयं व्योमगामिनी विद्या अन्यस्याग्रतः ते तव पठनोचि-ताऽस्ति तत्तर्हि शाठ्यं छलमपास्य निर्व्याजमित्यर्थ. । मे ममाग्रे पठ्यताम् इतीत्थमुक्तः एष विद्याधरोऽपि तं प्रत्यभ्यधत्तेति ॥७९॥

विद्या न विद्याकर ! पठ्यतेऽसौ पापात्मनामग्रत एव पुंसाम्।
युष्मादृशानां तु नरोत्तमानां देया ततः किं नु निवेद्यते न ? ॥८०॥

विद्येति—विद्याकर ! विद्वन् असौ विद्या पापात्मानं तु देया, सा विद्या वर्त्तते, ततः किं नु कुतो हेतोः न निवेद्यते पठ्यते ? अपि त्ववश्यं पठ्यते योहि दानार्हः तदग्रे चेन्न विद्या पठ्यते तर्हि तस्याः क्व उपयोगोऽन्य भवितुमर्हति इति साकूतमभिप्रायः ॥८०॥

तां विस्मृतार्च्यैकपदामथास्मै विद्याधरः स प्रयतो बभाषे ।
भूमीन्द्रपुत्रोऽपि पदानुसारि बुद्ध्या पदं विस्मृत माविरासात् ॥८१॥

तमिति—अथानन्तरं स विद्याधरः विस्मृतमर्च्यम् आवश्यकमेकं पदं यस्यास्तादृशी तां विद्यां प्रयतः सावधानोऽस्मै कुमाराय बभाषे, भूमीन्द्रपुत्रः हेमशक्तिरपि पदानुसारि बुद्ध्या श्रुतपदानुसारेणाश्रुतपदस्मारिकप्रतिभया विस्मृतं पदमाविरासादाविश्चकार इति ॥८१॥

सर्वामसौ प्राप्य ततोऽतिहृद्यां विद्यां तु विद्याधर आदरेण ।
तामेव तस्मै वितताार दक्षो यद्दक्षिणामर्हति नाऽपरां सः ॥८२॥

सर्वामिति—असौ विद्याधरः ततस्तदनन्तरमतिहृद्यामतिप्रियां विद्यां सर्वां समग्रामेव प्राप्यावगत्यादरेण आदरपूर्वकम् तस्मै हेमशक्तये तामेव खेचरविद्याम् वितरम् ददौ, यतः स दक्षः कुशलो हेमशक्तिरपरां द्रव्यात्मिकां दक्षिणां क्रियापुरस्कारं नार्हति स्वयमेव सर्वतः पूर्णत्वादिति भावः इति ॥८२॥

विद्याधरे जग्मुषि तत्र नप्ता वज्रायुधस्यापि यथाविधानम् ।
विद्यामनिन्द्यामथ साधयित्वा विद्याधराग्रेसरतां बभार ॥८३॥

विद्याधरे इति—विद्याधरे जग्मुषि गते सति वज्रायुधस्य नप्ता पौत्रोऽपि तत्रोद्याने अथानन्तरं यथाविधानम् विद्याधरप्रदर्शितविधिपूर्वकमनिन्द्यां प्रशस्यां विद्यां आकाशगामिनीं विद्यां साधयित्वा विद्याधराग्रेसरतां बभार प्राप ॥८३॥

रुष्टस्तदा सोऽपि वसन्तसेना वीजिस्वसुः सूनुर्ऋते निमित्तम् ।
तस्मिन्कुमारे किल हेमशक्तावेणो मृगाधीश इवाभिमानात् ॥८४॥

तस्यापकारं करणीयरूपं निर्मातुमेत्राऽप्रभुरात्तलज्जः ।
त्यक्ताशनो मृत्युमवाप्य देवो दिव्यर्द्धिरासीद्धिमचूलनामा ॥८५॥ युग्मम्

रुष्टइति—तदा हेमशक्तेः तादृग प्रभावत्वे सति सः वसन्तसेनायाः वीजिन. पितुः स्वसुः सूनुः वसन्तसेनापैतृष्वस्रेय. निमित्तमृते निष्कारणं तस्मिन् कुमारे हेमशक्तौ, एणो मृगः मृगाधीशे सिंहे इव अभिमानात् दुर्बुद्धे रुष्टः तस्य कुमारस्य करणीयरूपं कर्त्तव्यमपकारं निर्मातुं कर्तुमप्रभुरसमर्थः अतएव आत्तलज्जः लज्जितः सन् त्यक्ताशनः अनशनेन मृत्युमवाप्य हिमचूलनामा दिव्यर्धिः अलौकिकशक्तिमान् देव आसीद् बभूव ॥८४–८५॥

ताभ्यां प्रियाभ्यां सममासमुद्रं क्ष्माचक्रवालं विचरन् समस्तम् ।
संसिद्धविद्यो भ्रमति स्म सोऽपि, श्रीमत्सहस्रायुधराजसूनुः ॥८६॥

ताभ्यामिति—स सहस्रायुधराजसूनुः हेमशक्तिरपि संसिद्धविद्यः विद्यां साधयित्वेत्यर्थः, ताभ्यां प्रियाभ्यां हेममालावसन्तसेनाभ्यां समम् आसमुद्रं समुद्रपर्यन्तमखिलं क्ष्माचक्रवालं पृथिवीमण्डलं विचरन् विहरन् भ्रमतिस्म, मनोरञ्जनार्थमिति शेषः इतिः ॥८६॥

यातोऽपरेद्युर्हिमवन्महीध्रे दृष्ट्वाऽभ्यवन्दिष्ट मुनिं निरीहम् ।
धर्मं दिशन्तं विपुलादिमत्याख्यंचारणं पापनिवारणं सः ॥८७॥

यात इति—अपरेद्युः स हेमशक्तिः हिमवन्महीध्रे हिमवत् पर्वते यातः गतः पापनिवारणं धर्मं दिशन्तमुपदिशन्तं निरीहं प्रशान्तं विपुलादिमत्याख्यं विपुलमतिनामानं चारणं मुनिं दृष्ट्वा अभ्यवन्दिष्ठ ननाम ॥८७॥

तस्मात् समासाद्य च धर्मलाभं संसारकक्षोपदवानलाभम् ।
सार्धं प्रियाभ्यां सुकृतोपदेशं शुश्राव स श्रावकवर्गनागः ॥८८॥

तस्मादिति—तस्माच्चारणर्षेः सकाशात् धर्मलाभमाशिषं समासाद्य च श्रावकवर्गनागः श्रावकश्रेष्ठः स हेमशक्तिः प्रियाभ्यां द्वाभ्यां सार्धं संसाररूपस्य कक्षस्य तृणपुञ्जस्य उपदावानलाभं दावानलतुल्यं सुकृतोपदेशं धर्मदेशनां शुश्राव श्रुतवानिति ॥८८॥

बुद्धः प्रबुद्धः स च हेमशक्तिर्देवीद्वयं तत् प्रविहाय तादृक् ।
तादृग्महर्द्धिं च तदंह्रिमूले चारित्रमादत्त विरक्तचित्तः ॥८९॥

बुद्ध इति—स हेमशक्तिश्च बुद्धः ज्ञातधर्मः अत एव प्रबुद्धं प्रबोधं प्राप्तः तादृक् विलक्षणं तद्देवीद्वयं प्रियाद्वयं प्रविहाय तादृग् महर्द्धिम् महासम्पदं च प्रविहाय विरक्तचित्तः सन् तस्य चारणर्षेः अंह्रिमूले चरणोपान्ते चारित्रे दीक्षामादत्त स्वीचकार इति ॥८९॥

सत्यः स्वपत्युः स्थितिमाचरन्ती–, त्येवं स्वचित्ते परिभाव्य दीक्षा ।
तत्प्रेयसीभ्यामपि तन्मुनीन्द्रा–, भिख्यार्यिकायाः सविधेऽभ्युपेता ॥९०॥

सत्य इति—तस्य हेमशक्तेः प्रेयसीभ्यां द्वाभ्यामपि सत्यः प्रतिव्रताः स्त्रियः स्वपत्यस्थितिमवस्थामाचरन्ति स्वीकुर्वन्ति यतः पत्यनुयायिन्यः स्त्रिय इत्येवं स्वचित्ते परिभाव्य विचार्य तन्मुनीन्द्राभिख्यया आर्यिकायाः विपुलामतिनाम्न्याः साध्व्याः सविधे समीपे दीक्षाऽभ्युपेता गृहीता इति ॥९०॥

अन्येद्युराचारयुतो धरित्र्यां कुर्वन् विहारं मुनिर्हेमशक्तिः ।
भेजे गिरौ सिद्धिपदे मुदैक-रात्रिप्रमाणां प्रतिमां क्षमावान् ॥९१॥

अन्येद्युरिति—मुनिः हेमशक्तिः क्षमावान् आचारयुतो धरित्र्यां पृथिव्यां विहारं कुर्वन् सिद्धिपदे तदाख्ये गिरौ पर्वते एकरात्रिप्रमाणां प्रतिमां कायोत्सर्गमुदा भेजे स्वीकृतः स्वीकृतवान् ॥९१॥

एतं समालोक्य समाधिभाजं देवाधमः पूर्वभवद्विषन् सः ।
आराद्रुपद्रोतुमढौकताऽरं पद्माकरं वाजिरिपुर्यथैव ॥९२॥

एतमिति—एतं हेमशक्तिं समाधिभाजं प्रतिमास्थितं समालोक्य पूर्वभवद्विषन् पूर्वजन्मशत्रुः सदेवाधमः हिमचूलः आरात् समीपे एव "महिषोवाह–द्विषत् कासार सैरिभा." इत्यमरः ! वाजिरिपुः महिषः पद्माकरं यथा उपद्रोतुमरं शीघ्रम् अढौकत प्रवर्त्तिष्ट ॥९२॥

तत्राऽऽगता व्योमचराः सलीलं दृष्ट्वा महात्मानमुपद्रवन्तम् ।
शक्त्या दुरात्मानमनीनशंस्तं नैदाघदाघं जलदा इवाऽऽशु ॥९३॥

तत्रेति—तत्र सिद्धिपदे पर्वते सलीले लीलया आगता व्योमचराः विद्याधराः महात्मानं हेमशक्तिं दृष्ट्वा उपद्रवन्तं तं दुरात्मानं हिमचूलं शक्त्या स्वबलेन जलदा मेघाः नैदाघदाघं ग्रीष्मघर्ममिवाशु अनीनशन् नाशयन्ति स्म ॥९३॥

प्रत्यूषकाले परिपूर्णयित्वा स्वाभिग्रहं कुग्रहनिग्रहेण ।
तां राजधानीं स्वपितामहस्य धन्यो ययौ सोऽपि विहारवृत्त्या ॥९४॥

प्रत्यूषेति—धन्यः स हेमशक्तिरपि कुग्रहस्य कुचित्तवृत्तेः निग्रहेण निरोधेन कृत्वा स्वाभिग्रहं स्वनियमं प्रत्यूषकाले प्रभाते परिपूर्णयित्वा विहारवृत्त्या विहारं कुर्वन् स्वपिता महस्य वज्रायुधस्य तां राजधानीं प्रति ययौ जगाम इति ॥९४॥

तस्यां वने शूर निपातसंज्ञे वासं मुनिः पूर्ववदाऽऽचचार ।
बाधाचिकीस्तत्र सुराधमोऽपि भूयः समागादविमुक्तवैरः ॥९५॥

तस्यामिति—तस्यां मणिसञ्चयाख्यायां राजधान्यां शूरनिपातसञ्ज्ञे वने उद्याने मुनिः हेमशक्तिः पूर्ववत् वासमाचर न्यवसत् प्रतिमाञ्च व्यधात् तत्रापि भूय. पुनः अविमुक्तवैरः अविनष्ट शत्रुभावः सुराधमः हिमचूलः बाधाचिकी उपद्रवां चिकीर्षु. समागात् ॥९५॥

ज्ञानं तदापाऽप्रतिपाति साधु-स्तत्पूजनाय त्रिदशाः समेयुः ।
तेभ्यः स भीतस्त्रिदशाधमोऽपि पादांस्तदीयान् शरणं जगाम ॥९६॥

ज्ञानमिति—तदा तस्मिन् काले शुक्लध्यानैकनिष्ठः साधुः हेमशक्तिः अप्रतिपाति अविनश्वरं ज्ञानं केवलज्ञानमित्यर्थः आपप्राप, तस्य हेमशक्तेः पूजनाय त्रिदशाः देवाः समेयुरागतवन्तः, तेभ्यः देवेभ्यो भीतः स त्रिदशाधमः हिमचूलोऽपि तदीयान् पादान् हेमशक्तिमुनेः चरणान् शरणं जगाम प्राप ॥९६॥

वज्रायुधोऽप्यस्य मुनेः प्रभावं श्रुत्वा समानं महिमानमाधात् ।
तद्देशनावागमृतं निपीय वेश्मन्यगात् सोऽपि सुपर्वभावः ॥९७॥

वज्रेति—वज्रायुधोऽप्यस्य हेमशक्तेः मुनेः प्रभावं केवलज्ञानप्राप्तिरूपं देवाद्यर्चारूपं वा श्रुत्वा समानं सत्कारपूर्वकं महिमानं आधाश्चकार, स तस्य हेमशक्तेः देशना वाग्रूपममृतं निपीय सादरं श्रुत्वा सुपर्वभावः देवभावः यद्वा सुपर्वणि भावो यस्य तादृशः सन् वेश्मनि गृहेऽगादपि ॥

क्षेमंकरस्तीर्थकरोऽत्र पुर्यां विश्वत्रयक्षेमकृदन्यदाऽऽगात् ।
पुण्यानुभावेन महाजनानां किं किं समालिङ्गति नैव सिद्धिम् ? ॥९८॥

क्षेमेति—अन्यदा विश्वत्रयक्षेमकृत् सकलजगदुपकारकः क्षेमङ्करः तदाख्यः तीर्थङ्करः अत्र पुर्यां नगरे अगात् । तदागमने पुण्यमेव हेतुरित्याह—पुण्यानुभावेन पुण्यप्रभावेण महाजनानां मनस्विनां किं किं क्रियासिद्धिं नैव समालिङ्गत्याश्रयति, अपितु, सर्वमेव सिद्धिं समाश्रयत्येव, सिद्धिं भवतीत्यर्थः ॥९८॥

वज्रायुधं चक्रिणमभ्युपेत्याऽऽयुक्ता नराः स्वामिसमागमेन ।
तं वर्धयित्वा परितुष्टिदानं सम्प्राप्य तावत् स्वगृहाणि जग्मुः ॥९९॥

वज्रेति—आयुक्ताः नराः भृत्याः स्वामिनः क्षेमङ्करस्य समागमेन वृत्तान्तेन तं वज्रायुध चक्रिणं वर्धयित्वा वर्धापयित्वा परितुष्टिदानं परितोषिकं सम्प्राप्य तावत्स्वगृहाणि जग्मुः ॥९९॥

रोदोऽन्तराले वसुधामिवान्यां सैन्योत्थितै रेणुभिरादधानः ।
नन्तुं जिनाधीशमियाय सोऽथ-तं त्रिः परीय प्रणनाम चायम् ॥१००॥

रोदइति—अथानन्तरं स वज्रायुधः सैन्योत्थितैः सैन्यैः उद्भूतैः रेणुभिः धूलिभिः कृत्वा रोदोऽन्तराले द्यावापृथिव्योर्मध्ये अन्यां वसुधां पृथिवीमिवादधानः कुर्वन् जिनाधीशं क्षेमङ्करं नन्तुमियाय ययौ, तथा अयं वज्रायुधः त्रिः त्रिवारं परीय प्रदक्षिणां कृत्वा प्रणनाम च ॥१००॥

स्थित्वा यथास्थानमनन्यकर्मा धर्मोपदेशं विनिशम्य चक्री ।
तीर्थाधिनाथं पुनरेव नत्वा स्वाकूतमाख्यच्च महामहेच्छः ॥१०१॥

स्थित्वेति — यथास्थानमुचिते स्थाने स्थित्वोपविश्य अनन्यकर्मा एकाग्रचित्तः असाधारणकृतिमान् चक्री वज्रायुधः धर्मोपदेशं विनिशम्य पुनरेव तीर्थाधिनाथं क्षेमङ्करं नत्वा महामहेच्छः महोदरचित्तवृत्तिः सन् स्वाकूतम् स्वहृद्गतं भावमाख्यत्कथितवांश्च ॥१०१॥

तदुक्तमेवाह—

संसारसिन्धौ निपतन्तमस्मिन्, प्रोद्यन्महामोहजलैरगाधे ।
दीक्षातरण्या शुभवातयोगात् त्वं मां जगत्तारक ! तारयाऽऽशु ॥१०२॥

संसारेति — प्रोद्यद्भिः वर्धमानैः महामोहैरेव जलैः अगाधे अतलस्पर्शे अत्यन्तगम्भीरे प्रवेशे इत्यर्थः । अस्मिन् संसारसिन्धौ निपतन्तं मज्जन्तं माम् वज्रायुधम्, जगत्तारक ! त्वम् दीक्षारूपया तरण्या नावा शुभस्य शुभानुष्ठानस्य शुभकर्मरूपस्य वातस्य वायोर्योगात्सम्बन्धात् आशु तारय । रूपकालङ्कारः ॥१०२॥

आकर्ण्य विज्ञप्तिमिमां तदीयां तीर्थप्रभुर्वाचमुवाच सारम् ।
हित्वा प्रमादं स्वमनीषितं द्राक् कुर्या यतः स्युः सुकृतेऽन्तरायाः ॥१०३॥

आकर्ण्येति — तदीयां वज्रायुधसम्बन्धिनीमिमामुक्तां विज्ञप्तिमाकर्ण्य तीर्थप्रभुः तीर्थेशः क्षेमङ्करः सारं श्रेष्ठं वाचमुवाच, का सा वागित्याह—प्रमादमनवधानतां हित्वा त्यक्त्वा समनीषितं निजेष्टं कुर्याः, यतः कारणात् सुकृते पुण्यकार्ये अन्तराया विघ्नाः स्युः अप्रमादिनो विघ्नोऽकिञ्चत्कर इति भाव. ॥१०३॥

ईदृक् तदाकर्णनहृष्टचेता राज्ये सहस्रायुधमात्मजातम् ।
न्यस्यैत्य दीक्षां जिनपादमूले जग्राह वज्रायुध सार्वभौमः ॥१०४॥

ईदृगिति—ईदृशः तस्य तीर्थेशोक्तस्याकर्णनेन श्रवणेन हृष्टचेताः प्रसन्नः वज्रायुधः सार्वभौमश्चक्री राज्ये आत्मजातं पुत्रं सहस्रायुधं न्यस्य स्थापयित्वा एत्य आगत्य जिनपादमूले दीक्षां जग्राह गृहीतवान् ॥१०४॥

कोटीरभाजो वसुधाधिपाला देव्यो मिताश्चापि चतुः सहस्त्या ।
पुत्राः पुनः सप्तशतीप्रमाणाः प्राव्राजिषुस्तं प्रभुमन्वगेव ॥१०५॥

कोटीरेति — तं प्रभुं वज्रायुधमन्वग् अनुसर्तारः कोटीरभाजः मुकुटधारिणो वसुधाधिपाश्च नृपाः चतुःसहस्त्यमिताः परिमिताः चतुः सहस्रसंख्याकास्तत्संख्याका देव्यः राज्ञ्यश्चापि, पुनस्तथा सप्तशतीप्रमाणाः पुत्राः प्राव्राजिषुः ॥१०५॥

संगृह्य शिक्षां द्विविधां विधिज्ञश्चूडामणिः सोऽपि तपोधनानाम् ।
वज्रायुधः सिद्ध्यभिधानशैलमेको ययौ शैलसमानसारः ॥१०६॥

संगृह्येति—द्विविधां ग्रहणशिक्षामात्रैव न शिक्षाम् च संगृह्याभ्यस्य स्वीकृत्य वा विधिज्ञः तपोघनानां मुनीनां चूडामणिरिव शेखरभूतः सः शैलसमानसारः पर्वतवद्धीरः वज्रायुधोऽपि एकः एकाकी एव सिद्धयभिधानशैलं सिद्धिपर्वतं तन्नामानं गिरिवरं ययौ ॥१०६॥

तत्रोपसर्गेषु सहिष्णुबुद्धिः स्तम्भे स वैरोचननामधेये ।
निर्मेधवैरोचनधामधामा वर्षप्रमाणां प्रतिमां चकार ॥१०७॥

तत्रेति—तत्र सिद्धिपर्वते उपसर्गेषु सहिष्णुबुद्धिः सहनशीलः वैरोचनं सूर्यसम्बन्धि धाम यस्य स सूर्ये (व)त्तेजस्वी स वज्रायुधः वर्षप्रमाणां वर्षिकां प्रतिमां चकार ॥१०७॥

ध्यानं समालम्ब्य स यावदास्ताऽश्वग्रीवपुत्रौ दुरितप्रणुन्नौ ।
तावच्चनाम्ना मणिपूर्वकुम्भकेतू परिभ्रम्य भवं चिराय ॥१०८॥
किञ्चित्तमां बालतपो विधायाऽहंकारकाराविनिविष्टचित्तौ ।
प्राप्ताऽसुरत्वौ कुतुकाद् भ्रमन्तौ तत्रागतौ तं मुनिमैक्षिषाताम् ॥१०९॥युग्मम्।

ध्यानमिति—स वज्रायुधः यावद् ध्यानं समालम्ब्य ध्यानस्थितः आस्ताभूत्, तावच्च दुरितेन दुष्कृतेन प्रणुन्नौ प्रेरितौ अश्वग्रीवस्य पुत्रौ नाम्ना मणिपूर्वकुम्भकेतू मणिकुम्भः मणि-केतुश्च चिराय भवं परिभ्रम्य किञ्चित्तमामीषद्बालतपः अज्ञानतपः विधाय अहङ्कार एव बन्धहेतु-त्वात्काराबन्दिगृहं तत्र विनिविष्टं साग्रहं चित्तं ययोस्तौ तादृशौ अहङ्कारवन्तौ, अत एव प्राप्ता-सुरत्वौ असुरभावमागतौ कुतुकात्कौतुकाद्भ्रमन्तौ तत्र पर्वते आगतौ सन्तौ मुनिं वज्रायुध मैक्षि-षाताम् ॥१०८॥१०९॥

तस्मिंश्च जीवेऽमिततेजसः प्राक् तौ बद्धवैरावनिरुद्धरूपौ ।
क्रोधादुपद्रोतुमढौकिषातां तं बाढमर्थात्मभुवौ व धर्मम् ॥११०॥

तस्मिंश्च—अमिततेजसः तस्मिन् वज्रायुधरूपे जीवप्राक्पूर्वभवे बद्धवैरौ अनिरुद्धरूपौ अप्रतिहतस्वभावौ तौ मणिकुम्भमणिकेतू क्रोधात्तं वज्रायुधमुपद्रोतुमुपसर्गं कर्तुम् अर्थात्मभुवौ अर्थकामौ धर्मं व इव बाढमढौकिषाताम् प्रावर्त्तिषाताम् "पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभू" इत्यमरः ॥११०॥

पारीन्द्रदन्तावलकालकाव्यालाग्र्यवेतालकरालरूपैः ।
क्लृप्तैः स्वयं तौ बहुधा मुनीशे यावत् खलूपप्लवमाधिपाताम् ॥१११॥

पारीति—यावत्तौ मणिकुम्भमणिकेतू मुनीशे वज्रायुधे विषये खलु बहुधा नैकप्रकारैः स्वयं क्लृप्तैः विकृतैः पारीन्द्रः सिंहः दन्तावलो हस्ती कालः "दन्ती दन्तावलो हस्ती" त्यमरः ।

कालव्यालः कृष्णसर्पः कृत्वा अग्रचः मुख्या वेतालाश्च तेषां करालैः भयङ्करैः रूपैः कृत्वा उपप्लवमुपद्रवमाधिषाताम् आकाङ्क्षाम् अस्य तावदित्यग्रमश्लोके न सम्बन्ध इति ॥१११॥

तावद् बलारेः प्रियवारवध्वस्तीर्थङ्करं वन्दितुमिद्धरागा ।
संभूय रम्भाप्रमुखाः प्रचेलुः को वाऽमृतं वाञ्छति नाऽच्छबुद्धिः ? ॥११२॥

तावदिति—तावत् अस्य भावदिति पूर्वेण सम्बन्धः, बलारेः शक्रस्य "सुरपतिर्बलारातिः" इत्यमरः । प्रिया वारवध्वः अप्सरसः रम्भाप्रमुखाः इद्धरागाः भक्तिमत्यः सम्भूय मिलित्वा तीर्थंकरं वन्दितुम् प्रचेलुः । श्रेयसि सर्वेषामेव प्रवृत्तिर्भवतीत्याह को वा अच्छबुद्धिः विमलमतिः अमृतं न वाञ्छति ? अपि तु सर्व एव वाञ्छतीत्यर्थः ॥११२॥

अद्राक्षुर क्षुद्रतरस्वभावाः क्षुद्रावमुद्रावसुराधमौ ताः ।
तस्मिन् मुनीन्द्रे विविधोपसर्गान् सम्पादयन्तावदयं दुराशौ ॥११३॥

अद्राक्षुरिति---अक्षुद्रतरस्वभावाः उदाराशयास्ता अप्सरसः दुराशौ दुर्भाववन्तौ अत एव क्षुद्रौ नीचौ अमुद्रौ कुलक्षणौ असुराधमौ द्वौ तस्मिन् मुनीन्द्रे वज्रायुधे अदयं निर्दयं यथास्यात्तथा विविधोपसर्गान् सम्पादयन्तौ कुर्वन्तावद्राक्षुः ददृशुः ॥११३॥

हा ! हा ! किमारब्धमनात्मनीनावस्मिन् मुनीन्द्रेऽत्र समाधिनिष्ठे ? ।
एवं ब्रुवाणा अवतेरुरेता विष्णोः पदाद् विष्णुरथातिवेगाः ॥११४॥

हा इति–हा हा ! इति शोकव्यञ्जकमव्ययम्, अनात्मनीनौ स्वात्मनः स्वेनैवाहितौ, अत्रास्मिन् समाधिनिष्ठे मुनीन्द्रे वज्रायुधे किमारब्धम् ? अनुचितमेतदिति निवारणवाक्यम्, एवमुक्तप्रकारेण ब्रुवाणाः कथयन्त्यः विष्णुरथस्य गरुडस्यापेक्षयाऽप्यतिवेगाः एता अप्सरसः विष्णोः पदादाशादवतेरुः अधः आजग्मुः "विष्णुरथः सुपर्णः पन्नगाशनः वियद्विष्णुः" इति चामरः ॥११४॥

आलोक्य तास्तत्र समाव्रजन्ती,-स्तौ तत्क्षणादेव पलायिषाताम् ।
मिथ्यात्वमोहप्रसरो हि तावद्—यावन्नजैन्यः प्रसरन्ति वाचः ॥११५॥

आलोक्येति—तत्र पर्वते समाव्रजन्तीः आगच्छन्तीः ता अप्सरसोऽवलोक्य तौ मणिकुम्भमणिकेतू तत्क्षणादेव पलायिषाताम् तदेव वैधर्म्येण समर्थयति–हि यतः मिथ्यात्वमोहयोः सरः प्रवृत्तिस्तावदेव यावत् जैन्यः जिनोक्तावाचः न प्रसरन्ति सञ्चरन्ति ॥११५॥

अग्रे मुनीन्द्रस्य सुरेपत्न्य–स्ता नाटकं चक्रुरुदारभावाः ।
वज्रायुधर्षिं प्रणिपत्य भक्त्या जग्मुर्यथास्थानमथ प्रहृष्टाः ॥११६॥

अग्रे इति—मुनीन्द्रस्याग्रे ताः समायाताः सुरेन्द्रपत्न्यः इन्द्राण्य उदारभावाः विशुद्धाशया सत्यः नाटकं चक्रुः, अथ नाटकानन्तरं वज्रायुधर्षिं भक्त्या प्रणिपत्य प्रहृष्टाः सत्यः यथा स्थानं स्वं स्वं स्थानं जग्मुः ॥११६।

संपूर्य तां स प्रतिमां क्रमेणान्यत्र व्यहार्षीत् सुपवित्रगात्रः ।
पृथ्वीं सहस्रायुधपार्थिवोऽपि न्यायश्रिया पालयति स्म तद्वत् ॥११७॥

सम्पूर्येति—स सुपवित्रगात्रः तपः पूतशरीरः वज्रायुधः क्रमेण तां स्वीकृतां प्रतिमां सम्पूर्य समाप्यान्यत्र व्यहार्षीत् विजहार; तद्वत् वज्रायुधवत् सहस्रायुधपार्थिवोऽपि न्यायश्रिया नीत्येत्यर्थः, पृथिवीं पालयतिस्म ॥११७॥

अत्रापरेद्युः परपौरभाग्यं भङ्ग्याप्रणुन्नाः पिहिताश्रवाख्याः ।
सूरीश्वराः कल्मषपङ्कजातशोषक्रियायां तपना इवाऽऽगुः ॥११८।

अत्रेति—अपरेद्युः अत्र मणिसञ्चयाख्यपुर्यां परमुत्कृष्टं यत्पौराणां भोग्यं तस्य भङ्ग्या विधानेन कृत्वा प्रणुन्नाः प्रेरिताः, महापुरुषदर्शनं भाग्यप्रेरितमेव भवतीति भावः. पिहितः संवृत्तः आस्रवाख्यः आश्रवः यैस्ते तादृशाः कल्मषं पापमेव पङ्कजातं पङ्कसमूहः तस्य शोषक्रियायां विनाशे नीरसी करणे च तपना इव सूर्यतुल्या. सूरीश्वराः आगुः आगतवन्तः ॥११८॥

गत्वा सहस्रायुधभूमिपाल–स्तान् वन्दते स्म प्रणिधानपूर्वम् ।
पीयूषवन्धोर्गुरुदेशनाया जग्राह तत्त्वं च तदन्तिकस्थः ॥११९॥

गत्वेति—सहस्रायुधभूमिपालस्तत्र गत्वा तान् सूरीश्वरान् प्रणिधानपूर्वकम् चित्तैकाग्र्यपूर्वकम् वन्दते स्म, तदन्तिकस्थः तत्समीपे उपविष्टश्च पीयूषवन्धोरमृततुल्यया गुरोर्देशनाया तत्त्वं जग्राह ॥११९॥

देशनातत्त्वग्रहफलमाह—

निर्वेदमासाद्य भवोत्थसौख्यादाकार्य पुत्रं शतबल्यभिख्यम् ।
राज्ये निवेश्य व्रतमादिताऽसौ तेषां गुरूणां सविधे नरेन्द्रः ॥१२०॥

निर्वेदेति—भवोत्थसौख्यात् संसारं विजयजसौख्यात् निर्वेदं भावोद्वेगविरक्तिमासाद्य शतबल्यभिख्यम् शतबलीनामानं पुत्रमाकार्याहूय राज्ये निवेश्य स्थापयित्वा असौ नरेन्द्रः सहस्रायुधगुरूणां तेषां सूरीणां समीपे सविधे व्रतं दीक्षामादित जग्राह ॥१२०॥

साधुः सहस्रायुधनामधेयोऽन्येद्युर्विहारं विदधद् धरित्र्याम् ।
वज्रायुधस्य व्रतिपुङ्गवस्य पद्माकरस्येव मिमेल हंसः ॥१२१॥

साधुरिति—अन्येद्युः सहस्रायुधनामधेयसाधुः धरित्र्याम् विहारं विदधत् कुर्वन् व्रति पुङ्गवस्य मुनिश्रेष्ठस्य वज्रायुधस्य, पद्माकरस्य पद्मखण्डस्य हंस इव मिमेल, वज्रायुधेन सह-मिताः सङ्गत इत्यर्थः शेष षष्ठी इति ॥१२१॥

युक्तौ मुनी रूपरसाविवैतौ द्रव्याश्रयं चित्रमनाश्रयन्तौ।
भूयस्तरं कालमतीयतुस्तौ पृथ्वीं विहारेण पवित्रयन्तौ॥१२२॥

युक्ताविति—रूपरसाविव युक्तौ एकत्र स्थितौ, द्रव्याश्रयं द्रव्यस्याश्रये धनिनम्, अना-श्रयन्तौ स्वार्थोद्देशेनाश्रयमकुर्वाणौ, चित्रमाश्चर्यम्, रूपरसौ हि द्रव्यमाश्रयो ययोस्तौ तादृशौ द्रव्याश्रिता गुणा इत्युक्तेरिति भावः, अयं तु तौ इयापि न तदाश्रयौ इति, यद्वा-इत्रैकाश्रय-माश्रितावपि न द्रव्याश्रयमाश्रिताविति आश्चर्यम् इति भावः, सङ्गतिस्तु उक्तार्थकारणेन दर्शि-तैव, एतौ तौ मुनी वज्रायुधसहस्रायुधौ विहारेण कृत्वा पृथिवीं पवित्रयन्ती सन्तौ भूयस्तर-मति बहुं कालमीयतुः व्यतीयतुः ॥१२२॥

तुङ्गं समारुह्य महीध्रमीष-त्प्राग्भारसंज्ञं यतिनौ व्यधत्ताम्।
तत्पादपाख्यानशनं विलीन-स्थामाङ्गमास्थाय समाधिमेतौ॥१२३॥

तुङ्गमिति—एतौ यतिनौ वज्रायुधसहस्रायुधौ ईषत्प्राग्भारसंज्ञं तुङ्गमत्युच्चं महीध्रं पर्वतं समारुह्य समाधिमेतौ प्राप्तौ यतिनौ वज्रायुधसहस्रायुधौ विलीनं नष्टं स्थाम पराक्रमं यस्य तत्तादृशभंगकाएमास्थाय मत्वा त्वत्पादपादपाख्यानशनं व्याधत्ताम्, यदाविलीनं तदेकतानं स्थाम निश्चलंचाङ्गं यथा स्यात्तथा तत्पादपाख्यानशनमास्थायाश्रित्य समाधिमेतौ प्राप्तौ इति ॥१२३॥

व्यापत्तिमापद्य ततस्तृतीये ग्रैवेयके तावहमिन्द्रभूयम्।
आसेदतुः सञ्चितपञ्चविंशत्य-ब्ध्यायुषा सङ्कलितं स्वितश्च॥१२४॥

व्यापत्तिमिति—ततोऽनशनाद्धेतोः व्यापत्ति मृतिमापद्य प्राप्य तौ वज्रायुधसहस्रायुधौ तृतीये ग्रैवेयके श्रीशान्तिनाथचरिमान्तरे नवमग्रैवेयके इत्युक्तम्, सञ्चितेन स्थिरीकृतेन पूर्व-बद्धेन पञ्चविंशत्यायुषा पञ्चविंशतिसागरोपमेनायुषा सङ्कलितं समन्वितम् अहमिन्द्रभूयमह-मिन्द्रत्वमासेदतुः। इतश्चेति अङ्गभूतकथान्तरप्रस्तावे अग्रिमश्लोकेन सम्बध्यते॥१२४॥

प्राग्द्वीपके पूर्वविदेहमध्ये सीता महानद्युपकण्ठ एव।
आस्ते विशालः किल पुष्कलावत्याख्यो महीयान् विजयः प्रतीतः॥१२५॥

प्रागिति—इतश्चेति पूर्वश्लोकात्सम्बध्यते, प्राग्द्वीपके पूर्वद्वीपे जम्बूद्वीपे पूर्वविदेहमध्ये सीता नाम्न्या महानद्या उपकण्ठे समीपे एव विशालः पृथुलः, "बृहद् विशाल पृथुलं महदि"त्यमरः। प्रतीतः प्रख्यातः महीयान् अतिशयेन महान् पुष्कलावत्याख्यः विजयः आस्ते किल इति ॥१२५॥

तन्मण्डनं मध्यमखण्डमध्ये पूः पूण्डरीकिण्यभिधाऽस्त्यखण्डा ।
आखण्डलश्रीजयकृत् समृद्धया श्रीपुण्डरीकाक्षजनाधिवासा ॥१२६॥

तदिति—मध्यमखण्डमध्ये पुष्कलावतीविजयमध्यखण्डे तस्य मध्यखण्डस्य मण्डनं भूषणरूपम् अखण्डा सम्पूर्णा श्रीपुण्डरीकिणीनाम्नी, समृद्धया सम्पदा कृत्वा आखण्डलस्येन्द्रस्य श्रिया लक्ष्म्या जयकृत् पुण्डरीकाक्षाः विष्णुतुल्याश्च जनाः स्त्रीपुंसरूपा अधिवसन्ति यत्र तादृशी पूर्नगरी अस्तीति ॥१२६॥

आसीद् नृपस्तत्र घनो रथान्तः शश्वद् गुणश्रेणिविभूषितात्मा ।
गीर्वाणगीर्वाणविरोधिवृन्द संसेव्यमानक्रम पद्मयुग्मः ॥१२७॥

आसीदिति—तत्र पुण्डरीकिण्यां शश्वत्सर्वदा गुणश्रेणिभिः विभूषतात्मा समन्वितः घनः रथान्तः घनरथनामा नृप आसीत् । सच गीर्वाणानां सुरदेवानां गीर्वाणविरोधिनामसुरदेवानाञ्च वृन्दैः संसेव्यमानं क्रमौ पद्मे इव तयोर्युग्मं यस्य स तादृश सुरासुरसेवितः इत्यर्थः ॥१२७॥

यस्य प्रतापेन समं दिनेशः साम्यं समाक्रामति नैव किञ्चित् ।
आशासु सर्वासु नवोदयेन पूर्वोदयः काव्यविवर्णनेन ॥१२८॥

यस्येति—काव्यविवर्णनेन काव्ये वर्णनया कृत्वा सर्वास्वपि आशासु दिक्षु नवोदयेन अभूतपूर्व प्राकट्येन हेतुना, सर्वदिक्षु तत्प्रतापोदय इति भाव', सर्वासु दिक्षु दिव्योदयकेन, यस्य घनरथनृपस्यप्रतापेन समं सह दिनेशः पूर्वोदयः, पूर्वदिश्युदयो यस्य स तादृशः, न तु दिग न्तरे, अतः किञ्चित् साम्यं तुल्यतां नैव समाक्रामति गच्छति, सूर्याधिकप्रतापः स इत्यर्थः व्यतिरेकालङ्कार इति ॥१२८॥

अर्थं दधे यः परदौस्थ्यभित्यै कामं च यः सन्ततिकामनायै ।
विश्वम्भरानर्थनिवर्तनाय धर्मं च यो धर्मवतां पुरोगः ॥१२९॥

अर्थमिति—यो घनरथः अर्थं धनं परस्यान्यस्य प्रजादेः दौस्थ्यस्य दारिद्र्यस्य भित्यै विनाशाय दधे, न तु स्वोपभोगाय, यश्च घनरथः सन्ततिकामनायै पुत्रेच्छया कामं दधे, न तु विषयलुब्धतया, यश्च धर्मवतां पुण्यशालिनां पुरोगोऽग्रेसरः महाधार्मिकः घनरथनृपः विश्वम्भरायां पृथिव्यामनर्थस्यान्यायस्याधर्मस्य वा निवारणाय धर्मं दधे, धर्मेण पृथिवीं शशासेत्यर्थः इति ॥१२९॥

एतादृशः शारदशर्वरीश भास्वद् गुणग्रामनिवासभूमिः ।
अन्यः किमस्तीति जगत्त्रयेऽपि बभ्राम यत्कीर्तिरविभ्रमेण ॥१३०॥

एतादृशः इति—यस्य घनरथस्य कीर्तिः अविभ्रमेण निश्चयेन एतादृशः एष इव शारदशर्वरीशः शरच्चन्द्रः स इव भास्वतः उज्ज्वलस्य गुणग्रामस्य गुणसमूहस्य निवासभूमिरास्पदमन्यः इतरो जनोऽस्ति किम् इति जिज्ञासया जगत्त्रयेऽपि बभ्राम, जगत्त्रयव्याप्ता तत्कीर्तिरिति भावः ॥१३०॥

तस्य प्रियाऽभूत् प्रियमत्यभिख्या, ज्येष्ठा कनिष्ठा च मनोरमाख्या ।
श्रीनाभिसूनोरिव वित्तिलक्ष्मीमूर्तेः सुनन्दा च सुमङ्गला च ॥१३१॥

तस्येति—तस्य घनरथस्य वित्तिलक्ष्मी मूर्तेर्ज्ञानश्रीरूपस्य श्रीनाभिसूनोः ऋषभस्य सुनन्दा च सुमङ्गला च इव प्रियमत्यभिख्या प्रियमती नाम्नी ज्येष्ठा मनोरमाख्या च कनिष्ठा प्रिया भार्याऽभूत् ॥१३१॥

ग्रैवेयकायुः परिपूर्य जन्तुर्वज्रायुधस्याऽपि महाशयस्य ।
कुक्षिं महिष्याः प्रियमत्यभिख्या-ख्यातिं दधत्या अधितिष्ठति स्म ॥१३२॥

ग्रैवेयकायुरिति—ग्रैवेयकायुः पञ्चविंशतिसागरोपमायुः परिपूर्य समाप्य महाशयस्य वज्रायुधस्य जन्तुर्जीवोऽपि प्रियमत्यभिख्या ख्यातिं दधत्याः प्रियमतिनाम्न्याः महीष्याः कुक्षिं गर्भमधितिष्ठत्यध्यास्ते स्मेति ॥१३२॥

"स्वप्ने तदा पश्चिमरात्र्यामे, देव्या निजास्ये प्रविशन् व्यलोकि ।
धाराधरो गर्जितमादधानो वृष्टिं च शम्पासहितः समन्तात् ॥१३३॥

स्वप्ने इति—तदा पश्चिमरात्र्यामे. रात्रेश्चतुर्थ प्रहरे स्वप्ने देव्या प्रियमत्या निजास्ये स्वमुखे गर्जितसमन्ताद्वृष्टिञ्चादधानः कुर्वन् शम्पासहितः विद्युद्युक्तः धाराधरः घनाघनः प्रविशन् व्यलोकि दृष्टः ॥१३३॥

राज्ञी प्रभाते जगदीश्वरस्य स्वप्नं जगौ सोऽपि जगाद तथ्यम् ।
शस्यप्रसूतिः परतापभेत्ता भावी सुतो मेघ इवानघे ! ते ॥१३४॥

राज्ञीति—राज्ञी प्रियमति प्रभाते प्रातः काले जगदीश्वरस्य घनरथनृपस्य स्वप्नं जगौ कथयामास, सः घनरथोऽपि तथ्यं स्वप्नतत्त्वं जगाद, किमित्याह—अनघे ! निष्पापे ! ते तव अत्र ते इत्यव्ययम्, अन्यथाऽऽमन्त्र्यस्यासद्भावेन ते इत्यप्रयोगापत्तिरितिध्येयम् । मेघ इव शस्यानां धान्यानां प्रसूतिः उत्पत्तिकारणम् वा उत्पत्तिर्यस्मात्तादृशः परतापस्य परकीयदुःखस्य भेत्ता सुतो भावीति ॥१३४॥

श्रुत्वा स्वभर्तुर्वचनं प्रहृष्टा ध्वानं मयूरीव घनाघनस्य ।
देव्युच्चगोत्रस्थितिमादधाना गर्भं दधाना दिवसाननैषीत् ॥१३५॥

श्रुत्वेति—स्वभर्तुः घनरथस्य वचनं घनाघनस्य वर्षुकाब्दस्य ध्वानं गर्जितं श्रुत्वा मयूरीव प्रहृष्टा देवी प्रियमती, 'उच्चगोत्रस्य स्थितिर्मर्यादा तामादधाना यद्वा उच्चां गात्रस्थितिं शरीरावस्थामादधाना कुर्वाणा गर्भं दधाना दिवसाननैषीद्व्यत्यगात् इति ॥१३५॥

च्युत्वा सहस्रायुधराजजीवो, ग्रैवेयकादायुषि भुक्तशेषे ।
कुक्षौ स देव्याः सुमनोरमायाः पुण्यस्थितेर्गर्भतयोदपादि ॥१३६॥

च्युत्वेति—आयुषि भुक्तेन भोगेन शेषे समाप्ते सति ग्रैवेयकाच्च्युत्वा स सहस्रायुधराजजीवः पुण्यस्थितेः पुण्यशालिन्याः सुमनोरमायां देव्याः कुक्षावुदरे गर्भतया गर्भरूपेण उदपादि उत्पन्नः ॥१३६॥

स्वप्ने तयाऽपि प्रविशन् मुखान्तस्तस्यां समालोकि दृढो रथश्च ।
उन्नादिजाम्बूनदकिङ्किणीको वातप्रकम्पध्वजराजमानः ॥१३७॥

स्वप्नेति—तया मनोरमयाऽपि तस्यां रात्रौ स्वप्ने मुखान्तः मुखे उन्नादिन्यः मुखराः जाम्बूनदानां सुवर्णानां किङ्कणीकः क्षुद्रघण्टिकाः यस्मिन् स तादृशः, तथा, वातेन पवनेन कृत्वा प्रकम्पेण कम्पनशीलेन ध्वजेन विराजमानः दृढः विशालः रथः प्रविशन् समालोकि ॥१३७॥

सोपायना साऽपि नृपाय सद्यः प्रोचे स्वयं सेवधिलाभवत्तम् ।
हर्षप्रकर्षाद् नृपतिस्तदर्थमाख्यच्च भावी तव देवि ! पुत्रः ॥१३८॥

सोपेति—सा मनोरमाऽपि सोपायना उपायनहस्ता सती सद्यस्तत्कालमेव सेवधिलाभवत् निधिलाभवत् तं स्वप्नं नृपाय घनरथाय स्वयं प्रोचे, नृपतिश्च हर्षप्रकर्षात् सातिहर्षम् आख्यात् कथयामास, किमित्याह–देवि ! तव पुत्रो भावी भविष्यतीति ॥१३८॥

ते द्वे अपि प्रीणितविश्वविश्वौ पुत्रौ किलाऽजीजनतां सुलग्ने ।
उच्चेषु केन्द्रेषु च सद्ग्रहेषु पुंरूपमेताविव पुष्पवन्तौ ॥१३९॥

ते इति—ते द्वे अपि प्रियमति मनोरमे उच्चेषु उच्चगृहस्थेषु स्वोच्चराशिस्थेषु केन्द्रेषु प्रथमचतुर्थसप्तमदशमेषु सद्ग्रहेषु शुभग्रहेषु सत्सु सुलग्ने सुमुहूर्त्ते पुष्पवन्तौ दिवाकरनिशाकरौ पुंरूपं मनुष्यरूपत्वमेतौ प्राप्ताविव प्रीणितविश्वविश्वौ हर्षितसकलभुवनौ पुत्रौ अजीजनतां सुषुवाते किल इति ॥१३९॥

कृत्वोत्सवं वाञ्छितदानपूर्वं-स्वप्नानुसारेण नृपोऽकृताऽऽख्याम् ।
ज्येष्ठं सुतं मेघरथं बभाषे पश्चाद् द्वितीयं च दृढं रथान्तम् ॥१४०॥

कृत्वोत्सवमिति—नृपः घनरथः उत्सवं जन्मोत्सवं कृत्वा वाञ्छितदानपूर्वं यथेष्टं ददानः स्वप्नानुसारेण आख्यातमकृतनामकरणं कृतवान्, नाम्नैवाह ज्येष्ठं सुतं मेघरथं बभाषे पश्चाद् द्वितीयञ्च दृढं रथान्तरम् दृढरथम् बभाषे, क्रमशः मेघरथ दृढरथेति नामाकृत ॥१४०॥

धात्रीभिरेतौ परिपाल्यमानौ वृद्धिं गतौ शिक्षितवेद्यविद्यौ ।
पुष्पेषु लीलोपवनं क्रमेण तौ यौवनं प्रापतुरेककालम् ॥१४१॥

धात्रीभिरिति—धात्रीभिरुपमातृभिः परिमाल्यमानावेतौ मेघरथदृढरथौ वृद्धिं गतौ सन्तौ शिक्षिता उपदिष्टा वा वेद्या विद्या ययोस्तौ तादृशावधीत सकलविद्यौ तौ क्रमेण एककालं युगपदेन पुष्पेषु लीलायाः कामव्यापारस्योपवनमिव यौवनं प्रापतुः ॥१४१॥

श्रीमन्दिराख्यस्य पुरस्य भर्तु-र्द्वेधा हतारेर्नृपतेर्नियोगात् ।
मन्त्री समागादपरेद्युरुद्यद् बुद्धिप्रशस्यः खलु शस्यबुद्धिः ॥१४२॥

श्रीति—अपरेद्युः द्वेधानाम्ना अर्थे न च श्रीमन्दिराख्यस्य श्रिया मन्दिरमिति च पुरस्य भर्त्तुः हतारेः तदाख्यस्य नृपतेर्नियोगात् प्रेरणातः, यद्वा 'श्रीमन्दिराख्यस्य पुरस्य भर्त्तुर्द्वेधा द्रव्यतो हता अरयो येन तस्य हतारेः, नाम्ना च हतारेः तदाख्यनृपतेर्नियोगात् प्रेरणातः उद्यन्त्योन्मेषशीलया बुद्ध्या प्रशस्यः शस्यबुद्धिस्तदाख्यः मन्त्री समागात् खलु ॥१४२॥

आवेदितो वेत्रभृतां वरेणा-ऽमात्यः प्रणम्यावनिवासनं तम् ।
सुक्षत्रनक्षत्रसुधांशुबिम्बं बद्धाञ्जलिर्व्यज्ञपयद् विधिज्ञः ॥१४३॥

आवेदित—वेत्रभृतांवरेण द्वारपालेन आवेदितः सूचितः अमात्यः विधिज्ञः कार्यकुशलोऽतएव, सुक्षत्ररूपेषु क्षत्रियेषु सुधांशुबिम्बं चन्द्रमिव तमवनिवासनं नृपं प्रणम्य बद्धाञ्जलिः सन् विज्ञपयत् ॥१४३॥

गङ्गापवित्रं भुवनं करोति चेतश्चमत्कारकरं न चैतत् ।
त्वत्कीर्तिगङ्गा तु महेश्वराणां मौलिस्थिता देव ! करोति चित्रम् ॥१४४॥

गङ्गेति—देवि ! गङ्गाभुवनं लोकं पवित्रं करोति, इत्येतत् चेतसश्चमत्कारकरं विच्छित्तिजनकं न, तर्हि किं वस्तु तादृशमित्याह—त्वकीर्तिगङ्गा तु महेश्वराणां नृपाणां मौलिस्थिता सर्वोपरितामाप्ता चित्रमाश्चर्यं करोति । सा गंगा तु एकस्य महेश्वरस्य मौलिस्थितेति कथं नाम सा चित्रं करोत्वित्यर्थः । श्लेषानुप्राणितोव्यतिरेकोऽलङ्कारः ॥१४४॥

स्वामिन् ! मम स्वाम्यपि ते सखा प्राक् प्रीतिं बिभर्तीति च पौनरुक्त्यम् ।
तिस्रः सुतास्तस्य गुणाधिवासः साधोर्यथा गुप्तय एक शीलाः ॥१४५॥

स्वामिन्निति—स्वामिन् ! मम स्वाम्यपि हतारि नृपः ते तव सखा मित्रं प्राक् पूर्वत एव प्रीतिं बिभर्त्ति त्वयि स्निह्यति इति च पौनरुक्त्यम्, एतत्तव ज्ञातमेवेति तत्कथं पिष्टपेषणवन्निरर्थकमित्यर्थः। तर्हि यन्न पौनरुक्त्यं तदेव कथयेत्याह—तस्य हतारिनृपस्य गुणाधिवासाः गुणस्थानानि एकशीलाः समानस्वभावाः तिस्रः गुप्तयः यथा, तथा तिस्रः सुता पुत्र्यः सन्ति ॥१४५॥

दत्त्वोभिके मेघरथाय चैकां तस्याऽनुजायैव महारथाय ।
प्रेमाणमुत्तेजयितुं सतेजाः, सम्बन्धतो वाञ्छति विश्वबन्धो ! ॥१४६॥

दत्त्वेति—विश्वबन्धो ! सर्वोपकारक ! मेघरथाय उभिकेद्वे महारथाय तस्य मेघरथस्यानुजाय कनिष्ठाय दृढरथाय एकामेव दत्त्वा सतेजाः तेजस्वी स हतारिः सम्बन्धतः कुटुम्बभावमाप्य प्रेमाणमुत्तेजयितुमुत्कर्षयितुं वाञ्छति एतेन सम्बन्धेन कृत्वा पूर्वप्रेम्णो वृद्धिरेव भविष्यति इत्यभिप्रायः ॥१४६॥

युक्तं तदेतद्यदि राजराज ! तल्लग्नमुद्वाहमहोत्सवाय ।
ज्योतिर्विदाऽऽवेदयत प्रसद्य प्रत्युत्तरं यच्छत वा ममाऽपि ॥१४७॥

युक्तमिति—तत्ततः एतन्मदुक्तं युक्तं भवते रोचते यदि तर्हि, राजराज ! उद्वाहमहोत्सवाय ज्योतिर्विदा गणकेन कृत्वा तस्य विवाहस्य लग्नं मुहूर्त्तभावे दयत, ममाऽपि वा प्रसद्य प्रत्युत्तरं यच्छत ॥१४७॥

एतत् तदुक्तं हृदये निधाय दैवज्ञमाकार्य तदैव भूपः ।
लग्नं कुमारागमवासरं च निर्दिश्य सत्कृत्य विसृष्टवांस्तम् ॥१४८॥

एतदिति--तेन मन्त्रिणोक्तमेतद्वृत्तं हृदये निधाय स्वीकृत्य भूपः तदैव दैवज्ञं गणकमाकार्याहूय लग्नं कुमारागमवासरं कुमारागमनदिवसञ्च निर्दिश्य कथयित्वा सत्कृत्य भूषणादिना परितोष्य तं सचिवं विसृष्टवान् इति ॥१४८॥

कैश्चिद् दिनैर्मन्त्र्यपि पत्तनं स्वं संप्राप्य संप्राप्तविशिष्टमानः ।
कार्यस्य सिद्धिं विनिवेद्य हृद्यां संतोषयामास धराधिनाथम् ॥१४९

कैश्चिदिति—मन्त्र्यपि शस्यबुद्धिः कैश्चिद्दिनैः कृत्वा स्वं पत्तनं श्रीमन्दिरं नगरं संप्राप्य संप्राप्तविशिष्टमानः विशेषेण सत्कृतः हृद्यां कार्यस्य सिद्धिं धराधिनाथं नृपं हतारिं विनिवेद्य सन्तोषयामास इति ॥१४९॥

प्रस्थापयामास वितीर्य शिक्षां क्षोणीपतिर्मेघरथं कुमारम् ।
तेनाऽनुजेनाऽथ समं समीरः पुष्पं च गन्धेन यथा पुरं तत् ॥१५०॥

प्रस्थेति—अथ क्षोणीपतिः घनरथः शिक्षां वितार्य अवसरोचितमुपदेशं दत्त्वा मेघरथं कुमारं तेनानुजेन दृढरथेन समं शरीरः पुष्पं गन्धेन यथा तत्पुरं श्रीमन्दिरं पुरं प्रस्थापयामास ॥१५०॥

**सामन्तसेनापतिमन्त्रिपुत्र सेनावितानेन नियोजितेन ।**
**सार्धं कुमारौ चलतः स्म भम्भा–वाद्यप्रणादेनपुराकृतेन ॥१५१॥**

सामन्तेति—कुमारौ मेघरथदृढरथौ पुराकृतेन अग्रेसरेण भम्भात्मकेन वाद्यानां प्रणादेन शब्देन, नियोजितेन अनुयोजितेन सामन्तानां सेनापतीनां मन्त्रिपुत्राणां सेनानां च वितानेन समूहेन सार्धं चलतः स्म ॥१५१॥

**यातोस्तयोर्वर्त्मनि राजसून्वो–र्यः प्राभृतं सम्भृतमानिनाय ।**
**तद्दत्तदीनारकदम्बकैः स दारिद्र्यमुद्रां प्रलयं निनाय ॥१५२॥**

यातोरिति—वर्त्मनि मार्गे यातोर्गच्छतोस्तयोः राजसून्वोः राजपुत्रयोः यः जनः सम्भृतं राशीकृतं प्राभृतमुपायनमानिनाय, स जनाः ताभ्यां कुमाराभ्याम् दत्तैः दीनाराणां कदम्बकैः समूहैः कृत्वा दारिद्र्यमुद्राम् दुर्गतिचिह्नं प्रलयं ध्वंसं निनाय प्रापयामास ॥१५२॥

**आमोदयन्तौ क्वचनाऽपि देशा–ध्यध्यक्षकान् न्यायनिरीक्षेण ।**
**समानयन्तौ क्वचनाऽपि भट्टान् सौवर्णभूषावसनप्रदानैः ॥१५३॥**

आमोदेति—क्वचनापि देशाद्यध्यक्षकान् देशे नियुक्तानाधिकारिणः न्यायस्य निरीक्षणेन परीक्षणेन कृत्वा आमोदयन्तौ प्रीणयन्तौ क्वचनापि सौवर्णानां भूषाणां वसनानाञ्च प्रदानैः कृत्वा भट्टान् योधान् समानयन्तौ सत्कुर्वन्तौ ॥१५३॥

**आलोकयन्तौ क्वचनापि किञ्चिद् रम्यं विनोदादवलोक्यमानम् ।**
**संलापयन्तौ क्वचनापि वृद्धान् प्रत्नप्रवृत्तिं वदतोऽनुयुक्तान् ॥१५४॥**

आलोकेति—क्वचनाऽपि अवलोक्यमानं दृश्यमानं किञ्चिद्रम्यं वस्तु विनोदात्क्रीडातः कौतुहलाद्वा आलोकयन्तौ पश्यन्तौ क्वचनापि प्रत्नप्रवृत्तिम् पुरातनवार्तां "पुराणे प्रतन प्रत्नपुरातनचिरंतनाः" इत्यमरः, वदतः कथयतः अनुयुक्तान् अभियुक्तान् वृद्धान् संलापयन्तौ ॥१५४॥

**इत्थं प्रयान्तौ प्रतिवासरं तौ कैश्चित् प्रयाणैर्विगलद्विलम्बैः ।**
**विक्रान्तभूमीन्द्रसुरेन्द्रदत्त देशस्य सोमान्तिकमभ्यगाताम् ॥१५५॥**

तौ कुमारौ प्रतिवासरं प्रयान्तौ गच्छन्तौ सन्तौ इत्थमुक्तप्रकारेण विगलद्विलम्बैः विरामरहितैः कैश्चित्प्रयाणैः प्रस्थानैः कृत्वा विक्रान्तस्य विक्रमशालिनः भूमीन्द्रस्य नृपस्य सुरेन्द्रदत्तस्य देशस्य तदीयराष्ट्रस्य सीमान्तिकम् सीमासमीपमभ्यगाताम् ॥१५५॥

क्ष्मापेण तेन प्रहितोऽथ दूत एत्यावदद् मेघकुमारमेवम् ।
स्वामी द्विधा मेऽस्ति सुरेन्द्रदत्तो हर्यक्षवत् शौर्यनिवासभूमिः ॥१५६॥

क्ष्मापेणेति—अथ तेन क्ष्मापेण सुरेन्द्रदत्तेन प्रहितः प्रेषितः दूतः एत्यागत्य मेघकुमारं मेघरथमेवं वक्ष्यमाणप्रकारेणावदत्, किमित्याह–मे स्वामी द्विधा नाम्ना सुरेन्द्रेण दत्त इत्यर्थेन च सुरेन्द्रदत्तः हर्यक्षवत् सिंहवत् शौर्यनिवास भूमिः शूरनिष्ठोऽस्ति इति ॥१५६॥

ततः किमित्याह—

किञ्चित्तिरस्कारमदृष्टपूर्वी सत्त्वावलिप्तः सुकुमार ! स त्वाम् ।
वक्त्रेण मे वक्त्यद एतकेनाऽगम्यं त्वया नैव पथा कथञ्चित् ॥१५७॥

किञ्चिदिति - कुमारः किञ्चित्तिरस्कारमीषदप्यवज्ञामदृष्टपूर्वी असहिष्णुः अननुभूतपूर्वः सत्त्वेन बलेनावलिप्तः दृप्तः स सुरेन्द्रदत्तः मे मम वक्त्रेण मुखेन कृत्वा अदः वक्ति कथयति, किन्त-दित्याह त्वया एतकेन पथा मार्गेण कथञ्चिद्दुराग्रहादिनाऽपि नैवागम्यं आगन्तव्यम् ॥१५७॥

गमननिषेधे हेतुमाह—

सैन्येन याता तव मामकीनदेशोपसर्गः क्रियते परत्वात् ।
मद्देशसीमानमपास्य तत् त्वं वर्त्माऽपरं संश्रय मङ्गलाय ॥१५८॥

सैन्येनेति—तव सैन्येन याता गच्छता परम्परत्वाद्विशालत्वादन्यत्वाद्वा, नायं मम देश इति बुद्ध्या इति भावः, मामकीनदेशस्योपसर्ग. पीडनं क्रियते करिष्यते । तत्तस्माद्धेतोः त्वम् मद्देशसीमानम् अपास्य त्यक्त्वा मङ्गलाय शुभार्थम् अपरमन्यद्वर्त्म मार्गं संश्रय इति ॥१५८॥

एष्यत्यथो यद्यमुनैव मानाद् गोमायुयूथस्य दशां पुरा तत् ।
पारीन्द्रविभ्राजितकन्दरान्तं, सावेगमायातवतः प्रयासि ॥१५९॥

एष्यतीति--अथो यदि मानादभिमानमाश्रित्य अमुनैव वर्त्मना एष्यति आगमिष्यति, तत्तदा, पुरा पूर्वकाले पारीन्द्रेण सिंहेन विभ्राजितायाः भास्वरायाः कन्दारया गुहायाः अन्तं मध्यं सावेगम् साग्रहमायतवतः आयातस्य गोमायुयूथस्य शृगालसमूहस्य दशामवस्थां प्रयासि प्राप्स्यसि इति ॥१५९॥

इत्युद्धतां तस्य निशम्य वाचं प्रोवाच मेघोऽपि सधैर्यमेनम् ।
नैवेश्वराणां न च किङ्कराणां माहात्म्यमालोकितमस्ति दूत ! ॥१६०॥

इतीति—तस्य दूतस्येत्युक्तप्रकारामुद्धतां वाचं निशम्य मेघः मेघरथोऽपि एनं दूतं सधैर्यम् प्रोवाच, किमित्याह–दूत ! नैवेश्वराणां राज्ञाम्, न च किंकराणां भृत्यानां माहात्म्यं महत्त्वमालोकितं दृष्टमस्ति, ईश्वरो भृत्यो वा महानिति न ज्ञायते मया ॥१६०॥

सोऽपि त्वदीयः प्रभुरात्मगेहे शौर्यं वदन् स्वस्य कथं निषेध्यः ? ।
किंवा न दृष्टाः स्वमठे निविष्टाः स्वं स्वं मतं दर्शनिनो वदन्तः ? ॥१६१॥

सोऽपीति—सः तव प्रेषयिता त्वदीयः प्रभुः सुरेन्द्रदत्तः आत्मगेहे स्वगृहे, नत्वन्यत्रेति काकु, स्वस्य शौर्यम् वदन् कथमान कथं निषेध्यः निवार्यः, स्वगृहे सर्व एव बलवान् भवतीति भावः। तत्र दृष्टान्तमाह—स्वमठे आत्मचैत्यादौ निविष्टाः स्थिता दर्शनिनः स्वस्वदर्शनज्ञाः स्वं स्वं मतं वदन्त' समर्थयन्तः न वा दृष्टाः किम्, अपितु दृष्टा एव ॥१६१॥

गेहे समायान् विनिवार्यते न, कश्चिद् महद्भिः किमु क्वापि देशे ? ।
अस्मान् निषिध्यन् स तु दूरतोऽपि यत् सात्त्विकोऽवाचि स पक्षपातः ॥१६२॥

गेहे इति—महद्भिः महाशयैः गेहे गृहेऽपि समायान् आगच्छन् कश्चित्, किमुत, राजपुत्रादिः, न नैव विनिवार्यते स्वदेशे कथं निवारणीयः? इत्यर्थः। स तव स्वामी सुरेन्द्रदत्तस्तु दूरतोऽपि दूरत एवास्मान् निषिध्यन् निवारयन् यत् सात्त्विकः अहं यद्वा यत्सात्त्विकः पराक्रमिकोऽवाचि प्रजाजनैरिति शेषः स राज्ञो भयाद् तद्रागदृष्ट्या वा तथोक्तिः अहं पराक्रमिक इति सन्नित्येवमवाचि स पक्षपातः स्वमत्या, न तु लोकमत्याऽपीत्यर्थः ॥१६२॥

देशस्य सीमामपि संस्पृशन्तो, ये चोपसर्गं रचयन्ति तेऽन्ये ।
स्वाभासमन्यं खलु मन्यमाना यद्वा खलाः क्वापि न विश्वसन्ति ॥१६३॥

देशस्येति—ये देशस्य सीमामपि संस्पृशन्त.' सीमायामुपस्थिता एवोपसर्गं प्रजापीडनं रचयन्ति कुर्वन्ति, ते अन्ये, नत्वस्मादृशा, एवञ्च मयि तथाऽऽरोपो निष्कारण इति भाव', तदेवाह-यद्वा खलाः अन्यं स्वेतरं स्वाभास स्वात्मवत् मन्यमानाः खलुः क्वापि सज्जनेऽपि न विश्वसन्ति इति ॥१६३॥

न क्षत्रियाणां तनयाः परेऽपि पन्थानमूरीकृतमुत्सृजन्ति ।
राजाधिराजस्य वयं तु पुत्रा-स्त्यक्तुं किमुत्साहमपि प्रकुर्मः ? ॥१६४॥

नेति—परेऽन्येऽपि क्षत्रियाणां तनयाः सामान्यराजपुत्राः अपि ऊरीकृतं स्वकृतं पन्थानं मार्गं न उत्सृजन्तिः त्यजन्ति, वयं तु राजाधिराजस्य पुत्राः सन्तः त्यक्तुं मार्गमिति वर्तितुमुत्साहं साहममपि किं कथं प्रकुर्मः ? नैव प्रकुर्म इत्यर्थः ॥१६४॥

एतेन मार्गेण समाव्रजाम-स्तत्सिंहवृत्तेः समवेक्षणाय ।
दूतस्त्वमध्यस्त्वमहो ! मयाहि वृत्तान्तमेतं प्रवदाऽऽशु तस्य ॥१६५॥

एतनेति-तत्तो हेतोः सिंहवृत्ते. सिंहतुल्यचरितस्य समवेक्षणाय दर्शनाय, वस्तुतस्तु तन्मदनाशायै वे'त काकु.। एतन'रीकृतेन मार्गेण समाव्रजामः, अहो ! त्वं तु दूतः, अत एव,

अवध्यः, तथा नीतिरिति भावः॥ प्रयाहि गच्छ, तस्य सुरेन्द्रदत्तस्य एतं वृत्तान्तं समाचारमाशु शीघ्रं प्रवद कथय ॥१६५॥

इत्युद्भटां तस्य निशम्य वाचं प्रोवाच दूतः स तदैव गत्वा,।
स्वस्वामिने मानसमुन्नताय कुत्राऽपि दूता नहि वञ्चकाः स्युः ॥१६६॥

इतीति—तस्य मेघरथस्य इत्युक्तप्रकारामुद्भटामुग्रां वाचं निशम्य स दूतः तदैव गत्वा मानसमुन्नताय अभिमानिने स्वस्वामिने सुरेन्द्रदत्ताय प्रोवाच, ननु किमिति न गोपितवानित्याह हि यतः दूताः कुत्रापि वञ्चकाः कपटिनो नहि स्युः न भवेयुः, यथार्थवक्तृत्वे सत्येव दूतत्वं निर्वहतीति भावः ॥१६६॥

तत्सर्वमाकर्ण्य सुरेन्द्रदत्तक्ष्मापोऽपि तस्मात् प्रतिघाऽरुणाक्षः।
संवर्मयामास तदैव सैन्यं योद्धुं पुनः प्रास्थित वाद्यनादैः ॥१६७॥

तदिति—तत्सर्वं मेघरथोक्तमाकर्ण्य सुरेन्द्रदत्ताख्यः क्ष्मापः नृपोऽपि तस्मात्तदुक्तिश्रुतेः "कोप क्रोधामर्षरोषप्रतिघा" इत्यमरोक्तेः प्रतिघेन क्रोधेन अरुणाक्षः रक्तनेत्रः सन् सैन्यं संवर्मयामास सज्जितमकरोत्, तदैव पुनः वाद्यनादैः कृत्वा योद्धुम् प्रास्थित अभियानमकरोत् ॥१६७॥

सैन्योत्थितान्यभ्यधिकं रजांसि विन्यासयन् मूर्धसु सैनिकानाम्।
शान्तप्रतापानलधूमभानि संग्रामभूप्राङ्गणमासदत् सः ॥१६८॥

सैन्योत्थीति—स सुरेन्द्रदत्तः सैन्यैरुत्थितानि उद्धूतानि शान्तस्य भविष्यद्विनाशस्य प्रतापरूपस्यानलस्याग्नेः धूमभानि धूमसदृशानि अभ्यधिकं यथा स्यात्तथा रजांसि धूलिः सैनिकानां मूर्धसु मस्तकेषु विन्यासयन् स्थापयन् सङ्ग्रामम् भूप्राङ्गणम् रणभूमिमासदत् ॥१६८॥

अभ्यापतत् सैन्यमवेक्ष्य शत्रोः सुत्रामसैन्यस्य जये समर्थः।
आरूढवान् मेघरथो रथं स्वं सार्धं बलाढ्येन निजाऽनुजेन ॥१६९॥

अभ्येति—शत्रोः प्रतिपक्षस्य सैन्यमवेक्ष्य रथमारूढवान् आरूढः सन् सूत्रामसैन्यस्येन्द्रबलस्यापि जये पराभवे समर्थः मेघरथः बलाढ्येन समधिकबलवता निजानुजेन दृढरथेन सार्धमभ्यापतद्धावति स्म ॥१६९॥

सैन्यद्वयस्याऽपि महाभटास्ते स्वस्वामिनिर्देशमृतेऽपि बाणान्।
अन्योन्यविध्वंसनमानसाः स्म सावेगहुङ्कारभृतः क्षिपन्ति ॥१७०॥

सैन्येति—सैन्यद्वयस्य पक्षद्वयगतसैन्यस्यापि ते उत्साहवन्तः महाभटाः स्वस्वामिनः निर्देशमाज्ञामृते विनाऽपि अन्योन्यम् विध्वंसनमनसा' वधेच्छवः सावेगम् सरोषं हुङ्कारभृतः हुंकारं कुर्वन्तः बाणान् क्षिपन्ति स्म इति ॥१७०॥

अभ्यापतन्ती पतितारिमुक्ता बाणावली मेघरथस्य वीरैः ।
दूराद् विलूना निशितैः क्षुरप्रैः स्वस्वामिकार्याऽकरणादिवाऽरम् ॥१७१॥

अभ्येति—अरिभिः शत्रुसैन्यैः मुक्ता क्षिप्ता अभ्यापतन्ती समागच्छन्ती बाणावली बाणपंक्ति मेघरथस्य वीरैः सैन्यैः दूरादेव स्वस्वामिनः कार्यस्य अकरणात् अपराधादिवारम् शीघ्रं निशितैः तीक्ष्णैः क्षुरप्रैः तदाख्यबाणैः "क्षुरप्रो बाणभेद." इत्यमरः । विलूना छिन्ना सती पतिता इति ॥१७१॥

बाणेन भिन्नो हृदि कश्चनाऽपि, वैरिप्रणुन्नेन ममार वीरः ।
नैवाऽसिना कश्चन मस्तकेऽपि कर्माऽऽर्हतास्तेन विदुर्बलीयः ॥१७२॥

बाणेनेति—कश्चन वीरः वैरिप्रणुन्नेन शत्रुमुक्तेन बाणेन हृदि भिन्नः विद्धः सन् ममार मृतः, कश्चन मस्तके अपि असिना कृपाणेन भिन्न इति सम्बध्यते, नैव ममारेति सम्बध्यते, तेन हेतुना आर्हताः जैनाः कर्म बलीयः विदुः कथयन्ति ॥१७२॥

पृथ्वीभुजो मेघरथस्य सैन्ये प्रत्यर्थिवीरैर्निहताः पृथिव्याम् ।
केचिद् निपेतुः परिरम्भवृत्त्या प्रख्यापयन्तः प्रियतामिवैके ॥१७३॥

पृथ्वीति—पृथ्वीभुजः राज्ञो मेघरथस्य सैन्ये प्रत्यर्थिवीरैः शत्रुसैन्यैः निहताः केचित् एके प्रियतां प्रेम प्रख्यापयन्तः इव परिरम्भवृत्त्या आलिङ्गनमुद्रया पृथिव्यां निपेतुः प्रेम्णा हि आलिङ्गनं कुर्वन्तीति भावः । हस्तौ प्रसार्य निपेतुरित्यर्थः ॥१७३॥

सैन्यं विलोक्याऽऽकुलितं स्वकीयं तौ वैरसैन्येन ततः कुमारौ ।
जन्याय सामर्षमुदस्थिषातां यद् दुःसहो वैरिपराभवोऽत्र ॥१७४॥

सैन्यमिति—वैरिणः प्रतिपक्षस्य सैन्येन स्वकीयं सैन्यमाकुलं पीडितं वीक्ष्यावलोक्य ततः तौ कुमारौ मेघरथदृढरथौ सामर्षं सक्रोधम् यथा स्यात्तथा जन्याय युद्धायोदस्थिषाता-मुत्थितौ, युद्धयतेऽत्र रणभूमौ दुःसहः वैरिणा कृतः पराभवः पराजयः नहि कोऽपि वैरिकृतमात्म-पराभवं सहते इत्यर्थः ॥१७४॥

सादी प्रसादी न बभूव कश्चित् कश्चिन्निषादी न तथा विषादी ।
कश्चित् पदातिर्विपदाऽतिरिक्त-स्तस्थौ तयोर्यः पुरतो भटोऽपि ॥१७५॥

सादीति—तयोः मेघरथदृढरथयोः पुरतोऽग्रे कश्चित् कोऽपि सादी अश्ववारः प्रसादी प्रसन्नो न, तस्थौ इति यद्वा न बभूव जयाभावात्, प्रहारप्राप्तेरिति भावः, तथा कश्चि-न्निषादी हस्तिपको विषादी खिन्नस्सन् न तथा यः कश्चिद् भटोऽपि शूरोऽपि विपदाऽतिरिक्तः विपदा विनिर्मुक्तस्तस्थौ नेति सम्बध्यते इति सर्वत्र सम्बध्यते, प्रहारप्राप्तिरिति भावः, तथा

कश्चिन्निषादी हस्तीपको विषादी खिन्नो न तस्थौ मृत्योर्भयादिति भावः, तथा यः कश्चिद् भटः वीरोऽपि पदातिः पत्तिः स विपदाकृत्वा अतिरिक्तः समृद्धः अत्यन्तं विपन्नः तस्थौ । तयोः प्रहारस्यानिवार्यत्वादसह्यत्वाच्चेति भावः ॥१७५॥

**निर्वासितं सैन्यमवेक्ष्य सर्वं सर्वंसहाधीशसुरेन्द्रदत्तः ।**
**तावभ्यधावद् युवराट्समेतः किं वा न कुर्वन्त्यसमानमानाः ? ॥१७६॥**

निर्वासितमिति--सर्वं सहायाः पृथिव्याःअधीशः सुरेन्द्रदत्तः सर्वं सैन्यं निर्वासितं पलायितमवेक्ष्य युवराज्ञा समेतः सहितः तौ मेघरथदृढरथौ प्रत्यभ्यधात्, तदेव समर्थयति असमानमानाः असाधारणमानवन्तः किं वा अभिधावनादिकं न कुर्वन्ति ? अपि तु सर्वमेव कुर्वन्ति इति ॥१७६॥

**साकं कुमारेण महाबलेन नानायुधैरेषु ततान युद्धम् ।**
**तस्यानुजेनाऽपि समं तदीयः सूनुः प्रसूनायुधरूपधेयः ॥१७७॥**

साकमिति--एष सुरेन्द्रदत्तः महाबलेन कुमारेण मेघरथेन साकं नानायुधैः विविधैरस्त्रैः कृत्वा युद्धमाततान चकार, प्रसूनायुधरूपधेयः कामतुल्यसुन्दरः तदीयः सुरेन्द्रदत्तस्य सूनुः पुत्रः तस्य मेघरथस्यानुजेन दृढरथेनापि समं सह, युद्धं ततानेति सम्बध्यते ॥१७७॥

**बाढं शराशर्यभितोऽपि खड्गा-खड्गि प्रकृष्टं च भुजाभुजीदम् ।**
**तेषां चतुर्णामपि तत्र तन्न वृत्तं न यत् तव्द्यवहारभाजाम् ॥१७८॥**

बाढमिति--तेषां चतुर्णाम् सुरेन्द्रदत्त-मेघकुमार-सुरेन्द्रदत्तपुत्र-दृढरथानामपि तत्र युद्धे बाढं भृशं शराशरि शरैश्च शरैश्च प्रहृत्य, अभितः समन्तात् खड्गाखड्गि खड्गैश्च खड्गैश्च प्रत्याहृत्याऽपि, प्रकृष्टमत्यन्तश्च भुजाभुजि भुजाभ्यां भुजाभ्यां च प्रहृत्य इदं युद्धं वृत्तम् प्रवृत्तम्, तद्व्यवहारभाजाम् योधानाम् यन्नभवति तन्न तदेव नाभूदित्यर्थः । सर्वप्रकारेण युद्धं वृत्तमित्यर्थः ॥१७८॥

**ताभ्यां चिरं राजकुमारकाभ्यां तौ खेदयित्वेति रणानभिज्ञौ ।**
**सन्मार्गभङ्गप्रवणावितीव संप्रापितौ बन्धनकष्टकर्म ॥१७९॥**

ताभ्यामिति--ताभ्यां राजकुमारकाभ्यां मेघरथदृढरथाभ्यां चिरं तौ सुरेन्द्रदत्ततत्पुत्रौ खेदयित्वा पराभूय रणानभिज्ञौ युद्धविधि ज्ञानाभाववन्तौ इति कृत्वा सन्मार्गस्य भङ्गे त्यागे प्रवणौ पटू इतीव दुष्टाविव बन्धनात्मकं कष्टं कर्म सम्प्रापितौ, बद्धावित्यर्थः ।।१७९॥

**देशे तदीयेऽपि नियोगिनः स्वानावास्य संवासितकीर्तिवासौ ।**
**श्रीमन्दिरं पत्तनमीयतुस्तौ प्रोत्तुङ्गसौधावलिमालितं तत् ॥१८०॥**

देशे इति—तदीये सुरेन्द्रदत्तस्य देशे मण्डलेऽपि स्वान् नियोगिनः अधिकारिणः आवास्य स्थापयित्वा संवासितः निर्मितः कीर्तिवासः कीर्तिगृहं याभ्याम्, यद्वा परिहितकीर्तिवासनौ, कीर्तिमन्तावित्यर्थः तौ कुमारौ प्रतुङ्गाभिः अत्युच्चाभिः सौधावलिभिः प्रासादपंक्तिभिः मालितम् समन्वितम् श्रीमन्दिरं तदाख्यं पत्तनमीयतुः प्रापतुः ॥१८०॥

श्रीमन्दिराभिख्यपुराधिनाथः श्रुत्वा पुराऽभ्यर्णमुपागतौ तौ ।
प्रत्युज्जगाम प्रसरत्प्रमोदः सैन्योर्मिभिः सिन्धुरिवेन्दुवृद्धौ ॥१८१॥

श्रीति—श्रीमन्दिराभिख्यपुराधिनाथः पुरा प्रगेव अभ्यर्णं समीपमुपागतौ तौ श्रुत्वा इन्दुवृद्धौ चन्द्रवृद्धौ सिन्धुः सागरइव सैन्योर्मिभिः सैन्यरूपैः तरङ्गैः कृत्वा प्रसरत्प्रमोदः वर्धमानहर्षः प्रत्युज्जगामाभिययौ ॥१८१॥

तावर्थकामाविव पुण्ययोगाद् न्यायप्रतापाविव मूर्तिबद्धौ ।
प्रावीविशत् तोरणराजिराजि क्ष्मावासवः स्वीयपुरं सपौरः ॥१८२॥

ताविति—तौ कुमारौ पुण्ययोगात् पुण्यसम्बन्धादर्थकामाविव मूर्तिबद्धौ मूर्तिमन्तौ न्यायप्रतापाविव तौ कुमारौ क्ष्मावासवः श्रीमन्दिरपुरनृपः सपौरः सनागरः तोरणानां राजिभिः राजि शोभिमानं स्वीयपुरं स्वनगरं प्राविविशत्प्रवेशं कारयामास ॥१८२॥

पुत्र्योर्द्वयोर्मेघरथेन पाणि-मग्राहयद् भूमिपतिः सुलग्ने ।
प्राग्वत्सलायाः प्रियमित्रिकायाः किञ्चित् ततोऽस्याश्च मनोरमायाः ॥१८३॥

पुत्र्योरिति—भूमिपतिः नृपः सुलग्ने सुमुहूर्ते प्राक्पुरा वत्सलायाः प्रियमित्रिकायाः तदाख्यायाः, किञ्चित्ततः किञ्चित्कालानन्तरमस्या मनोरमायाः तदाख्यायाश्च द्वयो ज्येष्ठक्रमेण मेघरथेन पाणिमग्राहयत् इति ॥१८३॥

तस्याऽनुजन्मा सुमतिं द्विधाऽपि कन्यां कनिष्ठां कनकावदाताम् ।
शस्तामुपायंस्त गुणैर्विचित्रै-रामानुजन्मोर्मिलिकामिवाऽऽर्यः ॥१८४॥

तस्येति—तस्य मेघरथस्यानुजन्माऽनुजः आर्यः दृढरथः कनिष्ठां कनकावदाताम् सुवर्णवर्णाम्, रामानुजन्मा लक्ष्मणऊर्मिलिकामिव विचित्रैः, यद्वा—रामानुजन्मनः कृष्णस्योर्मिलिकाम् अङ्गुरीयकमिव स्थिताम् विचित्रैः गुणैः शस्ताम् प्रशस्याम् द्विधा नाम्ना अर्थतोऽपि सुमतिं कन्यामुपायंस्त ॥१८४॥

दत्त्वा दुकूलानि विभूषणानि राज्यस्वभूतानि गजाश्वकानि ।
त्रीणि प्रयाणान्यनुगम्य चाथ जामातरौ तौ विससर्ज भूपः ॥१८५॥

दत्त्वेति—अथ विवाहानन्तरं भूपः दुकूलानि सूक्ष्मवस्त्राणि भूषणानि राज्यस्वभूतानि राज्यसाररूपाणि गजाश्वकानि गजवाजिसमूहानि दत्त्वा त्रीणि प्रयाणानि यावदनुगम्यानुसृत्य च, तथा व्यवहारादितिभावः । तौ जामातरौ विससर्ज ॥१८५॥

पुत्रान्वितं तं च सुरेन्द्रदत्तं व्यापार्य तन्नीवृति निर्वृतौ तौ ।
तां राजधानीं जनकस्य पुण्यैः क्षेमेण संप्रापतुरृद्धिऋद्धौ ॥१८६॥

पुत्रेति—तौ मेघरथदृढरथौ पुत्रान्वितं तं वृद्धं सुरेन्द्रदत्तञ्च तन्निवृति तस्मिन् देशे व्यापार्याधिकृत्य निर्वृतौ सुखिनौ सन्तौ यद्वा निवृत्तौ पश्चाद्वलितौ तौ मेघरथदृढरथौ पुत्रान्वितञ्च तं वृद्धं सुरेन्द्रदत्तं तन्निवृति तस्य देशे व्यापार्य अधिपतिं निर्माय जनकस्य पितुः पुण्यैः ऋद्धि-ऋद्धौ सम्पत्समन्वितौ क्षेमेण सकुशलं तां राजधानीं सम्प्रापतुः ॥१८६॥

लोकोत्तरं तातपदारविन्दसेवाफलं वैषयिकं सुखं तौ ।
ताभिः प्रियाभिः सह संश्रयन्तौ कालं चिरं निन्यतुरेकचित्तौ ॥१८७॥

लोकोत्तरमिति—तौ मेघरथदृढरथौ एकचित्तौ समानविचारौ ताभिः प्रियाभिः सह तातस्य पितुः पदारविन्दयोः सेवायाः फलं लोकोत्तरमलौकिकम् वैषयिकं सुखं संश्रयन्तौ भुञ्जानौ चिरं कालं निन्यतुः व्यतीयतुः ॥१८७॥

ज्येष्ठा प्रिया मेघरथस्य पुत्रं सूते स्म काले किल नन्दिषेणम् ।
अन्या पुनः सज्जनचित्ततापमेघप्रभं मेघमुपान्तसेनम् ॥१८८॥

ज्येष्ठेति--मेघरथस्य ज्येष्ठा प्रिया प्रियमित्रिका काले यथावसरं किल नन्दिषेणं तदाख्यं पुत्रं सूते स्म, पुनः अन्या द्वितीया प्रिया मनोरमा सज्जनचित्ततापस्य मेघप्रभं मेघवन्नाशक-मुपान्तसेनम् मेघं मेघसेनमित्यर्थः, पुत्रं सूते स्मेति सम्बध्यते ॥१८८॥

भार्या क्रमात् तस्य कनीयसोऽपि प्रासूत सूनुं रथसेनसंज्ञम् ।
जाम्योस्तयोः स्वस्य सुतोपपत्त्या प्रद्योतयन्तीव तृतीयभावम् ॥१८९॥

भार्येति—तस्य कनीयसः कनिष्ठस्य दृढरथस्य भार्या सुमतिरपि क्रमात् रथसेनसंज्ञं सूनुं प्रासूत, कथम्भूता सेत्या शङ्कायामाह—जाम्योः स्वस्रोः स्वस्य सुतोपपत्या पुत्रोत्पत्या वा तयोः जाम्यो. स्वस्रोः स्वस्य सुतोपपत्या पुत्रलाभेन तृतीयभावं प्रद्योतयन्ती इव, पूर्वं तु द्वैतमेव, सुतलाभेन च त्रैतमिति भावः प्रद्योतयन्ती विजृम्भन्ते इव ॥१८९॥

अन्तः पुरान्तर्गतशालिकायामन्येद्युरासीनमिलावलारिम् ।
पुत्रैः कलत्रैः सह नप्तृभिश्चताराभिरृक्षैरिव चन्द्रमभ्रे ॥१९०॥

नत्वा सुसेनापणसुन्दरी तं सेना समाक्रान्तचतुर्दिगन्तम्।
पाणौ दधाना कृकवाकुमीदृक् चित्रं मुदा विज्ञपयाम्बभूव ॥१९१॥युग्मम्॥

अन्तरिति—अन्येद्युः अन्तः पुरान्तर्गतायां शालिकायां गृहे पुत्रैः कलत्रैः नप्तृभिः पौत्रैश्च सह अभ्रे आकाशे ताराभिः ऋक्षैः ग्रहैः चन्द्रमिवासीनमुपविष्टमिलायाः बज्रारिम् पृथिवीवासवं घनरथम् नत्वा सुसेनाख्या आपणसुन्दरी परमसुन्दरी पणाङ्गना पाणौ कृकवाकुं कुक्कुटं दधाना, सेनाभिः समाक्रान्ताः वशीकृताश्चतुर्दिगन्ता येन तं सार्वभौमं तं घनरथं मुदा सहर्षम् ईदृक्वक्ष्यमाणप्रकारं चित्रमाश्चर्यं विज्ञपयाम्बभूव ॥१९०॥१९१॥

तद्विज्ञप्तिमेवाह—

स्वामिन्! मदीयः कृकवाकुरेषः नो जीयतेऽन्यैः कृकवाकुचक्रैः।
श्येनः कदाचिच्चटकैरिवोग्रैर्बलाद् द्विजिह्वैरिव वैनतेयः ॥१९२॥

स्वामिन्निति—स्वामिन्! मदीय एष कृकवाकुः कुक्कुटः अन्यैः कृकवाकूनां चक्रैः समूहैरपि नो नैव जीयते पराभूयते, क इव तदाह—श्येनः स्वनामख्यात. पक्षी कदाचिदपि चटकैः स्वनामख्यातैः क्षुद्रपक्षिभिरिव, वैनतेयः गरुडः बलात् उग्रैः उत्कटैः द्विजिह्वैः सर्पैरिव। मालोपमालङ्कारः ॥१९२॥

एतं मदीयं यदि ताम्रचूडमन्यस्य कस्याऽपिहि ताम्रचूडः।
उद्दामसारस्तु पराजयेत दीनारलक्षं वितरामि तस्मै ॥१९३॥

एतमिति—यदि एतं मदीयं ताम्रचूडं कुक्कुटम्, उद्दामसारः उत्कटबलवान् अन्यस्य कस्यापि ताम्रचूडः पराजयेत अतिक्राम्येत् तु हि तदा, तस्मै दीनारलक्षं वितरामि ददामि इति ॥१९३॥

अत्राऽपि कस्याऽपि जनाधिनाथ! यद्यस्ति शक्तः कृकवाकुरङ्ग!।
एतं प्रतिज्ञापणमुद्धतं मे बुद्धिप्रसक्तः स पराकरोतु ॥१९४॥

अत्रापीति—अङ्ग! जनाधिनाथ! यदि अत्रापि भवत्समीपेऽपि कस्यापि कृकवाकुः शक्तः बलवानस्ति, स बुद्धिप्रसक्तः बुद्धिमान् एतमुद्धतमुदग्रं मे मम प्रतिज्ञारूपं पणं पराकरोतु भनक्तु ॥१९४॥

एतत् समाकर्ण्य दृढस्य मात्रा प्राणेश्वरक्रोडनिविष्टयोचे।
एतेन निर्दिष्टपणेन तन्मे स्वं कुक्कुटं योधय कुर्कुटेन ॥१९५॥

एतदिति—एतत्पणाङ्गनोक्तं समाकर्ण्य दृढस्य दृढरथस्य मात्रा जनन्या प्राणेश्वरक्रोड-निविष्टया स्वपत्युत्सङ्गस्थितया सत्या ऊचे कथितम्, किमित्याह—तत्ततः एतेन निर्दिष्टेन दीनारलक्षं वितरामीत्येवं रूपेण पणेन स्वकुक्कुटं मे मम कुक्कुटेन योधय इति ॥१९५॥

आमेति राज्ञाऽभिहिते प्रसन्ना देवी ततः सा सुमनोरमाख्या ।
स्वं वज्रतुण्डं चरणायुधं त-मानाययामास तदैव दास्या ॥१९६॥

आमेतीति— राज्ञा आम स्वीकारार्थमव्ययमेतत्, इत्युक्ते स्वकृते सति ततः सा सुमनोरमाख्या देवी प्रसन्ना स्वं तम् वज्रतुण्डं तदाख्यं वज्रवत्कठोरचञ्चुं वा चरणायुधं कुक्कुटं "कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः" इत्यमरः । तदैव दास्या द्वारा आनाययामास ॥१९६॥

संतुष्टया वाहनतोऽपि किञ्चित् पद्मावतीदेवतया वितीर्णम् ॥
मूर्ध्नौ प्रतापं प्रवरप्रसादं शोणाभचूडोपधिना दधानौ ॥१९७॥
आनीतमात्रावपि तत्र चैतौ पदैर्विचित्रां गतिमादधानौ ।
स्फारैर्नखैरुच्छ्रितकेसराग्रौ क्रोधोद्धतौ युद्धमहो ! व्यधत्ताम् ॥१९८॥

॥ युग्मम् ॥

सन्तुष्टयेति—वाहनतः वाहनभावाद् सन्तुष्टया प्रसन्नया पद्मावतीदेवतया वितीर्णं दत्तं प्रवरप्रसादं वररूपं प्रसादं प्रतापं तेजोरूपं मूर्ध्ना मस्तकेन शोणाभया रक्तया चूडया एव उपधिना छलेन दधानौ तत्र राजसमीपे आनीतमात्रावपि आनीतौ एव पदैः कृत्वा विचित्रां विलक्षणां गतिमादधानौ एतौ द्वौ ताम्रचूडौ क्रोधोद्धतौ सन्तौ, अतएव, उच्छ्रिताः उन्मेषिताः केसराणां रोम्णामग्राभ्यां तौ तादृशौ स्फारैः तीक्ष्णैः नखैः अहो आश्चर्यं युद्धं व्यधत्ताम् ॥१९७॥१९८॥

व्योम्न्युत्पतन्तौ सुतरां पतन्तौ भूमौ चिरं सङ्गरमाधिषाताम् ।
कौतूहलं विश्वदृशां दिशन्तौ धात्रा प्रयुक्ताविव कन्दुकौ तौ ॥१९९॥

व्योम्नीति—व्योम्नि आकाशे उत्पतन्तावुत्प्लवन्तौ सुतरां भूमौ पतन्तौ चिरं सङ्गरं युद्धमाधिषातामकार्ष्टाम्, धात्रा ब्रह्मणा प्रयुक्तौ कन्दुकाविव विश्वदृशाम् सर्वलोकनेत्राणां कौतूहलं दिशन्तौ कुर्वाणौ तौ चिरं सङ्गरमाधिषातामकार्ष्टाम् इति ॥१९९॥

अन्योन्यचञ्चुक्रमघातनिर्यद्रक्तौघसंरक्तमभूच्छरीरम् ।
सिन्दूरसंवासनकेलिकर्म-कुर्वाणयोरेतकयोरिवाऽत्र ॥२००॥

अन्योन्येति—अत्र युद्धे एतकयोर्द्वयोः कुक्कुटयोः सिन्दूरेण संवासनात्मिकायाः केलेः क्रीडाया कर्मकुर्वाणयोः इव अन्योन्यं परस्परं चञ्च्वा क्रमाभ्याञ्च घातैः प्रहारैः कृत्वा निर्यद्भिः रक्तौघैः शोणितैः संरक्तं शरीरमभूत् ॥२००॥

एतं जयश्रीरधुना वृणीते भूयस्तमां प्रोचुरिदं जनौघाः ।
माध्यस्थ्यमास्थाय तयोरतिष्ठद् युद्धातिरागादिव साऽपि भीता ॥२०१॥

एतमिति—जनौघाः लोकाः अधुना जयश्रीः एतम् वृणीते इदं वचनं भूयस्तमां पुनः पुनः प्रोचुः, साऽपि तयोः युद्धातिरागात् युद्धेऽधिकोत्साहात् मृतौ इव तयोः कुक्कुटयोः माध्यस्थ्यमास्थायाश्रित्यातिष्ठत्, द्वयोः कोऽपि न जीतवानित्यर्थः ॥२०१॥

महाविवैतावतियुध्यमानौ वीक्ष्याऽवदद् भूमिभुजां पुरोगः।
नैवेतयोरेकतरोऽपि जेता बिभ्राणयोः सारमिवैकतुल्यम् ॥२०२॥

महेति—भूमिभुजां पुरोगोऽग्रेसरः घनरथः महौ महिषौ इव एतौ कुक्कुटौ अत्यन्तं युध्यमानौ वीक्ष्यावदत्, किमित्याह—एकतुल्यं समानं सारं बलं बिभ्राणयोः आश्रितयोरेतयोः कुक्कुटयोः एकतरोऽपि जेता नेति ॥२०२॥

नीत्वा वचः कर्णपथे सकर्णस्तातस्य तद् मेघरथो बभाण।
किं कारणं नाथ! न चैतयोर्यत् कस्याऽपि भङ्गोऽत्र जयो न चाऽपि? ॥२०३॥

नीत्वेति—तातस्य पितुः वचः कर्णपथे नीत्वा श्रुत्वेत्यर्थः, सकर्णः बुद्धिमान् मेघरथः तत्तदा बभाणोचे, किमित्याह—नाथ! किं कारणं यत् एतयोः द्वयोः कुक्कुटयोः अत्र युद्धे कस्याप्येकस्य भङ्गः पराजयः न, जयोऽपि च न, तत्र किं कारणमिति कथयेत्यर्थः ॥२०३॥

राजा ततो वित्त्रितयाश्रयोऽसौ प्रोचे जनाः! प्राग्भववृत्तवृत्तम्।
आख्यायमानं मयका यथावत् कृत्वाऽवधानं शृणुतेदमीयम् ॥२०४॥

राजेति—ततस्तत्प्रश्नानन्तरम्, विदां ज्ञानानां त्रितयस्य तीर्थंकरत्वादागर्भवासाद् मतिश्रुतावध्यात्मकस्याश्रयः असौ राजा घनरथः प्रोचे, किमित्याह—जनाः! इदमीयं कुक्कुटद्वय-सम्बन्धि मयका आख्यायमानं कथ्यमानं प्राग्भववृत्तमवधानं कृत्वा सावधाना इत्यर्थः, यथा-वद्यथाभूतं शृणुत ॥२०४॥

प्राग्द्वीपगैरावतवर्षमध्येऽस्त्याढयं पुरं रत्नपुरं समृद्धया।
तत्रातिहार्दौ वणिजावभूतां दत्तस्तथाऽन्यो धनवस्त्रमिरव्यः ॥२०५॥

प्रागिति—प्राग्द्वीपस्य जम्बूद्वीपस्यैरावतवर्षस्य मध्ये समृद्धया आढ्यं समन्वितं रत्नपुरं तदाख्यं पुरमस्ति, तत्र पुरे अतिहार्दौ अत्यन्तप्रीतिमन्तौ दत्तः तथाऽन्यः धनवस्त्रभिख्यः वाणि-जावभूताम् ॥२०५॥

दाहज्वरार्ताविव तावशान्ततृष्णौ पुरग्रामसुगोकुलेषु।
संभृत्य पण्यैः शकटाननेकैर्लाभार्थिनावभ्रमतामजस्रम् ॥२०६॥

दाहेति—दाहज्वरेणार्त्तौ पीडिताविव अशान्ततृष्णौ अत्यन्तपिपासाकुलौ, अतिलुब्धौ च तौ द्वौ वणिजौ परेषु ग्रामेषु सुगोकुलेषु व्रजेषु च अनेकैः पण्यैः क्रयाणकैः शकटान् संभृत्य पूरयित्वा लाभार्थिनौ सन्तावजस्रं सन्ततमभ्रमताम् ॥२०६॥

तृष्णाबुभुक्षापरिभूयमानान् श्रान्तान् परिक्लान्तियुजोऽतिभारैः ।
तौ सौरभेयान् दृढयष्टिघातसङ्घातनैर्वाहयतः स्म नित्यम् ॥२०७॥

तृष्णेति—तौ वणिजौ तृष्णया बुभुक्षया च परिभूयमानान् खिद्यमानान् अतिभारैः श्रान्तान् कृत्वा परिक्लान्तियुजः प्राप्तपीडान् सौरभेयान् बलीवर्दान् "अनड्वान् सौरभेयो गौरि" त्यमरः । दृढयष्टीनां घातसङ्घातनैः प्रहारपरम्पराभिः कृत्वा नित्यं वाहयतः स्म ॥२०७॥

उच्छूनपृष्ठानि तपोपतापाद् भारातिरेकाच्च गवामपुण्यौ ।
निस्सार्य रक्तं निशितक्षुरेण तप्तायसा तापयतः स्म हा ! धिक् ॥२०८॥

उच्छूनेति—अपुण्यौ क्रूरकर्माणौ तौ तपस्यातपस्य उपतापात् भारातिरेकाधिक्याच्च गवामुच्छूनपृष्ठानि सशोफपृष्ठप्रदेशान् निशितेन तीक्ष्णेन क्षुरेणास्त्रविशेषेण रक्तं निस्सार्य तप्तायसा तप्तलौहेन तापयतः स्मः दहतः स्म, हा धिक् क्रूरकर्माणमित्यर्थः ॥२०८॥

मध्याह्नकालेऽप्यविमुक्तिखिन्नांश्छायाभिगांस्ताडयतः स्म गाढम् ।
क्रूराशयौ स्वेन वहत्स्वनस्सु प्सातः स्म बालाविव कल्य एव ॥२०९॥

मध्येति—मध्याह्नकालेऽपि अविमुक्त्या भारवाहनाविरामेण खिन्नान् अतएव छायाभिगान् तापासह्यतया छायाभिमुखगामिनः गाढमत्यन्तं ताडयतः स्म । क्रूराशयौ निर्दयौ स्वेन अप्रेरणयैव अनस्सु शकटेषु 'क्लीवेऽनः शकटोऽस्त्री" इत्यमरः, वहत्सु सत्सु अपि बालौ इव कल्ये प्रभाते एव प्सातः भक्षयतः स्म, न तु वृषभानपि भक्षितुं यच्छतः स्मेति भावः ॥२०९॥

कूटैस्तुलानाणकमानमुख्यैः कं वञ्चयेते स्म न तौ विमूढौ ! ।
मिथ्यादृशौ निष्करुणौ व्यधत्तां तावन्यदाऽर्थाय मिथो युधं च ॥२१०॥

कूटैरिति—विमूढौ अतिमोहवन्तौ तौ वणिजौ कूटैः सकपटैः तुलायाः नाणकानां मानमुख्यैः कूटतुलामानैरित्यर्थः, कं न वञ्चयेते स्म । अपितु सर्वमेव वञ्चयेते स्मेत्यर्थः अन्यदा तौ मिथ्यादृशौ निष्करुणौ निर्दयौ चार्थाय धननिमित्तं मिथः परस्परं युद्धं व्यधत्ताम् ॥२१०॥

तावित्यपध्यानपरौ मिथोऽपि युद्ध्वा पुनः श्रीतटिनीतटान्ते ।
मृत्वा च तत्रैव सुवर्णकूटानद्याः प्रतीरे करिणावभूताम् ॥२११॥

ताविति—इतीत्थमपध्यानपरौ रौद्रार्तध्यानपरौ मिथः अपि युद्ध्वा श्रीतटिनी श्रीनाम नदी तस्या तटान्ते मृत्वा च तौ वणिजौ तत्रैव सुवर्णकूटानद्याः प्रतीरे तीरे करिणा हस्तिनावभूताम् ॥२११॥

नाम्ना पुनः काञ्चनताम्रपूर्वौ स्थाम्ना लसन्तौ कलभौ भ्रमन्तौ।
यादृच्छिकौ स्वस्वकयूथयुक्ता-वन्योऽन्यमालोकयतां मदान्धौ ॥२१२॥

नाम्नेति—पुनः नाम्ना काञ्चनताम्रपूर्वौ कलभौ काञ्चनकलभ-ताम्रकलभनामानौ स्थाम्ना बलेन लसन्तौ स्वस्वकयूथेन युक्तौ समन्वितौ यादृच्छिकौ स्वतन्त्रौ मदान्धौ मदमत्तौ तौ भ्रमन्तौ सन्तावन्योन्यमालोकयताम् ॥२१२॥

प्राग्जन्मवैरात् कुपितौ नितान्तं प्रध्मातताम्राभविलोचनौ तौ।
अम्भोदवद् गर्जितमाचरन्तावधावतां मंक्षु मिथो वधाय ॥२१३॥

प्रागिति—प्राग्जन्मनः वैराद्धेतोः नितान्तं कुपितौ प्रध्माततामाभे तप्तताम्रकान्ती विलोचने नेत्रे ययोस्तौ तादृशौ तौ द्वौ वणिग्जीवौ हस्तिनौ अम्भोदवज्जलधरवत् गर्जितमाचरन्तौ कुर्वाणौ मङ्क्षु शीघ्रं मिथः परस्परं वधाय अधावताम् ॥२१३॥

दन्तैः कराभ्यां च परस्परेण स्थामानुमानेन चिरं प्रहृत्य।
क्षीणायुषौ युग्मभवाविवेभौ कीनाशवेश्मोपगतावितश्च ॥२१४॥

दन्तैरिति—परस्परेण स्थामानुमानेन बलमपेक्ष्य दन्तैः कराभ्यां शुण्डाभ्याञ्च चिरं प्रहृत्य क्षीणायुषौ गतायुषौ इभौ हस्तिनौ युग्मभवौ युगलिनाविव कीनाशस्य यमस्य वेश्मोपगतौ प्राप्तौ, मृतावित्यर्थः। इतश्चेति कथान्तरप्रस्तावेऽग्रिमश्लोकेन सम्बध्यते इति ॥२१४॥

जम्बूमहाद्वीपगमुख्यवर्षे साकेतसंज्ञे नगरे बभूव।
श्रीनन्दिमित्रो वणिजो वणिज्याव्यापारभारार्जितऋद्धिपात्रम् ॥२१५॥

जम्बिति—इतश्च जम्बूमहाद्वीपगे मुख्ये भरतक्षेत्रे वर्षे साकेतसंज्ञे नगरे साकेतपुरे वणिज्या व्यापारभारेण वणिक्त्वव्यवहारेणार्जिताया ऋद्धेः समृद्धेः पात्रमास्पदम् श्रीनन्दिमित्रो नाम वणिजो बभूव इति ॥२१५॥

तस्याऽश्वविद्वेषिकलत्रयूथे तौ वाहशत्रू भवतः स्म पुष्टौ।
दुग्धं पिबन्तावुचितं चरन्तौ तारुण्यमासेदतुरेककालम् ॥२१६॥

तस्येति—तस्य नन्दिमित्रस्य अश्वविद्वेषिणां महिषाणां कलत्राणां भार्याणां महिषीणां यूथे समूहे तौ वणिग्जीवौ पुष्टौ पीवरौ वाहस्याश्वस्य शत्रू महिषौ "महिषो वाह द्विषत्कासारसैरिभाः" इत्यमरः। भवतः स्म, दुग्धं पिबन्तौ उचितं यथेष्टं चरन्तौ तौ एककाले युगपदेव तारुण्यं यौवनमासेदतुः प्रापतुः ॥२१६॥

साकेतशत्रुञ्जयराजदेवनन्दाङ्गजौ श्रीधरनन्दिषेणौ ।
आलोक्य तौ योधयतः स्म वाढं मृत्युं यथा प्रापतुरात्मवैरात् ॥२१७॥

साकेतेति—साकेतस्य तदाख्यनगरस्य शत्रूञ्जयतीति स चासौ राजा च तस्य साकेत-शत्रुञ्जयराजस्य देवनन्दस्य तदाख्यनृपस्याङ्गजौ श्रीधरनन्दिषेणौ तदाख्यौ तौ महिषावालोक्य बाढं भृशं योधयतः स्म, तौ यथा आत्मवैरात् स्वशत्रुता हेतोः मृत्युं प्रापतुः ॥२१७॥

तत्रैव पुर्यां सममप्यभूतां तौ मेषकौ प्रौढतराङ्गसारौ ।
एकस्तयोः काल इति प्रसिद्धो नाम्ना महाकाल इति द्वितीयः ॥२१८॥

तत्रैवेति—तत्रैव पुर्यां साकेतपुरे तौ वणिग्जीवौ समम् सहैव प्रौढतरः अतिशयितः अङ्ग-सारो बलं ययोस्तौ तादृशौ मेषकौ मेषौ अभूताम्, तयोर्द्वयो र्मेषयोः एकः काल इति नाम्नाः द्वितीयः महाकाल इति नाम्ना प्रसिद्धः ॥२१८॥

तौ दैवयोगाद् मिलितौ कदाचिदेकत्र वित्रस्तभयौ बलेन ।
युद्ध्वा तथैवोपगतौ गतौ च जन्मान्तरं कुक्कुटभूयमेतौ ॥२१९॥

तावित्ति—तौ द्वौ मेषौ कदाचिदेकत्र मिलितौ सङ्गतौ बलेन आगतौ बलवन्तौ अत एव, वित्रस्तभयौ निर्भयावेतौ मेषौ तथैव पूर्वजन्मवत् युद्ध्वा कुक्कुटभूयं जन्मान्तरं कुक्कुटरूपेण पुन-र्भवान्तरं गतौ प्राप्तौ ॥२१९॥

प्राग्वज्जयो भाव्यनयोर्न नाऽपि सारेण तुल्येन पराजयोऽपि ।
जन्मान्तराभ्यासवशेन जन्तोः स्यातां जयश्चाऽपि पराजयश्च ॥२२०॥

प्रागिति—प्राग्वत् पूर्वजन्मवत् अनयोः कुक्कुटयोः कस्यापि जयो न भावी, तुल्येन सा-रेण बलेन हेतुना पराजयोऽपि न भावीति सम्बध्यते, जन्तोः जीवस्य जन्मान्तराभ्यास-वशेन जन्मान्तरमनुरुध्यैव जयश्च पराजयश्चापि वा स्याताम् ॥२२०॥

वैज्ञानिको मेघरथो न्यगादीज्जन्मान्तरावर्जितमेव वैरम् ।
नैवैतयोः किन्तु निबोध नाथ ! विद्याधराधिष्ठितवर्ष्मजं च ॥२२१॥

वैज्ञानिक इति—वैज्ञानिको विशिष्टज्ञानवान् अवधिज्ञानवान् मेघरथो न्यगादीत्, किमि-त्याह—नाथ! एतयोः कुक्कुटयोः जन्मान्तरोपार्जितमेव वैरं शत्रुता नैव, तर्हि किमित्याह—किन्तु विद्याधरेणाधिष्ठितस्य वर्ष्मणः शरीराज्जातं च, वैरमस्ति, तन्निबोध विद्धि ॥२२१॥

तस्यैव तातोऽपि तमादिदेश भ्रूसंज्ञया ज्ञातविशेषतत्त्वः ।
कृत्वाऽञ्जलिं सोऽपि च सम्प्रपञ्चं वक्तुं वचः प्राक्रमतेदमेवम् ॥२२२॥

तस्यैवेति—ज्ञातविशेषतत्त्वः विशिष्टज्ञानवान् तातः पिता घनरथोऽपि भ्रूसंज्ञया भ्रूसङ्केतेन तस्य मेघरथस्यैव तमुदन्तं वक्तुमादिदेश, स मेघरथोऽपि अञ्जलिं कृत्वा बद्धाञ्जलिः सन् सप्रपञ्चं सविस्तरमिदमेवं वक्ष्यमाणप्रकारं वचो वक्तुं प्राक्रमतारभत इति ॥२२२॥

विद्याधरशरीरजवैरमाह—

जम्बूमहाद्वीपगमुख्यवर्षे वैताढ्यभूमीधर एव वर्ण्यम् ।
श्रेणेः सदाभूषणमुत्तरस्या आस्ते पुरं नाम सुवर्णनाभम् ॥२२३॥

जम्ब्विति—जम्बूमहाद्वीपगे मुख्ये वर्षे भरतक्षेत्रे वैताढ्यभूमिधरे एव वैताढ्यपर्वते उत्तरस्यां श्रेणेः सदाभूषणम् सर्वदैव भूषणरूपम् वर्ण्यं वर्णनीयम् सुवर्णनाभं नाम पुरमास्ते।२२३।

तत्र क्षितीशो गरुडादिवेगः संवेगरङ्गप्रसरन्नयश्रीः ।
देवी तदीया धृतिषेणिकाऽभूत् सौभाग्यभङ्गीकमनीयकान्तिः ॥२२४॥

तत्रेति—तत्र सुवर्णनाभे पुरे संवेगरङ्गेन वैराग्यप्रेम्णा प्रसरन्ती विशदा नयश्रीः नीतिर्यस्य स तादृश, स त्यागनीतिः गरुडादिवेगः गरुडवेगाख्यः क्षितीशः तदीया गरुडवेगस्य देवी राज्ञी सौभाग्यभङ्ग्या सौभाग्यगुणेन कमनीया कान्तिर्यस्याः सा सौभाग्यवती कान्तिमती च धृतिषेणिका तदाख्या देव्यभूत् ॥२२४॥

आस्यप्रवेशोन्मुखचन्द्रसूरस्वप्नोपलम्भानुमितस्वरूपौ ।
सा चन्द्रसूरोपपदावसूत सूनू सरूपौ तिलकाभिधानौ ॥२२५॥

आस्येति—सा धृतिषेणिका आस्ये मुखे प्रवेशे उन्मुखौ चन्द्रसूरौ यत्र तादृशस्य स्वप्नस्योपलम्भेन दर्शनेन कृत्वा अनुमितं स्वरूपं ययोस्तौ तादृशौ चन्द्रसूर्यस्वप्नसूचितस्वभावौ सरूपौ समानौ चन्द्रसूरोपपदौ तिलकाभिधानौ चन्द्रतिलकसुरतिलकनामानौ सूनू पुत्रावसूतेति ॥२२५॥

तावन्यदा साधितसाधुविद्यौ विद्याधरक्ष्मापसुतौ वयःस्थौ ।
मेरुं गतौ शाश्वतचैत्यनामं निर्माय तच्छायमवेक्षमाणौ ॥२२६॥

कुत्राऽपि सौवर्णशिलातलस्थं चन्द्रप्रभं चन्दनसागराख्यम् ।
दृष्ट्वा मुनिं चारणमिद्धभक्ती नत्वाऽर्हतः शुश्रुवतुः सुधर्मम् ॥२२७॥ युग्मम्॥

ताविति—अन्यदा साधितसाधुविद्यौ सिद्धविद्याधरौ वयःस्थौ तरुणौ "वयस्थस्तरुणो युवे"त्यमरः । विद्याधरक्ष्मापसूतौ विद्याधरेन्द्रपुत्रौ तौ चन्द्रतिलकसूरतिलकौ मेरुं गतौ सन्तौ शाश्वतचैत्यस्य नामं प्रणामं निर्माय कृत्वा तस्य चैत्यस्य छायां कान्तिम् समासाद्यस्व निर्देशः

अवेक्षमाणौ, कुत्रापि सौवर्णशिलातलस्थं सुवर्णशिलायामुपविष्टम् चन्द्रप्रभम् चन्द्रतुल्यकान्तिम् चन्दनसागराख्यम् चारणमुनिं दृष्ट्वा इद्धभक्ती अतिशयभक्तिमन्तौ तौ नत्वा अर्हतः जिनस्य सुधर्मं शुश्रुवतुः ॥२२६॥२२७॥

तद्देशनान्ते च मुनिं विनम्य तौ प्राञ्जली प्रोचतुरेकतानौ ।
विज्ञानदारिद्र्यपराभवार्तैः पुण्येन सर्वज्ञ इवासि लब्धः ॥२२८॥

तदिति—तस्य चारणमुनेः देशनायाः अन्ते च मुनिं चन्दनसागरं चारणमुनिंविनम्य प्रणम्य, तौ एकतानौ समानचित्तवृत्ती प्राञ्जली बद्धाञ्जली सन्तौ प्रोचतुः, किमित्याह-विज्ञानस्य सम्यग्ज्ञानस्य दारिद्र्येणाभावेन हेतुना यः पराभवः भवभ्रमणादि रूपः तेन कृत्वा आर्त्तैः पीडितैः सर्वज्ञ इव त्वमावाभ्यां लब्धः प्राप्तोऽसि इति ॥२२८॥

तन्नौ प्रभो ! प्राच्यभवाभिधानात् कारुण्यसर्वस्वनिधे ! प्रसीद ! ।
ज्ञानं यतो ज्ञानवतां परार्थं गाम्भीर्यभाजां सरसामिवाम्भः ॥२२९॥

तदिति—प्रभो ! कारुण्यसर्वस्वनिधे ! करुणावरुणालय ! तत्तो हेतोः नावावयोः प्राच्यभवाभिधानात् पूर्वभववर्णनेन प्रसीद, ननु जानतोऽपि मम तुभ्यं तत्कथनीयमेवेति कुत इति चेन्न । ज्ञानस्य परार्थत्वात्तदेवाह-यतः ज्ञानवतां ज्ञानं गाम्भीर्यभाजां गम्भीराणां सरसां तडागानामम्भो जलमिव परार्थमिति ॥२२९॥

साधुस्ततोऽभाषत धीरभाषः सद्धातकीखण्डमहान्तरीपे ।
पौरस्त्यभागैरवताख्यवर्षे नाम्ना पुरं वज्रपुरं समस्ति ॥२३०॥

साधुरिति—ततस्तत्प्रार्थनानन्तरम् धीरभाषः गम्भीरवाक्साधुः चारणमुनिरभाषत, किमित्याह-सति उत्तमे धातकीखण्डे तदाख्ये महान्तरीपे महाद्वीपे पौरस्त्यभागे पूर्वभागे ऐरावतवर्षे नाम्ना वज्रपुरं पुरं समस्ति ॥२३०॥

तत्राऽवनीशोऽभयघोषनामा दत्ताभयः शत्रुषु शङ्कितेषु ।
तस्य प्रियोत्तप्तसुवर्णवर्णा स्वर्णादिशब्दा तिलकाह्वयाऽभूत् ॥२३१॥

तत्रेति—तत्र वज्रपुरे अभयघोषनामाऽवनीशो नृपः शङ्कितेषु भीतेषु शत्रुषु दत्ताभयः कृताभयदानः अभूत्, तस्याभयघोषस्य उत्तप्तसुवर्णवर्णा स्वर्णादिशब्दा तिलकाह्वया स्वर्णतिलकेति नाम्नी प्रियाऽभूत् ॥२३१॥

तस्याः सुतावस्तसमस्तदोषौ निर्व्याजतारुण्यविराजमानौ ।
ज्येष्ठस्तयोः श्रीविजयो बभूव कान्तः कनीयानपि वैजयन्तः ॥२३२॥

तस्या इति—तस्या स्वर्णतिलकायाः अस्तः समस्तो दोषो ययोस्तौ तादृशौ सुतरां-निर्दोषौ निर्व्याजेन स्फुटेन तारुण्येन विराजमानौ सुतावमूताम्, तयोः सुतयोः ज्येष्ठः कान्तः कान्तिमान् श्रीविजयः कनीयान् द्वितीयोऽपि वैजयन्तः बभूवेति ॥२३२॥

किञ्चात्र वर्षेऽस्ति पुरं वरीयः स्वर्णद्रुमाह्वं कविवर्णनीयम् ।
पृथ्वीपतिस्तत्र बभूव शङ्खः शुद्धोऽपि नान्तः कुटिलः परं यः ॥२३३॥

किञ्चेति—किञ्चेति अङ्गभूतकथान्तरे, अत्रैरावतवर्षे स्वर्णद्रुमाह्वं कविभिर्वर्णनीयम् वरीयः श्रेष्ठतरं विशालं वा पुरमस्ति । तत्र स्वर्णमद्रुमपुरे शङ्खः तदाख्यः पृथिवीपतिः बभूव। यः शङ्खः शुद्ध शङ्खवन्निर्मलोऽपि परं किन्तु अन्तः कुटिलो न प्रतीतस्तु शङ्खः शुद्धोऽप्यन्तः कुटिल इति तयोर्व्यतिरेकः ॥२३३॥

तद्वल्लभा नामत एव पृथ्वी जज्ञे तितिक्षागुणतोऽपि पृथ्वी ।
स्रक्स्वप्नसंदर्शनसूचितेदं कन्या च पृथ्वीपदपूर्वसेना ॥२३४॥

तदिति—तस्य शङ्खस्य वल्लभा प्रिया नामतः पृथ्वी, तितिक्षा क्षमा सैव गुणः ततोऽपि पृथ्वी एव जज्ञे जाता, पृथिवीवत्सहनशीला सेति भावः । स्रजः मालायाः स्वप्नसंदर्शनेन सूचिता इदं कन्या अस्याः पृथिव्याः कन्या पृथ्वीपदपूर्वसेना पृथ्वीसेना च ॥२३४॥

नित्यं कलाभ्यासमधिश्रयन्ती साऽपि क्रमाद् यौवनमाससाद ।
नान्यो वरोऽस्या इति चिन्तयित्वा राट् तां स्म दत्तेऽभयघोषराजे ॥२३५॥

नित्यमिति—सा पृथ्वीसेना नित्यं कलाभ्यासमधिश्रयन्ती कुर्वन्ती क्रमाद् यौवनमाससाद प्राप । अस्या पृथ्वीसेनायाः अन्यो वरः न इति चिन्तयित्वा राट् राजा शङ्खः तां कन्यामभय-घोषराजे दत्ते स्म ॥२३५॥

पृथ्वीपतिः सोऽपि तयैव सार्धं प्रीतिं दधानः परमामरंस्त ।
चित्ते विवेकं कलयन् प्रवेकं योग्यस्य को वा कुरुतामुपेक्षाम् ! ॥२३६॥

पृथ्वीति—स पृथ्वीपतिरभयघोषोऽपि तया सार्धं परमां प्रीतिमादधानोऽरंस्त चिक्रीड, क्रीडापेक्षत्वे हेतुमाह—को वा जनः चित्ते प्रवेकं उत्तमं "प्रमुखप्रवेकानुत्तमोत्तमाः" इत्यमरः विवेकं हेयोपादेयं ज्ञानं कलयन् दधत् योग्यस्योपादेयस्योपेक्षामवज्ञां कुरुते ? न कोऽपीत्यर्थः ॥२३६॥

आवेदयन्ती सुरभिं समेतं मल्लीसुमानि स्वकरे वहन्ती ।
राजान्तिकं काऽपि समाजगाम चेटी कदाचिच्चतुरा वराऽऽस्या ॥२३७॥

आवेदेति—कदाचिच्चतुरा वरास्या सुन्दरमुखी काऽपि चेटी दासी मल्ली सुमानि मालतीपुष्पाणि करे वहन्ती समेतं पुष्पस्थितं सुरभि सौगन्ध्यम् आवेदयन्ती प्रकटयन्ती राजान्तिकं नृपसमीपं समाजगाम ॥२३७॥

ज्यायो महिष्या समवेक्ष्यतां च प्राणेशिता व्यज्ञपि विज्ञवृत्त्या ।
सर्वर्तुकं नाम वनं नृदेव ! पुष्पाधिवासं सुममासवासम् ॥२३८॥
तद् युज्यते तत्समवेक्षणाय गन्तुं महाराज ! विना विलम्बम् ।
उल्लासकः किं न वनस्पतीनां भूमीपतीनां खलु दृष्टिपातः ? ॥२३९॥
॥ युग्मम् ॥

ज्याय इति—तास्त्र चेटीं समवेक्ष्य विज्ञवृत्त्या बुद्धिमत्या ज्यायो महिष्या ज्येष्ठया पट्टराज्ञ्या प्राणेशिता प्रियोऽभयघोषः व्यज्ञपि, किमित्याह–नृदेव ? सर्वर्तुकं नाम वनमुद्यानम् सुममासस्य वसन्तस्य वास आगमो यस्मिन् तत्तथा वसन्तयुक्तम् अत एव पुष्पाधिवासम् पुष्पसमृद्धिमुद्वर्त्तते । महाराज ? तत्तो हेतोः तस्य वनस्य समवेक्षणाय विना विलम्बं गन्तुं युज्यते, तेन दृष्टेन किमिति चेत्तमाह–भूमीपतीनां दृष्टिपातः वनस्पतीनामुल्लासको मोदजनकः किं न खलु अपि त्ववश्यमुल्लासक इत्यर्थः ॥२३८॥२३९॥

शङ्खावनीनायकनन्दना सा पुष्पाणि पाणौ दधती स्ववासैः ।
आशा समग्रा अपि वासयन्ती पत्युः समीपं समुपैत् तदैव ॥२४०॥

शङ्खेति—सा शङ्खावनीनायकनन्दना पृथिवीसेना पुष्पाणि पाणौ दधती स्ववासैः सुगन्धैः कृत्वा समग्रा अपि आशा दिशः वासयन्ती आमोदसहिताः कुर्वाणा तदैव पत्युः समीपं समुपैदागमत् इति ॥२४०॥

आदाय तानि स्वकराम्बुजेन क्ष्मावासवः संमदमादधानः ।
आरामसौन्दर्यविलोकनाय ताभ्यां प्रियाभ्यां सह निःससार ॥२४१॥

आदायेति—तानि पुष्पाणि स्वकराम्बुजेन आदाय क्ष्मावासवोऽभयघोषः संमदं हर्षमादधानः ताभ्यां प्रियाभ्यां स्वर्णतिलकापृथ्वीसेनाभ्यां सह आरामस्य उद्यानस्य सौन्दर्यविलोकनाय निःससार ॥२४१॥

पत्युर्नियोगाद् नृपशङ्खपुत्री स्वैरं भ्रमन्ती वनवीक्षणाय ।
दन्ताभिधानं मथनोत्तरस्थं साधुं समालोकत लोकवन्द्यम् ॥२४२॥

पत्युरिति—पत्युरभयघोषस्य नियोगादाज्ञया वनवीक्षणाय स्वैरं स्वतन्त्रं भ्रमन्ती नृपशङ्खपुत्री पृथ्वीसेना मथनोत्तरस्थं दन्ताभिधानं दन्तमथननामानं लोकवन्द्यं साधुं समालोकत इति ॥२४२॥

विज्ञानमुक्ताफलवारिराशिं हर्षप्रकर्षेण मुनिं विनम्य ।
तद्देशनायाः परमार्थबोधाद् भर्तारमापृच्छ्य ललौ व्रतं सा ॥२४३॥

विज्ञानेति—विज्ञानं मुक्ताफलमिव तस्य वारिराशिं सागरमिव मुनिं हर्षप्रहर्षेण सातिशयहर्षं विनम्य तस्य मुनेर्देशनायाः उपदेशात् परमार्थबोधात् तत्त्वज्ञानं प्राप्य भर्त्तारं पतिमभयघोषमापृछ्य सा पृथ्वीसेना व्रतं दीक्षां ललौ ॥२४३॥

राजाऽपि तस्या जननं कृतार्थं जानन् स्वचित्ते जनतासमेतः ।
पुण्यस्थितेः स्वं बहु मन्यमान्यः स्वावासमाशिश्रियदिन्दुसौम्यः ॥२४४॥

राजेति—राजाऽभयघोषोऽपि तस्याः पृथ्वीसेनायाः जननं जन्म स्वचित्ते कृतार्थं सफलं जानन् पुण्यस्थितेः पुण्यवत् स्वं बहुमन्यमानः इन्दुसौम्यः चन्द्रवद्रमणीयः स जनताभिस्समेतः सहितः स्वावासं स्वगृहमाशिश्रियत् इति ॥२४४॥

अन्येद्युरेषोऽभयघोषराजः प्रासादवातायनसानुवर्ती ।
दिष्ट्या चतुर्ज्ञानमनन्तमीशं द्वारे विशन्तं सहसा ददर्श ॥२४५॥

अन्येद्युरिति—अन्येद्युः एषोऽभयघोषराजः प्रासादवातायनस्य स्वसौधगवाक्षस्य सानुवर्त्ती शिलाखण्डऽस्थः सहसा अकस्मात् दिष्ट्या भाग्यसंयोगेन चतुर्ज्ञानम् मतिश्रुतावधिमनःपर्यायज्ञानयुक्तमीशं प्रभुमनन्तं तदाख्यं तीर्थङ्करछद्मस्थं द्वारे विशन्तं प्रविशन्तं ददर्श ॥२४५॥

उत्तीर्य तस्मात् त्वरितं नरेन्द्रः पादान् ववन्दे परमेश्वरस्य ।
तद्भक्तदत्तैः शुचिभक्तपानैश्चक्रे विभुः पारणकं तदैव ॥२४६॥

उत्तीर्येति—तस्माद्वातायनात्त्वरितं शीघ्रमेवोत्तीर्य नरेन्द्रोऽभयघोषः परमेश्वरस्यानन्तस्य पादौ ववन्दे, विभुरनन्ताख्यप्रभु' तदैव सोऽभयघोषश्चासौ भक्तः भक्तिमांश्च तेन दत्तैरुपढौकितैः शुचिभिः निर्दोषैः प्रासुकैर्भक्तैरन्नैः पानैः पेयैश्च पारणकं चक्रे ॥२४६।

आनन्दसन्दोहसमृद्धचित्तैराधायि देवैरपि पञ्चदिव्यी ।
अन्यत्र तीर्थाधिपतिर्विजह्रे यत्तादृशां स्थैर्यमिदं विचित्रम् ॥२४७॥

आनन्देति—आनन्दसन्दोहेन समृद्धचित्तैः व्याप्तहृदयैः देवैरपि पञ्चानां दिव्यानां समाहारः पञ्चदिव्यी आधायि चक्रे, तीर्थाधिपतिरनन्तोऽन्यत्र विजह्रे विहारं कृतवान्, ननु

किमिति तत्र स्थितवानित्यत आह—यद्यतः तादृशम् प्रशान्तानाम् स्थैर्यमेकत्र चिरावस्थानम्, इदं विचित्रं न युज्यते इत्यर्थः । तेषां रागाभावत्' स्थिरतायाश्च रागस्यैव प्रयोजकत्वादिति भावः ॥२४७॥

**आसादिताऽनन्तचिदाप्तभावः क्ष्मां पावयन् स्वैश्चरणारविन्दैः ।**
**उद्यानके वज्रपुरस्य रम्ये तीर्थाधिनाथः समवासरत् सः २४८॥**

आसेति—आसादितया प्राप्तया अनन्तचिदा केवलज्ञानेन आप्तभावः ज्ञाततत्त्वः स्वैः स्वकीयैश्चरणारविन्दैः क्ष्मां पृथ्वीं पावयन् पूतीकुर्वन् स तीर्थाधिनाथोऽनन्तजिनः वज्रपुरस्य रम्ये रमणीये उद्यानके उद्याने समवासरत्समवसरणं कृतवान् ॥२४८॥

**श्रुत्वा समायातमनन्तरसार्वमायुक्तपुंभ्योऽभयघोषराजः ।**
**तीर्थेशमभ्येत्य विनत्य शक्रं स्थित्वाऽनुशुश्राव हितोपदेशम् ॥२४९॥**

श्रुत्वेति—अभयघोषराज, आयुक्तपुंभ्यः उद्याने नियुक्तेभ्यः पुरुषेभ्यः सकाशात् अनन्तं सार्वं सर्वज्ञमनन्तं तीर्थेशं समायातं श्रुत्वाऽभ्येत्य विनत्य प्रणम्य शक्रम् इन्द्रम् अनु पश्चाद्भागे देवमनुष्ययोस्तथा क्रमसत्त्वादिति भावः । समीपे स्थित्वा हितोपदेशम् शुश्राव ॥२४९॥

**भूयस्तदन्ते प्रणिपत्य नित्य-ज्ञानं जिनं तं निजगाद भूपः ।**
**अस्मादृशां भाग्यभरेण युष्म-त्पादाः समायासिषुरत्र नूनम् ॥२५०॥**

भूय इति—तदन्ते देशनान्ते भूयः अभयघोषः प्रणिपत्य नित्यज्ञानं केवलिनं तमनन्तं जिनं निजगाद, किमित्याह युष्मत्पादाः तत्रभवन्तः नूनं अस्मादृशाम् भाग्यभरेण भाग्याधिक्येनात्र समायासिषुः ॥२५०॥

**तिग्मांशुशुभ्रांशुवलाहकाना-मभ्युन्नतिर्नो जगतां नितान्तम् ।**
**पुष्णाति सर्वज्ञ ! समीहितानि, स्वामिन् ! यथा ते, समता कुतस्तत् ? ॥२५१॥**

तिग्मेति—स्वामिनः तिग्मांशुः सूर्यः शुभ्रांशुः चन्द्रः बलाहकः मेघः तेषामभ्युन्नतिः अभ्युदयः जगतां समीहितानि कामान् नितान्तं तथा नो नैव पुष्णाति, यथा ते तव अभ्युन्नतिर्नीतिरित्यनुषङ्गः तत्तस्मात्समता कुतः नास्त्येवेत्यर्थः । यद्वा समता तत्समत्वं कुतः ? ॥२५१॥

**न्यसाङ्गजं दुर्नयशालमूलप्रोन्मूलने मत्तगजं स्वराज्ये ।**
**यावत् समायामि जिनेश तावदेतां भुवं पावय पावन ! त्वम् ॥२५२॥**

न्यसेति—जिनेश ! पावन ! दुर्नयोऽन्याय एव शालवृक्षस्य प्रोन्मूलने ध्वंसने मत्तगजमिवाङ्गजं स्वराज्ये न्यस्य स्थापयित्वा यावत्समायामि, तावत्त्वम् एतां भुवं पावय, अत्रैव तिष्ठेत्यर्थः ॥२५२॥

मा धाः प्रमादं नृप ! वेश्मगस्त्वमित्युक्तिमादृत्य जिनेश्वरस्य ।
राजा ययौ सद्म ततः स्वपुत्रावाकार्य तौ स्वाभिमतं विवव्रे ॥२५३॥

मेति—नृप ! वेश्मगः गृहगतः सन् प्रमादं मा धाः मोहं मा गा इतीत्थम् जिनेश्वरोक्तिमादृत्य स्वबहुमानं स्वीकृत्य राजा सद्म गृहं ययौ, ततश्च तौ द्वौ स्वपुत्रौ आकार्याहूय स्वाभिमतं स्वेष्टं विवव्रे कथयामास ॥२५३॥

वत्स ! क्रमायातमिदं स्वराज्यमादत्स्व स त्वं विजयाऽतिसत्त्व !
त्वं वैजयन्ताऽस्य च यौवराज्यं तेजोजयन्ताभ ! समाश्रयस्व ॥२५४॥

वत्सेति—वत्स ! विजये अतिसत्त्व ! अतिबलशालिनः त्वमिदं क्रमायातं कुलक्रमप्राप्तं स्वराज्यमादत्स्व स्वीकुरु, तेजसा जयन्ताभ जयन्ततुल्य ! वैजयन्त ! त्वञ्च अस्य श्रीविजयस्य-राज्यस्य वा यौवराज्यं समाश्रयस्व ॥२५४॥

वत्सावहं संसृतिदुःखभीत-स्तीर्थङ्करानन्तपदाब्जमूले ।
दीक्षां समादाय तपांसि तप्त्वा कर्माणि जित्वा च सुरीभवामि ॥२५५॥

वत्साविति—ननु भवान् तत्र किं करिष्यतीति "चेत्तमाह-वत्सौ ! अहमभयघोष. संसृतेः संसारस्य दुःखाद्भीतः सन् तीर्थङ्करस्यानन्तस्य प्रभोः पदाब्जमूले दीक्षां समादाय तपांसि तप्त्वा कर्माणि जित्वा कृशीकृत्य सुरीभवामि देवो भविष्यामि ॥२५५॥

ताभ्यां सुताभ्यां विहिताञ्जलिभ्यां प्रोचे यथा तात ! मता तवेयम् ।
साताय दीक्षा न तथैव किं नौ प्रायो हि पुत्रा जनकस्वभावाः ? ॥२५६॥

ताभ्यामिति—ताभ्यां द्वाभ्यां सुताभ्यां विहिताञ्जलिभ्यां प्रोचे, किमित्याह तात ! यथा तवेयं दीक्षा साताय सुखाय मत्तेष्टा, तथा नौ आवयोः किं न ? अपि त्वावयोरपीष्टैव, तत्र समर्थनमाह—हि यतः पुत्राः प्रायः बाहुल्येन जनकस्वभावाः पितृशीलाभवन्तीति ॥२५६॥

युष्मत्समीहानुपलम्भतोऽपि राज्ये सुखं तात ! न तर्कयावः ।
मिष्टं विशालाव्रततीफलं चेद् गोपालबालाः किमु तत् त्यजन्ति? ॥२५७॥

युष्मदिति—तात ! युष्मत्समीहायाः युष्मदिच्छायाः अनुपलम्भतोऽप्राप्तेर्हेतोरपि राज्ये सुखं न तर्कयावोऽनुभवावः, तत्र दृष्टान्तमाह विशाला नाम व्रतती लता तस्याः फलं मिष्टं स्वादु

चेत्तत्फलं गोपालबालाः किमु त्यजन्ति ? अपितु नैव त्यजन्ति, तथा राज्ये सुखं चेद् भवन्तः कुतः त्यजन्ति ? इति सिद्धमेतदसुखमिति ॥२५७॥

दीक्षासुखं तात ! यथा तवेष्टं किं नावयोरेव तथा प्रतीतम् ?
रम्भाफलानां हि पचेलिमानां विज्ञो रसं विन्दति किं न बालः ? ॥२५८॥

दीक्षेति—तात ? यथा तव दीक्षासुखमिष्टं, तथाऽऽवयोः तद्दीक्षासुखं प्रतीतं न किम् ? अपि त्विष्टमेव । तत्र दृष्टान्तमाह—हि यतः पचेलिमानां पक्वानां रम्भाफलानां कदलीफलानां विज्ञः वृद्धः रसं स्वादं विन्दति प्राप्नोति बालः किं न ? अपितु बालोऽपि प्राप्नोत्येवेति बालौ युवामिति कृत्वा निषेद्धुमयोग्यावावाम् ॥२५८॥

दीक्षाऽऽवकाभ्यां च तदभ्युपेया-तस्याः फले द्वे कलयाव एते ।
त्वत्पादपद्मद्वयपर्युपास्तिः संप्रत्यमुत्राऽपि परं पदं नौ ॥२५९॥

दीक्षेति—तत्तातः आवकाभ्यामपि दीक्षा अभ्युपेया ग्रहीतव्या, तस्याः दीक्षायाः एते द्वे फले कलयावः पश्यावः, के ते इत्याह—सम्प्रति त्वत्पादपद्मयोः पर्युपास्तिः सेवा, अमुत्र परलोकेऽपि नौ आवयोः परं पदमिति ॥२५९॥

तत्प्रोक्तमीदृग्धृदये निधाय प्रोवाच भूमीपतिरेव भूयः ।
दीक्षोद्यमो यौवन एव वत्सौ ! मृद्वङ्गयोर्वामतिदुष्करोऽयम् ॥२६०॥

तदिति—ईदृगुक्तप्रकारं ताभ्यां पुत्राभ्यां प्रोक्तं वचनं हृदये निधायावधार्य भूय एव भूमिपतिरभयघोषः प्रोवाच, किमित्याह—वत्सौ वां युवयो. मृद्वङ्गयोः कोमलाङ्गयोः यौवने एवायं दीक्षार्थमुद्यमः प्रयासः अतिदुष्कर. कर्तुं दुःशकः ॥२६०॥

दीक्षानिषेधे हेतुमाह—

दीक्षातपोभिः सफला तपांसि कर्तुं न शक्यानि मृदुप्रतीकैः ।
युष्मादृशैः तद्वचसा ममाऽपि राज्यं युवां पालयत चिराय ॥२६१॥

दीक्षा अर्थात्तत्स्वीकारः तपोभिः कृतैः सफलफलदायिनी, युष्मादृशैः मृदुप्रतीकैः कोमलाङ्गैः तपांसि कर्तुं न शक्यानि, तेषां कष्टसाध्यत्वात्, मृद्वङ्गानाञ्च कष्टसहनासम्भवादिति भावः । तत्ततो हेतोः, मम वचसा कथनेनाऽपि युवां चिराय राज्यं पालयत, नतु दीक्षाया हठाग्रहः कार्य इति भावः ॥२६१॥

बाल्ये विशिष्याऽध्ययनं विधेयं तारुण्यकाले पुनरर्थकामौ ।
धर्माय तस्यापगमे तपस्या-ऽप्येतं क्रमं संश्रयतं श्रिये च ॥२६२॥

बाल्ये इति—बाल्ये विशिष्य आवश्यकतया अध्ययनम्, तारुण्यकाले पुनः अर्थकामौ, तस्य तारुण्यकालस्यापगमे व्यये सति धर्माय तपस्याऽपि भवति, एवं मदुक्तं संश्रयतमाश्रीय-

माणं श्रिये च तपस्या भवतीति सम्बध्यते, अनुपयुक्तं भाति क्रमवैपरीत्ये फलवैपरीत्यस्यापि कदाचित्सम्भवादिति भावः ॥२६२।

श्रुत्वेदमीदृक् स्वपितुस्ततस्तौ प्रत्यूचतुस्तात ! निगद्यतेऽदः ।
स्थाने समस्तं, यदि धर्मराजो, दद्यात् प्रसन्नोऽभयदानपात्रम् ॥२६३॥

श्रुत्वेति---स्वपितुरिदमिदृगुक्तं श्रुत्वा ततः तदनन्तरं तौ कुमारौ प्रत्यूचतुरुत्तरतुः, किमित्याह–तात ? अदः निगद्यते, भवता, तत्समस्तं स्थाने युक्तम्, यदि धर्मराजोऽन्तकः प्रसन्नः सन्नभयदानस्यपात्रम्, मुद्रादद्यात् यदि मृत्युभयं नास्ति तदा राज्यपालनादि श्रेष्ठम्, सति तस्मिन् किं राज्यमोहेनेति दीक्षैव श्रेष्ठा इति भावः ॥२६३॥

पूर्वोक्तमेव स्पष्टयति—

स स्वाधिकाराऽप्रतिबन्धतस्तत् कस्याऽपि नाऽदाद् न च दास्यतीति ।
जाने प्रजानायक ! तादृशस्य दृष्टेः श्रुतेश्चाविषयोपपत्त्या ॥२६४॥

सेति---प्रजानायक ! राजन् ! स अन्तकः स्वाधिकारस्य अप्रतिबन्धतः वा स्वमुखे प्रवेशनियोजनाऽधिकारस्य अप्रतिबन्धतः अप्रतिहतत्वात्, कस्यापि अभयदानं न च अदात्, न वा दास्यति, सर्वेषामेव मृत्युर्ध्रुवं इत्यर्थः । इतीत्थं जाने वद्मि, तादृशस्य धर्मराजदत्ताभयस्य दृष्टेः श्रुतेश्चाविषयोपपत्त्या लोचन गोचरत्वस्य कर्णगोचरत्वस्य चाभावात्, यदि हि तादृशस्यावश्यं दृष्टः श्रुतो वा स्यादिति भावः ॥२६४॥

उपसंहरति—

तत्तात ! दीक्षाग्रहणेऽन्तरायं मा धा महाधामधुतोष्णधामन् ।
उत्साहका एव महानुभावा धर्मप्रवृत्तौ न निवर्तकाः स्युः ॥२६५॥

तदिति--तत्ततो हेतोः पूर्वोक्ताम्, तात ! महाधाम्ना स्व महाप्रतापेन धुतस्तिरस्कृत उष्णधामा सूर्यो येन स तादृश ! दीक्षाग्रहणे अन्तरायम् निषेधादिरूपं मा धाः कार्षीः, प्रत्युत दीक्षानिषेधोऽनुचित इत्याह–महानुभावाः धर्मप्रवृत्तौ दीक्षाग्रहणादिरूपे उत्साहकाः आज्ञादानादिना प्रयोजका न तु निर्वर्तकाः निषेधकाः स्युः ॥२६५॥

इत्याग्रहं भूमिपतिस्तदीयं मत्वा व्रतादानविधौ विधिज्ञः ।
कस्याऽपि दायादतनूभवस्य विश्राणयामास तदैव राज्यम् ॥२६६॥

इतीति—व्रतादानविधौ दीक्षाग्रहणकर्मणि तदीयं कुमारद्वयसम्बन्धिनमित्युक्तप्रकारमाग्रहमभिनिवेशं मत्वा निश्चित्य भूमिपतिः विधिज्ञः अतएव, तदैव, दायादतनूभवस्य स्वगोत्रपुत्रस्य कस्यापि राज्यं विश्राणयामास ददौ ॥२६६॥

ताभ्यामथ क्षोणिपतिः सुताभ्यां सार्धं स गत्वा जिनसन्निधानम् ।
संस्तारनिस्तारनिबद्धकक्षां जग्राह दीक्षां जनवर्ण्यमानः ॥२६७॥

ताभ्यामिति—अथान्तरम्, क्षोणिपतिः ताभ्यां द्वाभ्यां सुताभ्यां सार्धं जिनसन्निधानं जिनसमीपं गत्वा जनवर्ण्यमानः स्तूयमानः सन् संसारान्निस्तारे निष्कर्षणे निबद्धकक्षां बद्धपरिकरां दीक्षां जग्राह ॥२६७॥

आत्तव्रताभ्यां सह सोऽपि ताभ्यां शिक्षां द्विधाऽपि प्रतिपद्यमानः ।
तद्विंशतिस्थानकवित्ततीर्थकृन्नामकर्माऽर्जयति स्म पुण्यैः ॥२६८॥

आत्तेति—सोऽभयघोषोऽपि आत्तव्रताभ्यां गृहीतदीक्षाभ्यां ताभ्यां पुत्राभ्यां सह द्विधाऽपि प्रतिदिनसूत्रार्थग्रहणाभ्यासो ग्रहणा शिक्षा प्रतिदिनक्रियाभ्यास आसेवना शिक्षेत्येवं द्विप्रकारामपि शिक्षां प्रतिपद्यमानः प्राप्नुवन् पुण्यैः कृत्वा विंशतिस्थानकेन वित्तं तीर्थकृन्नामकर्म अर्जयति स्म. वा विंशेन धनेन नकैः वित्तं ख्यातं तीर्थकृन्नाम कर्मार्जयति स्म इति ॥२६८॥

संचित्य भूयांसि चिरं तपांसि मृत्वा त्रयोऽप्यात्तसमाधिभावः ।
ते जज्ञिरे द्वादशदेवलोके देवोत्तमा भोगसमृद्धिभाजः ॥२६९॥

सञ्चित्येति—चिरं भूयांसि बहूनि तपांसि सञ्चित्य कृत्वा आत्तसमाधिभावः गृहीतसमाधयः त्रयोऽपि विंशतिस्थानकतपोविधानेन तीर्थकरनामकर्मोपार्जितवानित्यर्थः । मृत्वा द्वादशदेवलोके अच्युतकल्पे भोगसमृद्धिभाजः सुखातिशयसम्पन्नाः देवोत्तमा देवेन्द्रा जज्ञिरे जाताः ।२६९॥

अत्रान्तरेऽस्मिन् प्रथमेऽन्तरीपे पूर्वे विदेहे विजये समृद्धे ।
श्रीपुष्कलावत्यभिधे शुभेऽस्ति सा पुण्डरीकिण्यसमा श्रिया पूः ॥२७०॥

अत्रेति—अत्रान्तरे अस्मिन्नवसरे अस्मिन् प्रथमे अन्तरीपे जम्बुद्वीपे पूर्वे विदेहे पूर्वमहाविदेहे समृद्धे श्रीपुष्कलावत्यभिधे उभे विजये सा प्रसिद्धा श्रिया । लक्ष्म्या असमा अतुल्या पुण्डरीकिणी पूरस्ति ॥२७०॥

हेमाङ्गदः क्ष्मामघवा प्रशास्ति शस्तां सुवर्णैर्विविधैः पुरीं ताम् ।
यस्याऽरयो न्यायमवेक्ष्य भेजुर्ह्रीणा इवाऽरण्यमपेतसाराः ॥२७१॥

हेमेति—हेमाङ्गदः तदाख्यः क्ष्मामघवा नृपः विविधैः सुवर्णैः ब्राह्मणाद्युत्तमवर्णैः शस्ताम् तां पुण्डरीकिणीं पुरीं प्रशास्ति, यस्य हेमाङ्गदस्य न्यायम् दण्डनीतिमवेक्ष्य ह्रीणाः सलज्जा इव अपेतसाराः दुर्बला अरयः शत्रवः अरण्यं भेजुः "ह्रीणह्रीतौ तु लज्जिते इत्यमरः इति ॥ २७१॥

तद्वज्रमालिन्यभिधानदेवीकुक्षौ स जीवोऽभयघोषराजः ।
च्युत्वा ततो द्वादशदेवलोकात् पुण्यप्रकर्षादुदपाद्यनर्घ्यात् ॥२७२॥

तदिति--तस्य हेमाङ्गदस्य वज्रमालिन्यभिधानाया देव्याः कुक्षौ उदरे अभयघोषराजः अभयघोषनृपस्य स जीवः ततः द्वादशदेवलोकाच्च्युत्वा अनर्घ्यादप्रतिमात्पुण्यस्य प्रकर्षाद्धेतोः उदपाद्युत्पन्नः ॥२७२॥

सप्तद्विरुक्तैः प्रथितप्रभावैः स्वप्नैः समावेदिततीर्थकृत्त्वम् ।
प्रासूत देवी समयेऽथ सूनुं प्राचीव सूरं द्युतिदीपिताशम् ॥२७३॥

सप्तेति--अथ प्रथितप्रभावैः ख्यातफलैः सप्तद्विरुक्तैः चतुर्दशभिः स्वप्नैः कृत्वा समावेदितं-सूचितं तीर्थकृत्त्व यस्य तादृशं सूनुं समये जन्मकाले द्युतिदीपिता आशा दिशः येन तादृशं सूरं सूर्यं प्राची पूर्वदिशेव देवी प्रासूत ॥२७३॥

सर्वं समाक्रम्य घनै रथौघैर्दिक्चक्रवालं भविता जयाढ्यः ।
इत्युग्रपुण्यप्रसरं पिता यं नाम्ना रथान्तं घनमभ्यधत्त ॥२७४॥

सर्वमिति— घनैः बहुभिः रथौघैः रथसमूहैः साधनैः सर्वं दिशांचक्रवालं मण्डलं समाक्रम्य वशीकृत्य जयाढ्यः विजयी भविता इति हेतोः पिता उग्रपुण्यप्रसरम्, उत्कटपुण्यप्रभावं यं जातं पुत्रं नाम्ना रथान्तं घनं घनरथमभ्यधत्त कथयामास ॥२७४॥

राजव्रजः क्षीणवसुः समीपं यस्याऽऽप्य पूर्णः पुनरेति दूरम् ।
मन्दं द्विषन् मित्रसुहृज्जगत्यां द्वेधा क्षमां संप्रति सोऽपि पाति ॥२७५॥

राजेति—मन्दमल्पमपि द्विषन् वैरं कुर्वन् क्षीणवसुः नष्टधनः राजव्रजः राजसमूहः यस्य घनरथस्य समीपं सामीप्यमाप्य प्राप्य, शरणागतः सन्नित्यर्थः, पुनः पूर्णः पूर्णवसुः अपराधं क्षमयित्वा दत्ताधिकारः सन् मित्रमिव सुहृदभूत्वा दूरमेति याति, स घनरथः सम्प्रत्यपि जगत्यां द्वेधा प्रकारद्वयात्मिकां क्षमां पृथ्वीं तितिक्षाञ्च पाति ॥२७५॥

च्युत्वा तावपि वैजन्तविजयौ विद्याधरौ वां क्रमा—
ज्जातावित्यभिधाय चारणमुनिर्मौनं समालम्बत ।
तौ तु द्रष्टुमिहागतौ श्रुतचरं प्राग्जन्मतातं त्वका-
मेतत्कुर्कुटविग्रहे विदधतुः कौतूहलात् संक्रमम् ॥२७६॥

च्युत्वेति--तौ वैजयन्तविजयौ अभयघोषपुत्रावपि च्युत्वा क्रमाद् वां युवाम् विद्याधरौ चन्द्रतिलकसूरतिलकौ जातौ उत्पन्नौ इतीत्थमभिधाय चारणमुनिः मौनं समालम्बत विरतः । तौ द्वौ विद्याधरौ श्रुतचरं पूर्वजन्मतातं त्वकाम् त्वां द्रष्टुमुपगतौ प्राप्तौ इह एतयोः कुक्कुटयोः विग्रहे शरीरे कौतूहलात् सङ्क्रमम् स्वजीवप्रवेशम् विदधतुः चक्रतुः ॥२७६॥

एतावेव च भोगवर्धनगुरोः पार्श्वे प्रयातावितः
प्रव्रज्यां प्रतिपद्य केवलविदं लब्ध्वा शिवं यास्यतः ।
श्रुत्वैवं चरितं निजं प्रकटितात्मानौ ततस्तौ सुतं
मन्यौ मान्यनृपं विनम्य भवनं विद्याधरौ जग्मतुः ॥२७७॥

एताविति—एतौ द्वौ विद्याधरावेव च इतः प्रयातौ गतौ सन्तौ भोगवर्धनाख्यगुरोः पार्श्वे प्रव्रज्यां प्रतिपद्य स्वीकृत्य केवलविदं केवलज्ञानं लब्ध्वा शिवं मोक्षं यास्यतः प्राप्स्यतः । एवमुक्तप्रकारेण निजं चरितं श्रुत्वा प्रकटितात्मानौ प्रकटितौ स्वरूपौ तौ चन्द्रतिलकसूरतिलकाख्यौ विद्याधरौ ततः घनरथस्य सुतं मन्यौ आत्मान पूर्वभवाय पुत्रं मन्यमानौ मान्यं नृपं पूर्वभवतातं घनरथं विनम्य भवनं जग्मतुरिति ॥२७७॥

एतत् तावपि कुक्कुटावविकटं श्रुत्वा विरक्ताशया-
वेवं चिन्तयतः स्म धिग्धिगिमिकां दुःखास्पदं संसृतिम् ।
आवाभ्यां सुररत्नसोदरमिदं संप्राप्य मानुष्यकं
हाऽऽर्तध्यानकुकर्मभिः कथमहो ! निर्वासितं सर्वदा ? ॥२७८॥

एतदिति—तौ कुक्कुटावपि एतदुक्तं चरितमविकटं स्पष्टं श्रुत्वा विरक्ताशयौ वैराग्यमापन्नौ सन्तौ एवं चिन्तयतः स्म, तच्चिन्तामेवाह—इमिकामिमां दुःखास्पदं संसृतिम् भवपरंपरां धिक्, अतिशयनिर्वेदाद् द्विरुक्तिः । आवाभ्यां पूर्वजन्मनि वणिग्भ्यामिदं सुरत्नसोदरं देवरत्नतुल्यं मानुष्यकं सम्प्राप्य सर्वदा आर्तध्यानरूपैः कुकर्मभिः दुष्कर्मभिः कथं केन प्रकारेण निर्वासितं गमितम् , अहो ! आश्चर्यमेतत्, हा ! दुःखञ्च ॥२७८॥

ध्यात्वैवं चिरमूचतुर्निजगिरा तौ ताम्रचूडौ नृपं
कृत्वाऽनुग्रहमादिश त्वमधुना किं कुर्वहे स्वं हितम् ? ।
ज्ञानज्ञाततदीयगीर्घनरथोऽथोवाद देवो जिनः ।
साधुर्वा गुरुरस्तु केवलविदा प्रोक्तस्तु धर्मः सदा ॥२७९॥

ध्यात्वेति—एवमुक्तप्रकारेण चिरं ध्यात्वा तौ ताम्रचूडौ नृपं निजगिरा कुक्कुटगिरा ऊचतुः, किमित्याह—त्वम् अनुग्रहं कृत्वा आदिश उपदिश, किमित्याह—आवाम् स्वं हितं किं कुर्वहे ? आवयोर्हितमुपदिशेत्यर्थः । अथ ज्ञानेन ज्ञाता तदीया कुक्कुटयोर्गीः वाणी येन स तादृशः देवः जिनः घनरथः उवाद, किमित्याह—साधुर्वा शुद्धवृत्त्या पञ्चाचारपरिपालकः साधुरेव गुरुरस्तु, धर्मस्तु केवलविदा केवलिना प्रोक्तो ममास्त्विति सम्यग्दर्शनमङ्गीकुरुतमिति एतद्धितं कुरुतमिति ॥२७९॥

इत्थं तौ प्रतिपद्य तद् घनरथादिष्टं पुनः कुक्कुटौ
स्वीकृत्यानशनं दिनैः कतिपयैर्मृत्युं समासेदतुः ।
भूतौ भूतपती विभूतिकलितौ तौ भूतरत्नाभिधा-
टव्यां स्वर्णकताम्रशब्दरुचितौ चूलाभिधानौ ततः ॥२८०॥

इत्थमिति—इत्थमुक्तप्रकारेण घनरथादिष्टं तदुपदेशं प्रतिपद्य पुनः तौ कुक्कुटौ अनशनं स्वीकृत्य कतिपयैः दिनैः मृत्युमासेदतुः, ततः मृत्वा च तौ कुक्कुटजीवौ भूतरत्नाभिधाया-मटव्यां वने स्वर्णकताम्रशब्दरुचितौ चूलाभिधानौ स्वर्णचूलताम्रचूलाभिधानौ विभूतिकलितौ ऐश्वर्यसमन्वितौ भूतपती भूतदेवौ भूतौ जातौ ॥२८०॥

ज्ञात्वा प्राग्भवमात्मनोऽवधिविदा कृत्वा विमानं महत्
तौ श्रीमेघरथं परोपकृतिकृन्मूर्धावतंसं जवात् ।
अभ्येत्य प्रणिपत्य शुद्धविनयावेनं मुदा प्रोचतु-
र्देवौ भूतपती बभूविव भवद्दृष्टिप्रसत्त्याऽपि नौ ॥२८१॥

ज्ञात्वेति— अवधिविदा अवधिज्ञानेन आत्मनः स्वस्य प्राग्भवं ज्ञात्वा महत् विमानं व्योमयानं कृत्वा निर्माय तौ भूतपती परोपकृतिकृतां परोपकारकारिणां मूर्धावतंसं शिरोमणिं श्रीमेघरथं जवादभ्येत्य प्रणिपत्य प्रणम्य शुद्धविनयौ विनयोज्ज्वलौ तौ एनं मेघरथं प्रोचतुः, किमित्याह—नौ आवाम् भवद्दृष्टिप्रसत्त्या त्वद्दृष्टिप्रसादेन भूतपती देवौ बभूविव ॥२८१॥

तिर्यग्योनिमहाकरालनरके दुःखप्रपञ्चाकुले-
पापप्रायकुकर्मवैरिभिरलं क्षिप्तौ प्रसह्याऽपि नौ ।
कारुण्यामृतसारप्रतिकृतिं स्वामिंस्त्वया बिभ्रता
चञ्चद्वागुपदेशलक्षणगुणेनाऽऽयामिनैवोद्धृतौ ॥२८२॥

तिर्यगिति—स्वामिन् ! कारुण्यरूपामृतस्य स्वस्य प्राग्भव ज्ञात्वा महत् विमानं व्योमकृतिं सादृश्यां प्रतिमां बिभ्रता त्वया, पापप्रायैः पापबहुलै कुकर्मरूपैः वैरिभिः दुःखप्रपञ्चेनाकुले व्याप्ते तिर्यग्योनिरूपे महाकराले महाभयङ्करे नरके प्रसह्य हठादलमित्यर्थं क्षिप्तौ निहितौ नौ आवाम आयामिना दीर्घतरेण चञ्चद्वाचामुज्ज्वलवाणीनामुपदेशलक्षणेन गुणेन दाम्ना उद्धृतौ निष्कासितौ एव ।२८२।

तन्नावभ्युपपत्तिलब्धिपरयोरेतद् विमानं विभो-
ऽध्यारुह्य प्रतिपद्विलोकितमिमं लोकं समालोकय ।
इत्थ प्रार्थित आहिताञ्जलितया ताभ्यां परीवारयुक्
तं श्रीमेघरथोऽध्यरोहदसमं दीप्रप्रभामण्डलम् ॥२८३॥

तदिति—विभो ! तत्ततो हेतोः अभ्युपपत्तिलब्धिपरयो विनन्तियुक्तिलब्धिसमन्वितयो नौ आवयोः एतद्विमानमध्यारुह्य प्रतिपदा ज्ञानेन विलोकितमेतं लोकं समालोकय लोचनेन पश्य, ताभ्यां भूतपतिभ्यामित्थमुक्तप्रकारेण आहिताञ्जलितया बद्धाञ्जलितया प्रार्थितः श्रीमेघरथः परीवारयुक् समन्वितः दीप्रप्रभामण्डलम् भास्करकान्तिमन्ततमसमं विलक्षणं विमानमध्यगेहत् "व्योमयानं विमानोऽस्त्री" इत्यमरः ॥२८३॥

तद्व्योम्न्युत्पतति स्म भास्वरमणिप्रद्योत्यमानाम्बरं
देवावङ्गुलिपूर्वमूचतुरिमं संपश्य संपश्य च ।
द्वीपक्षेत्रसमुद्रभूधरनदीस्वर्णाद्रितच्चूलिका–
वैताढ्याद्रिसनातनार्हतमहाचैत्यानि रम्याण्यपि ॥२८४॥

तदिति- तद्विमानं व्योम्नि आकाशे उत्पतति स्म उड्डयति स्म, देवौ भूतपती अङ्गुलिपूर्वम् अङ्गुल्या निर्दिश्य ऊचतुः, किमित्याह–भास्वरैः मणिभिः प्रद्योत्यमानं प्रकाश्यमानमम्बरं आकाशं येन तद्विमानं व्योम्नि आकाशे उत्पतति स्म उड्डयति स्म देवौ भूतपती अङ्गुलिपूर्वं "गुल्या निर्दिश्योचतुः इमं संपश्य संपश्य च कृत्वा प्रद्योत्यमानं प्रकाश्यमानमम्बरं आकाशं येन तमिमं विमानं संपश्य संपश्य च हर्षाद् द्विरुक्तिः, द्वीपान् क्षेत्राणि समुद्रान् भूधरान् पर्वतान् नदीः स्वर्णाद्रिम् मेरुम् तस्य मेरोः चूलिकाः शिखराणि वैताढ्याद्रिम् सनातनानि शाश्वतानि आर्हतानि अर्हताम् महाचैत्यानि रम्याणि अपिः समुच्चये संपश्येति सम्बध्यते इति ॥२८४॥

संख्यामानसमन्वितानि विदितान्यन्यानि सर्वाण्यलं
चित्ताश्चर्यविधायकानि बहुशः संदर्श्य संदर्श्य च ।
आनीय स्वपुरीं विमुच्य भुवने तौ तं प्रणम्याऽधिकं
दृष्ट्वा रत्नसमुच्चयं स्तुतिपरौ स्वं प्रास्थिषातां पदम् ॥२८५॥

संख्येति—भुवने लोके सङ्ख्यामानसमन्वितानि संख्यातानि विदितानि ज्ञातानि अन्यानि सर्वाणि बहुशः पुनः पुनः चित्ताश्चर्यविधायकानि कौतुकानि अलमत्यर्थं सन्दर्श्य च स्वपुरीं स्वराजधानीमानीय विमुच्य स्थापयित्वा तं मेघरथमधिकं वारं वारं प्रणम्य रत्नानां समुच्चयं राशिं दृष्ट्वा स्तुतिपरौ तौ भूपतो स्वं पदं प्रास्थिषाताम् ययतुः ॥२८५॥ युग्मम् ॥

अन्येद्युर्वसुधापतिर्घनरथो लौकान्तिकैर्देवतै–
रभ्येत्य प्रणिपत्य भक्तिकलितैर्विज्ञप्त आज्ञावशात् ।
तीर्थं तीर्थपते ! प्रवर्तयतरामेवं विचिन्त्य स्थितिं
राज्ये मेघरथं निवेश्य तनयं तद्यौवराज्ये दृढम् ॥२८६॥

दानं वात्सरिकं प्रदाय जगतां वात्सल्यकृत्पुत्रयोः
शिक्षां च प्रकृतिप्रपालनविधावादाय दीक्षां विभुः ।
छद्मस्थः कतिचिद् दिनानि भगवान् निर्माय वाढं तपो-
दुष्कर्माणि निहत्य केवलविदा कैवल्यमाप क्रमात् ॥२८७॥ युग्मम्

अन्येद्युरिति—अन्येद्यु वसुधापतिः नृपः घनरथः लोकान्तिकैः देवतैः देवसमूहैः भक्तिकल्पितैः भक्तिमद्भिः अभ्येत्य आगत्य प्रणिपत्य आज्ञावशात् प्रतिबोधनरूपस्वाज्ञावशात् वा आज्ञावशात् आज्ञां प्राप्य विज्ञप्तः, किमित्याह-तीर्थपते ! तीर्थं प्रवर्त्तयतराम् । एवं स्थितिं विचिन्त्य दीक्षा-कालं ज्ञात्वा तनयं मेघरथं राज्ये, तस्य यौवराज्ये युवराजपदे दृढं दृढरथं निवेश्य स्थापयित्वा वात्सरिकं वार्षिकं दानं प्रदाय पुत्रयोर्द्वयोः प्रकृतीनां प्रजानां प्रपालनस्य विधौ शिक्षामुपदेशञ्च प्रदाय जगतां सर्वेषां वात्सल्यकृत् प्रियकारकः भगवान् विभुः स्वामी घनरथः दीक्षामादाय कति-चिद्दिनानि छद्मस्थभावे स्थितस्सन् वाढं तीव्रं तपः निर्माय कृत्वा दुष्कर्माणि निकाचितानि अपि कर्माणि निहत्य क्रमात् केवलविदा केवलज्ञानेन तद्धेतुकं कैवल्यमाप निर्वाणं प्राप (प्राप्तः)। "मुक्तिः कैवल्य निर्वाणश्रेयो निःश्रेयसाऽमृतं" इत्यमरः । वा दुष्कर्माणि निहत्य, अत्र कारणे कार्योपचारः दुष्कर्मघाते हि सति केवलज्ञान प्राप्तेरिति भाव. क्रमात् कैवल्यं मोक्षं प्राप २८६॥२८७॥

श्रीमान् मेघरथोऽनुजाश्रितपदः क्ष्मामण्डलं पालय-
न्नन्येद्युः सपरिच्छदोऽवनिपतिर्भृत्यो परोधाद् गतः ।
क्रीडानां रचनाय देवरमणोद्याने महावञ्जुल-
द्रोर्मूले महिषीसखो व्यरचयत् संगीतकप्रेक्षणम् ॥२८८॥

श्रीमानिति—अन्येद्युः अनुजेन दृढरथेनाश्रितौ सेवितौ पादौ यस्य स तादृशः श्रीमान् मेघरथो नृपः अवनीपतिः क्ष्मामण्डलं पालयन् भृत्यो परोधात् भृत्याग्रहाद् सपरीच्छदः परीवार-सहितः क्रीडां कर्तुं देवरमणे तदाख्ये उद्याने क्रीडानां रचनाय विहाराय गतः सन् महिषीसखः महिष्या सह महतः वञ्जुलस्याशोकस्यः "वञ्जुलोऽशोके" इत्यमरः । द्रोर्वृक्षस्य मूले सङ्गीत-कप्रेक्षणम् नाटकं व्यरचयत् ॥२८८॥

प्रादुर्भूय तदैव तस्य पुरतो भूताः परोलक्षकाः
संगीतं विदधुस्तरामभिनयैश्चित्रैर्विचित्रैरपि ।
जिह्वानामधिराट् सहस्रयुगलीमक्ष्णां च यद्वीक्षितुं
स्तोतुं च व्यधितेव सेवकतया प्रार्थ्येव लक्ष्मीपतिम् ॥२८९॥

प्रादुरिति—तदेव नाटकसमये एव तस्य मेघरथस्य पुरतोऽग्रे परोलक्षकाः भूताः प्रादुर्भूय प्रकटीभूत्वा विचित्रैः नानाप्रकारैः चित्रैराश्चर्यकरैः अभिनयैरपि सह सङ्गीतं विदधुस्तराम् चक्रुः । यत्सङ्गीतकप्रेक्षणं वीक्षितुम् अहिराट् शेषनागः सेवकतया शय्यारूपेण सेवकत्वत्वात् लक्ष्मीपतिं विष्णुं प्रार्थ्य इव अक्ष्णां नेत्राणां सहस्रयुगलं स्तोतुञ्च जिह्वानां सहस्रयुगलीं सहस्रद्वयीम् व्यधीत चकारेव, शेषनागस्य सहस्रमुखत्वमेवमुत्प्रेक्षा सङ्गच्छते इति ॥२८९॥

ते तारं विविधाकृतिस्वरभृतो यावद् व्यधुस्ताण्डवं
राट्प्रीत्यै दिवि तावदाविरभवच्चैकं विमानं महत् ।
तन्मध्ये ददृशेऽथ कश्चन नरो दृश्याकृतिः कान्तिमान्
पौलोम्येव पुरन्दरः प्रमदया युक्तः कयाऽप्येकया ॥२९०॥

ते इति—ते भूताः विविधामाकृतिं स्वरांश्च बिभ्रतीति तादृशाः विभिन्नरूपशब्दाः यावत् तामत्युत्तमं ताण्डवं नाट्यं व्यधुः कुर्वन्ति स्म, यावत् राज्ञो घनरथस्य प्रीत्यै प्रसन्नतामुद्दिश्य दिव्याकाशे एकं महत् विमानं प्रादुरभूत् प्रकटितम् दृश्याकृतिः दर्शनीयरूपः कश्चन नरः पुरुषः पौलोम्या इन्द्राण्या युक्तः पुरन्दरः इन्द्र इव एकया कयाऽपि प्रमदया नार्या युक्तः पुरन्दरः ददृशे ॥२९०॥

क्ष्मापोऽथ प्रियमित्रया निजगदे देव्या समासन्नया,
कोऽयं देव ! नरश्च का पुनरियं नारी किमत्रागतौ ? ।
भूमीशोऽभिदधे ततः प्रथमके द्वीपे प्रिये ! भारते
वैताढ्येऽस्त्यलकापुरी परमुदक्श्रेणेर्महाभूषणम् ॥२९१॥

क्ष्माप इति—अथ तद्दर्शनानन्तरम् क्ष्मापः नृपो मेघरथः समासन्नया समीपस्थया प्रियमित्रया देव्या राज्ञ्या निजगदे कथितः, किमित्याह—देव ! अयं दृश्यमानः नरः पुरुषः कः इयं च पुनः नारी का, अत्र किं किमर्थमागतौ ? ततः देवी प्रश्नानन्तरम् भूमीशो नृपो मेघरथः अभिदधे उदत्तरत्, किमित्याह—प्रिये ! प्रथमके द्वीपे जम्बूद्वीपे भारते वैताढ्ये उदक्श्रेणेः उत्तरश्रेण्याः परमुत्तमं महाभूषणम् अलकापुरी अस्ति ॥२९१॥

श्रीविद्युद्रथखेचरप्रभुरलं तां पालयामासिवान्
देवी मानसवेगिका समभवत्तस्य प्रशस्याशया ।
नाम्ना सिंहरथस्तयोः समजनि प्रद्युम्नरूपः सुतो—
मात्रा प्रेक्षितसिंहयुग्यकरथस्वप्नप्रणीताभिधः ॥२९२॥

श्रीति—तामलकां पुरीं श्रीविद्युद्रथाख्यः खेचरप्रभुः विद्याधरेन्द्रः अलं पालयामासिवान्, तस्य विद्युद्रथस्य प्रशस्याशया बुद्धिमती मानसवेगिका तदाख्या देवी पट्टराज्ञी समभवत् ।

तयोर्द्वयोः मात्रा प्रेक्षितेन दृष्टेन सिंहो युग्यं वाहनं "वाहनं यानं युग्यं" इत्यमरः। यस्य तादृशस्य रथस्य स्वप्नेन हेतुना प्रणीता कृता अभिधा यस्य स तादृशः प्रद्युम्नरूपः कामाकृतिः नाम्ना सिंहरथः सुतः पुत्रः समजनि जातः ॥२९२॥

कन्यां वेगवतीं विवाहितचरोऽभाद् यौवराज्यश्रिया
क्रीडाभूधरदीर्घिकावनसरित्स्थानेषु सार्धं तया।
रेमे सिंहरथश्च मन्मथसमः सौभाग्यभङ्ग्या युवा
विद्वांसः परिकीर्त्तयन्ति यदि वा क्रीडाफलं यौवनम् ॥२९३॥

कन्यामिति—वेगवतीं तदाख्यां कन्यां विवाहितचरः ऊढवान् सौभाग्यस्य भङ्ग्या विच्छित्या हेतुना मन्मथसमः कामतुल्यः सिंहरथश्च यौवराज्यश्रिया अभात् शोभते स्म, तथा युवा स सिंहरथः तया वेगवत्या सार्धं सह क्रीडायाः भूधरे पर्वते दीर्घिकायां वाप्यां वने उद्याने सरिति नद्यां स्थाने अन्यत्रापि च तेषु रेमे विहरति स्म, ननु किमिति रमते एवं स इति चेत्तत्राह—यदिवा यतः विद्वांसो यौवनं क्रीडाफलं क्रीडैव फलं यस्य तस्य तादृशं परिकीर्तयन्ति कथयन्ति, यौवने ही क्रीडा स्वाभाविकीति भावः ॥२९३॥

बुद्ध्वाऽन्येद्युरसारमेव सकलं संसारमुर्वीपतिः
पुत्रं सिंहरथं निधाय निजके राज्ये विराजन्नयम्।
प्रव्रज्यां प्रतिपद्य वन्द्यसुगुरोः पादारविन्दान्तिके
चारित्रं प्रतिपाल्य चारु सुचिरं लेभे क्रमाद् निर्वृतिम् ॥२९४॥

बुद्ध्वेति—अन्येद्युः उर्वीपतिः नृपः विद्युद्रथः सकलं संसारम् असारं दुःखान्तं बुद्ध्वा विराजन्नयं नीतिमन्तं पुत्रं सिंहरथम् निजके राज्ये निधाय न्यस्य वन्द्यस्य सुगुरोः पादारविन्दान्तिके प्रव्रज्यां प्रतिपद्य स्वीकृत्य चारु निर्दुष्टं चारित्रं संयमं सुचिरं प्रतिपाल्य क्रमात् निर्वृतिं मोक्षं लेभे प्राप्तवान् ॥२९४॥

राजा सिंहरथोऽपि विक्रमतया विद्याधराधीश्वरान्
सर्वानेव विजित्य चक्रिकमलालीलास्पदं सोऽजनि।
सौर्यं जाग्रति यस्य केवलमहो! सूरे स्थिता सूरता
शून्ये व्योम्नि पलाय्य तस्थुषि तथा चाभ्रे लयं भेजुषि ॥२९५॥

राजेति—स राजा सिंहरथोऽपि विक्रमतया पराक्रमशालितया 'विक्रमतयेति पाठे तु परापक्रान्त्वेनेत्यर्थः' विद्याधराऽधीश्वरान् सर्वानेव विजित्य वशीकृत्य चक्रिणः कमलायाः लक्ष्या लीलानां विलासानामास्पदं स्थानम् चक्रीत्यर्थः अजनि जातः, अहो आश्चर्यम्, यद् यस्य

सिंहरथस्य शौर्ये प्रतापे जाग्रति व्याजृम्भमाणे सति पलाय्य तिरस्कारलज्जाया दूरीभूय शून्ये व्योम्नि, लज्जितो हि शून्यं स्थानमाश्रयतीति भावः । तस्थुषि स्थितवति तथा अभ्रे मेघे लयं निलीनताम्, तेनाच्छादनादिति भावः, भेजुषि प्राप्ते सूरे सूर्ये केवलम् सूरता अथ च सूरे पण्डिते विद्वत्तारूपोऽर्थो वा सूरपदवाच्यता, न तु लोकप्रकाशकत्वरूपोऽर्थोऽपि, स्थिता अवशिष्टा अत्रातिशयोक्तिः ॥२९५॥

भूमीन्द्रः स परेद्यविर्निशि परं विद्राणनिद्राभरो
दध्यौ निष्फलमेव मे गतमिदं जन्मेक्षुसूनं यथा ।
यन्नाऽवन्दिषि नाऽऽर्चयं जिनपतीन् नो केवलज्ञानिनः
कांश्चित् काऽपि महाप्रमादजलधौ मज्जन्ममनोमीनकः ॥२९६॥

भूमीति—परेद्यवि एकदा, अत्र काव्ये तत्र तत्र परेद्यविः इति विसर्गान्तः पाठो दृश्यते, परेद्यवि इति निपातनस्य चाव्ययत्वाद्विसर्गो दुर्लभः, किञ्च विसर्गस्य तत्स्थानीय रेफस्य वा मुद्रक प्रमादकल्पनं न सम्भवति, तत्र तत्र छन्दो भङ्गः प्रसङ्गात् । एवं चायं विसर्गान्तः पाठो भ्रमादिति वा कवेर्निरंकुशत्वादिति वेति ध्येयम् । स भूमीन्द्रः सिंहरथः निशि परमत्यन्तम् विद्राणः विमुक्तः निद्राभरो यस्य स तादृशः विनिद्रः सन् दध्यौ किमित्याह—मे मम इदं वर्त्तमानं जन्म इक्षोः सूनम् पुष्पमिव निष्फलमेव गतम् जातम्, इक्षुसूने हि फलोद्गमो न भवतीति भावः । तत्र फलविशेष्याभावरूपहेतुमाह—यथा-यत् यतः क्वापि जिनपतीन् तीर्थङ्करान् कांश्चिन्नावन्दिषि न आर्चयम्, कश्चित्, केवलज्ञानिनोऽपि नो नैव, अवन्दिषि आर्चयं वेति सम्बद्ध्यते, तत्र हेतुमाह—महाप्रमादे तद्रूपे जलधौ मज्जत् मनोरूपो मीनो यस्य तादृशः, प्रमादाद्धि न वन्दनादि कृतमिति भावः ॥२९६॥

तत् संप्रत्यपि भावतो जिनपतीन् नत्वा कृतार्थीकरो-
म्यात्मानं स कथं भवेन्न हि भटो नंष्ट्वाऽपि युध्येत यः ? ।
ध्यात्वैवं हृदि धातकीशकलके द्वीपे विदेहेषु सो-
ऽप्राचीनेषु च सत्रनाम्नि विजये संकेतगेहे श्रियाम् ॥२९७॥
सीतोदोत्तरतीरगे पुरवरे गत्वैव खड्गे पुरे
वन्दित्वाऽमितवाहनं जिनपतिं देव्या समं भक्तिभाक् ।
आकर्ण्याऽमृतसोदरामधिरसां तद्देशनां शर्मदां
भूयोऽपि प्रणिपत्य तं च ववले हृष्टः पुरीं स्वां प्रति ॥२९८॥युग्मम्॥

तदिति—तत्ततः सम्प्रत्यपि भावतः भावपूर्वकम् जिनपतीन् नत्वा आत्मानं कृतार्थीकरोमि, ननु पूर्वमकृत्वा पश्चात्करणेऽपि कथं कृतार्थतेति चेत्तत्राह—यः नष्ट्वा पूर्वं पलाय्यापि

पुनः पश्चादपि युध्यते, स तादृशो जनः भटः योधः कथं नहि भवेत् ? अपितु अवश्यं भवेदेवेत्यर्थः भटत्वे हि योधनमात्रं प्रयोजकम्, न तु पूर्वं पलायनाद्यपीति भावः, पूर्वमकर्त्ताऽपि पश्चात्कर्त्ता कर्त्ता वेति यावत् । एवमुक्तप्रकारेण हृदि ध्यात्वा विचार्य धातकीशकलके धातकीखण्डे द्वीपे विदेहेषु अप्राचीनेषु पश्चिमेषु पश्चिममहाविदेहेषु श्रियां सम्पदाम् सङ्केतगेहे सङ्केतगृहरूपे, सर्व-सम्पद्युक्तत्वादिति भावः । तत्र नाम्नि विनये च सीतोदाया स्तदाख्यनद्याः उत्तरतीरगे उत्तर दिग्वर्तितीरे परतीरस्थिते पुरवरे रुद्गे पुरे गत्वा भक्तिभाक् सद्भक्तिः स सिंहरथः देव्याः समं सह अमितवाहनं तदाख्यं जिनपतिं वन्दित्वा शर्मदां सुखदाम् अधिरसां स्वाद्वीं रुचिविषया-मित्यर्थः, अमृतसोदराममृततुल्यां तस्यामितवाहनस्य देशनामाकर्ण्य तं जिनपतिं भूयः पुन-रपि प्रणिपत्य नत्वा हृष्टः स्वां पुरीं प्रति ववले परावृत्तश्चेति ॥२९७॥२९८॥

अत्रोर्ध्वं व्रजतो जवादतितरामस्य प्रिये ! चस्खले
यानं मानपरिग्रहाद् विनयवद् वादाच्च सौजन्यवत् ।
एतस्य स्खलनं बभूव किमिति ज्ञातुं त्वधस्ताद् दृशं !
यावत् प्रैरयदेष तावदपि मामत्र स्थितं प्रैक्षत ॥२९९॥

अत्रेति—प्रिये ! प्रियमित्रे ! अत्र ऊर्ध्वं उपरि जवाद् व्रजतः वेगाद् गच्छतः अस्य सिंहरथस्य यानं विमानं मानपरिग्रहात् अभिमानित्वाद्धेतोः विनयवत् वादाद् विवादाद्धेतोः सौजन्यवत् चस्खले प्रतिहतम् । एतस्य यानस्य स्खलनं किं कुतोहेतोर्बभूवेति ज्ञातुम् यावत्तु दृशं नेत्रमधस्तान्नीचैः प्रैरयत् निचिक्षेप, तावदेष सिंहरथः अत्र माम् मेघरथम् स्थितं प्रैक्षत ॥२९९॥

एष क्रुद्विवशः समागमदथोत्क्षेप्तुं चकोराक्षि ! मां
वामोवामकरेण नाम मयकाऽप्याक्रम्यते स्मैषकः ।
वीक्ष्यैतं विरसं रटन्तमियमप्येतत्प्रिया दैन्यभाग्
भीता मां शरणं बभाज रभसात् किंवाऽबलाः कुर्वताम् ! ॥३००॥

एष इति—चकोराक्षि ? अथानन्तरम् एष सिंहरथः क्रुधः क्रोधात् हेतोः विवशः अस्वस्थः सन् मां मेघरथमुत्क्षेप्तुम् ऊर्ध्वं क्षेप्तुम् समागमत्, मयका मयाऽपि वा सव्येतरेण करेण पाणिना नाम वामः कुटिलः एषकः एषः आक्रम्यत स्म, पराभूयते स्म, ततश्च एतं सिंहरथम् विरसं कर्णकटुरटन्तम् आक्रोशमाणं वीक्ष्यावलोक्य दैन्यभाक् दीना भीता च रभसात् झटिति इयमेतस्य सिंहरथस्य प्रिया भार्या मां शरणं बभाज मच्छरणमागता, अबलाः स्त्रियः, अथ च बलरहिताः किं वा अन्यत्प्रति रक्षणादिकुर्वताम् कुर्वन्तु, प्रतिरक्षणादौ बलस्यैवापेक्षणादिति भावः ॥३००॥

कारुण्येन मया व्यमोचि सुभगे ! तन्मुक्तमात्रः पुरः
शक्तिं मे कलयन् विकृत्य बहुधा भूतान् प्रभूतानिमान् ।
सङ्गीतं रचयांचकार चतुरः सङ्गीतकर्मण्ययं
भक्तिं कां विभावयन्ति यदि वा दत्ताभयाः प्राणिनः ॥३०१॥

कारुण्येनेति—सुभगे ! मया कारुण्येन दयया स सिंहरथः व्यमोचि मुक्तः, तत्ततः मुक्तमात्र मुक्तएव शक्तिं कलयन् सामर्थ्यवानयम् मे मम पुरोऽग्रे, यद्वा मे शक्तिं कलयन् जानन्निति वाऽन्वयः । इमान् दृश्यमानान् प्रभूतान् बहुतरान् भूतान् प्रेतान् विकृत्य सङ्गीत कर्मणि चतुरो निपुणोऽयं सिंहरथः सङ्गीतं रचयाञ्चकाराकरोत् । यदि वा यतः दत्ताभयाः अभयदानेनानुकूलिताः प्राणिनः कां भक्तिं न विभाजयन्ति ? अपि तु सर्वमेव विभाजयन्तीत्यर्थः ॥३०१॥

प्रोचेऽथ प्रियमित्रया पुनरिदं प्राणेश्वर ? प्राग्भवे
हार्यं किं कृतमेतकेन सुकृतं जातो यतोऽयं विभुः ! ।
राजाऽप्याऽऽख्यदिदं च पुष्करवरद्वीपार्धके पूर्वगे
क्षेत्रे मुख्यतमेऽस्ति शंखपुरकं नाम्ना समृद्धं पुरम् ॥३०२॥

प्रोचे इति—अथानन्तरम् प्रियमित्रया पुनरिदं प्रोचे पृष्टम्, इदमिति किमित्याह—प्राणेश्वर ! एतकेनानेन सिंहरथेन प्राग्भवे पूर्वजन्मनि हार्यमुत्तमं किम् कीदृक् सुकृतं पुण्यं कृतम् ? यतः सुकृतप्रभावात् अयं सिंहरथः विभुः शक्तिसम्पन्नः जातः ? राजा मेघरथोऽप्याख्यत्कथितवानिदम्, इदमिति किमित्याह—पुष्करवरद्वीपार्धके पुष्करवरद्वीपार्द्धे पूर्वगे पूर्वभागे पूर्वदिग्वर्त्तिनि मुख्यतमे क्षेत्रे भरतक्षेत्रे समृद्धं नाम्ना शङ्खपुरकं पुरमस्ति ॥३०२॥

राड्गुप्ताह्वय आस्त नीतिविदुषां चूडामणिस्तत्र च
प्रख्यातः कुलपुत्रकः समभवद् दारिद्र्यविश्रामभूः ।
प्रेष्यत्वाधिगताशनः प्रतिदिनं तस्य प्रिया शंखिका
साऽपि स्वप्रियवत् परोदवसिते कर्माणि नित्यं व्यधात् ॥३०३॥

राडिति—तत्र शङ्खपुरे च नीतिविदुषां नीतिज्ञानाम् चूडामणिः शिरोमणिभूतः गुप्ताह्वयः गुप्तनामा राड् नृपतिरास्ताभूत्, तत्रैव च दारिद्र्यस्य विश्रामभूः विश्रामस्थानम् परमदरिद्रः, अतएव, प्रेष्यत्वेन भृत्यकर्मणा अधिगताशनः प्राप्तभोज्यः प्रख्यातः कुलपुत्रकः कुलपुत्रः समभवत्, तस्य कुलपुत्रस्य प्रिया भार्या शंखिका, सा शंखिकाऽपि स्वप्रियवत् स्वपतिकुलपुत्रवत् परोदवसिते परगृहे "गृहं गेहोऽवसितं वेश्म सद्म" इत्यमरः । नित्यम् कर्माणि दासीकर्माणि व्यधात्करोति स्म इति ॥३०३॥

स्त्रीपुंसावपि शङ्खपर्वतगिरिं तावन्यदा प्रस्थितौ
नानाशालसमाकुलं फलभरानानेतुमुत्कण्ठितौ ।
अद्यां तत्र यदृच्छया विदधतौ धर्मोपदेशे रतं
वीक्षामासतुरात्मगुप्तिपरमं श्रीसर्वगुप्तं मुनिम् ॥३०४॥

स्त्रीति—अन्यदा तौ स्त्रीपुंसौ शङ्खिकाकुलपुत्रौ फलभरान् फलानि आनेतुमुत्कण्ठितौ सन्तौ नानाशालैः वृक्षैः समाकुलं व्याप्तं शंखपर्वताख्यं गिरिं प्रति प्रस्थितौ गतवन्तौ, तत्र पर्वते यदृच्छया स्वैरम् अद्यां फलभोजनं विदधतौ कुर्वन्तौ तौ द्वौ धर्मोपदेशे रतं परायणम्, आत्मनः गुप्त्या चित्रगुप्त्याश्रयेण हेतुना परमं श्रेष्ठं श्रीसर्वगुप्तं तदाख्यं मुनिम् वीक्षामासतु. ददृशतुः ॥३०४॥

विद्याभृत्कुलमध्यगं मुनिपतिं तौ तं स्फुरत्संमदौ
वन्दित्वा पुरतो निषेदतुरिलापृष्ठप्रतिष्ठासनौ ।
आचष्टैष विशेषतः शुभमतिर्धर्मं तयोरार्हतं
दुःस्थादुःस्थकथाविशेषविलयाद् यत् साधवः स्युः समाः ॥३०५॥

विद्येति—तौ शङ्खिकाकुलपुत्रौ स्फुरत्संमदौ प्रहृष्टौ सन्तौ विद्याभृतां-विद्याधराणां कुलस्य मध्यगं मध्यस्थं तं मुनिपतिम् वन्दित्वा इलायाः पृथिव्याः पृष्ठं तलमेव प्रतिष्ठं दृढकृतमासनं ययोस्तौ तादृशौ पुरतः मुनेरग्रे निषेदतुः उपविविशतुः । एष शुभमतिः सर्वगुप्तमुनि आत्मगुप्तौ आत्मनो रक्षणे न तु शरीरस्य रक्षणे परममुत्कृष्टम्-अध्यात्मभावनानिमग्नम्, वा मनोगुप्त्यादि रक्षणे परमं श्रेष्ठं शुद्धाचारेणात्मरक्षणप्रधानं वा तयोः विशेषतः सानुग्रहम् आर्हतं धर्ममाचष्ट दिदेश, ननु किमिति तादृक्रूपणे तदनुग्रह इति चेत्तत्राह-यद्यतः साधवः दुःस्थादुःस्थाकथा विशेषस्य अयमदुःस्थत्वादनुग्राह्यः दुःस्थत्वाच्चायमुपेक्ष्य इत्येवं कथाविशेषस्य व्यवहारभेदस्य विलयादपगमाद्धेतोः समाः समवृत्तयः स्युः, भेदव्यवहारे हि कुतः समता साधुता वेति भावः ॥३०५॥

दिष्ट्वा धर्ममवस्थिते मुनिपतौ तावेवमाचख्यतु-
र्जातं जन्म च जीवितं च सफलं त्वद्दर्शनाद् नौ प्रभो !
त्वेनैवोपकृतौ च यद्यपि कृती तद् त्वं तथाऽभ्यर्थितो-
दुःखोच्छेदनिबन्धनं समुचितं किञ्चित्तपो नौ दिश ॥३०६॥

दिष्ट्वेति—धर्मं दिष्ट्वा उपदिश्य मुनिपतौ अवस्थिते विरते सति तौ शङ्खिकाकुलपुत्रौ एवमाचख्यतुः पप्रच्छतुः, एवमिति किमितिआह-प्रभो ! त्वद्दर्शनात् तवदर्शनं प्राप्य जीवितं जन्म च

नौ आवयोः सफलं जातम्, साधुसमागम एव जन्मयोः जीवितफलमितिभावः यद्यपि त्वं स्वेनैव प्रेरणयैव उपकृतौ परोपकारे कृती कुशलः, तथापि नौ आवयोः उपकारमर्थितः याचितः अपि सन् दुःखोच्छेदस्य दुःखनाशस्य निबन्धनं कारणं समुचितं यद्योग्यं तत् किञ्चित्तपो दिश कथयेति ॥३०६॥

तद्योग्यत्वमयं विचार्य भगवान् श्रीसर्वगुप्तस्तपो-
द्वात्रिंशत्पदपूर्वकं च तकयोः कल्याणनामादिशत् ।
तत्तावभ्युपगम्य सद्मनि गतौ भावाच्चतुर्थैस्तपो-
द्वात्रिंशत्प्रमितैस्त्रीरात्रियुगलेनैतौ विधत्तः स्म तत् ॥३०७॥

तदिति—अयं भगवान् श्रीसर्वगुप्तः तयोः द्वयोः योग्यत्वं योग्यतां विचार्य तकयोः तयोश्च द्वात्रिंशत्पदपूर्वकं कल्याणनाम द्वात्रिंशत्कल्याणाख्यं तपः आदिशत्, तत्तपः तौ द्वौ स्त्रीपुंसावभ्युपगम्य स्वीकृत्य सद्मनि गृहे गतौ सन्तौ एतौ स्त्रीपुंसौ त्रिरात्रियुगलेन अष्टमद्वयेन द्वात्रिंशत्प्रमितैः चतुर्थैः उपवासैः तत्तपः भावाद् भावपूर्वकं विधत्तः कुरुतः स्म ॥३०७॥

द्वारे निक्षिपतः स्म यावदिमकौ दृष्टिं तपः पारणे
ऽभ्यायान्तं मुनिपुङ्गवं धृतिधरं द्वैधाऽपि तावद् गृहे ।
अद्राष्टां सुकृतस्य सञ्चयमिव प्रोन्मीलदानन्दतः
शुद्धान्नैः प्रतिलाभ्य शेषममृताहारं च तौ जक्षतुः ॥३०८॥

द्वारेइति—इमकौ इमौ शंखिकाकुलपुत्रौ तपः पारणे तयोः पारणादिति यावत् द्वारे दृष्टिं निक्षिपतः द्वारं पश्यतः तावत् द्वैधानाम्नाऽर्थतश्च धृतिधरं मुनिपुङ्गवं गृहे सुकृतस्य पुण्यस्य सञ्चयं राशिमिव अभ्यायान्तमभ्यागतमद्राष्टाम्, तौ च स्त्रीपुंसौ प्रोन्मीलदानन्दतः वर्धमानानन्दपूर्वकम् शुद्धान्नैः प्राशुकैर्भक्तपानाद्यैः तं मुनिं प्रतिलाभ्य शेषम् अमृतम् आहारम्, साधुशिष्टं हि अमृतमेवान्नं भवतीति भावः । जक्षतुः भक्षयामासतुः ॥३०८॥

ग्रामादौ विहरन् कदाचिदभयः श्रीसर्वगुप्तो गुरु-
स्तत्राऽऽगात् स च पुण्यरश्मिभिरिवाकृष्टस्तयोरायतैः ।
गत्वा तं प्रणिपत्य भक्तिकलितौ पीत्वा पुनर्वाक्सुधां
वैराग्योपचयाद् विभिन्नकलुषौ तावादिषातां व्रतम् ॥३०९॥

ग्रामादाविति—कदाचिदेकदा अभयः न विद्यते भयं यस्य तादृशः स च श्री सर्वगुप्तः गुरु ग्रामादौ विहरन् विहारं कुर्वन् तयोः आयतैः दीर्घतरैः महद्भिर्वा पुण्यैः रश्मिभिर्दामभिरिवा-

कृष्टः उन्मुखीकृतः तत्र शंखपुरे नगरे गृहे अगात् भक्तिकलितौ भक्तियुक्तौ तौ स्त्रीपुंसौ तं मुनिवरं प्रतिगत्वा प्रणिपत्य नत्वा पुनः वाक् द्रवत्वात्सुधामिव तां पीत्वा सादरं श्रुत्वा विभिन्न-कलुषौ निष्पापौ क्षीणदुष्कर्माणौ सन्तौ तौ स्त्रीपुंसौ वैराग्यस्य उपचयाद्वृद्धेर्हेतोः व्रतं दीक्षा-मादिषातां जगृहतुः ॥३०९॥

आचामाम्ललसत्पदोपपदगं तद्वर्धमानाभिधं
गीतार्थः सुगुरोर्गिरा स विदधे शुद्धं तपः शुद्धधीः ।
प्रान्ते चानशनं विधाय सुकृती स ब्रह्मलोके दिवे
देवत्वं दशसागरस्थितिमितं संमाप पापक्षये ॥३१०॥

आचेति—स शुद्धधीः शुभमतिः गीतार्थः ज्ञाततत्त्वः सन् सुगुरोः मुनेः गिरा उपदेशतः आचामाम्ललसत्पदोपपदगं वर्धमानाभिधं आचाम्ल वर्धमानाख्यं शुद्धं तत्तयोर्विदधे चकार, उक्तञ्च 'राजगुप्तः स चाचाम्लवर्द्धमानं तपोऽकरोत्' इति प्रान्ते जीवितशेषकाले च ससुकृती पुण्यवान् अनशनं विधाय पापक्षये सति ब्रह्मलोके तदाख्ये दिवि स्वर्गे दशसागरस्थितिमितम् दशसागरोपमायुः परिमाणं देवत्वं सम्प्राप ॥३१०॥

सा शङ्खिकाऽपि विहितोग्रतपः प्रपञ्च संप्राप्तपञ्चमसुरालयलक्षसौख्या।
आयुःस्वकीयमुपभुज्य दशाब्धिमानं प्राणप्रियाऽस्य समजायत दृश्यरूपा ॥३११॥

सेति— सा शंखिका कुलपुत्रप्रियाऽपि विहितेन कृतेन अग्रस्य तपसः प्रपञ्चेन विस्तारेण कृत्वा सम्प्राप्तं पञ्चमस्य सुरालयस्य ब्रह्माख्यस्वर्गस्य लक्षमसङ्ख्या तं सौख्यं यथा स्यात्ता-दृशी स्वकीयं दशाब्धिमानं दशसागरोपमपरिमाणमायुरुपभुज्य भुक्त्वा अस्य सिंहरथस्य दृश्य-रूपा दर्शनीयतरा वेगवत्याख्या प्रिया भार्या समजायत जाता ॥३११॥

एतर्ह्येष निजं पुरं परिगतो राज्ये निवेश्याङ्गजं
मत्तातस्य पदान्तिके भवभिदे दीक्षामुपादास्यते ।
दुष्कर्माणि निहत्य तीव्रतपसा विज्ञानमासाद्य चै-
तस्मिन्नेव भवे सनातनसुखं मोक्षं पुनः प्राप्स्यसि ॥३१२॥

एतेति—एष सिंहरथः एतर्हि अधुना निजं पुरं परिगतः प्राप्तः सन् राज्ये अङ्गजं पुत्रं निवेश्याधिकृत्य मम तातस्य पितुः घनरथस्य पदान्तिके चरणसमीपे भवभिदे संसारोच्छित्तये दीक्षामुपादास्यते ग्रहीष्यति। तीर्मोण तरसा दुष्कर्माणि निहत्य क्षपयित्वा विज्ञानं केवलज्ञान-मासाद्य प्राप्य चैतस्मिन् अनुभूयमान एव भव जन्मनि पुनः सनातनसुखं शाश्वतसुखं मोक्षं प्राप्स्यति ॥३१२॥

इत्थं सिंहरथो निशम्य तदिदं वैराग्यसम्पादकं
श्रीमन्मेघरथोदितं निजपुरं गत्वा निधायात्मजम् ।
प्राज्ये राज्यभरे ततो घनरथाभ्यर्णे गृहीत्वा व्रतं
निर्मायैव तपांसि निर्ममवरः स्वर्लोकमासेदिवान् ॥३१३॥

इतीत्थमिति—सिंहरथः इत्थं तदिदं श्रीमन्मेघरथोदितं श्रीमेघरथोक्तम् वैराग्यसम्पादकं वैराग्योत्तेजकं वचनं निशम्य निजपुरं गत्वा प्राज्ये विशाले राज्यस्य भरे भारे आत्मजं निधाय नियोज्य ततस्तदन्तरम् घनरथस्य अभ्यर्णेऽन्तिके व्रतं दीक्षां गृहीत्वा तपांसि निर्माय कृत्वा निर्ममवरः शमिश्रेष्ठः सन् स्वर्लोकमासेदिवान् स्वर्गं प्राप्तः ॥३१३॥

नरपतिरयं तत्रोद्याने स्वयं प्रियमित्रया
सह दयितया क्रीडां कृत्वा चिराय वसन्तजाम् ।
नरपतिकुलैः सङ्गीतेक्षासविस्मयनमानसैः
प्रकटितपथः कल्याणेनाऽविशद् नगरीं निजाम् ॥३१४॥

नरेति —अयं नरपतिः मेघरथः तत्रोद्याने सर्वर्तुनाम्नि वने दयितया प्रियया प्रियमित्रया सह चिराय वसन्तजां वासन्तिकीं क्रीडां स्वयं कृत्वा सङ्गीतस्येक्षयाऽवलोकनेन कृत्वा सवि-स्मयमानसैः साश्चर्यचेतोभिः नरपतिकुलैः राजसङ्घैः प्रकटितपथः दर्शितमार्गः कल्याणेन सशुभम् निजां नगरीमविशत् प्रविष्टवान् ॥३१४॥

आसीत् श्रीगुरुगच्छमौलि मुकुट श्रीमानभद्रप्रभः
पट्टे श्रीगुणभद्रसूरि सुगुरुश्चारित्रभाजां गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्री मुनिभद्रसूरिकविना सर्गोऽयमेकादशः ॥३१५॥

३१५ श्लोकः निगद व्याख्यान एवेति न व्याख्यायते ॥

व्याख्यातारविशिष्टागममननरताः पक्षपातं भजन्तः,
शास्त्रार्थानां विचारे विदधति नितरां काव्यवृत्तावुपेक्षाम् ।
व्याख्या सर्गेऽतिभक्त्या जिनवरचरणे दर्शनेनादृतेयं,
पूर्णा त्वेकादशे न भवति जिनसुतैः शान्तिभक्त्यैरुपेक्ष्या ॥१॥

इति श्री शान्तिनाथ चरिते एकादश सर्ग व्याख्या समाप्ता ॥११॥

---

अथ द्वादश सर्गादौ मङ्गलाचरणश्लोकः

जीवा जीवाश्रवाद्यैर्विभजनघटना सप्तधा यस्य तत्त्वे,
जीव संसारिमुक्तद्वयविभजनया स्थापतोऽनेकयुक्त्या ।
धर्माधर्माद्यजीवे गदितमवितथं तं नमस्कृत्य शान्तिं,
व्याख्यां सर्गे करोति प्रवितति विषयां दर्शनो द्वादशेऽलम् ॥१॥

## ॥ अथ द्वादश सर्ग व्याख्या प्रारभ्यते ॥

तत्रादौ मङ्गलमाह—

सकलतारकमण्डलनायकः प्रबलमन्मथतापविनायकः ।
जिनपतिर्भवतात् सततं मुदे शुभवतां भवतां मृगलाञ्छनः ॥१॥

सकलेति—सकलस्य तारकाणां सदुपदेशादिना भवाब्धिसन्तारकाणां मुनीनां मण्डलस्य नायकोऽधीशः, मुनिपतिरित्यर्थः । तथा, प्रबलस्य त्रिजगज्जन्तुमनोविक्षेपकरणेऽतुलबलस्य सर्वाभिभवसमर्थस्य मन्मथस्य कामसम्बन्धिनः तापस्य ज्वरस्य सन्तापस्य विनायकः विनाशकः, तथोपदेशादिना दूरीकरणात्संयमादिना नाशनाद्वा विघ्न इव, कामजेतेत्यर्थः, मृगलाञ्छनः जिनपतिः श्री शान्तिनाथः शुभवतां भाग्यशालिनां भवतां श्रोत्रादीनां मुदे हर्षाय सततं, न तु यदा कदाचिदेव, भवतात्स्मात् भाग्यवत्स्वेव जिनपतिकृपेति भावः । अत्रनायकः विनायक इत्यन्त्यानुप्राससङ्कीर्णः शुभवतां भवतामिति यमकालङ्कारः । अत्र सर्गे प्रायः द्रुतविलम्बितं छन्दः, तल्लक्षणं यथा—"द्रुतविलम्बितमाह नभौभरा" विति ॥१॥

कथां प्रस्तौति—

अथ स मेघरथः श्रितपौषधः सदनमध्यगपौषधसद्मनि ।
समुपदेष्टुमुपाक्रमताऽन्यदा वसुधियां सुधियां सुवृषं पुरः ॥२॥

अथेति—अथ अन्यदा स पूर्ववर्णितः मेघरथः तदाख्यो नृपः श्रितपौषधः गृहीतपौषधव्रतः सन् सदनानां राजप्रसादानां मध्यगे मध्यस्थिते पौषधसद्मनि पौषधालये, वसुधियाम् वसुः अष्टोधियः धीगुणाः शुश्रूषादयो येषां तेषां गुणशालिनां सुधियां बुद्धिमतां पुरेऽग्रे सुवृषं धर्मकथाम् समुपदेष्टुं कथयितुमुपाक्रमत प्रारेभे इति ॥२॥

क्षितिभुजोऽस्य तदाङ्कतले पतत्कलरवो न्यपतत् सभयोऽपरात् ।
त्वमव मामिति मर्त्यगिराऽवदत् स जगदे जगदेकनियोगिनाम् ॥३॥

क्षितीति—तदा देशनासमये अस्य क्षितिभुजः मेघरथस्य अङ्कतले क्रोडे उत्सङ्गे इति यावत्, अवरात् अन्यस्मात् कस्माच्चित्सभयः भीतः पतत्कलरवः पक्षिकपोतः "पतत्रि पत्रि

पतग पत्ररथा द्रजाः'' इति पारावतः कलरवः कपोत इतिचामरः । न्यपतत् पपात । मर्त्यगिरा मनुष्यवाण्या, त्वं मामवर रक्ष, इतीत्थमवदच्च, स कपोतः जगदेकनियोगिना सर्वजगदधीश्वरेण मेघरथेन जगदे कथितः ॥३॥

अथ तत्कथनप्रश्नमेवाह—

अयि ! विहङ्गम ! भीतिरपास्यतां निजकुलायवदत्र निवास्यताम् ।
इति नृपेण कृपारससिन्धुनाऽप्यभिहिते स समाश्वसत् ॥४॥

अयीति—अयि ! विहङ्गम ! भीतिः अपास्यताम् त्वया त्यज्यताम्, अतएव, निजकुलायवत्स्वनीडवत् अत्र मदुत्सङ्गे निवास्यताम् निवासं क्रियताम्, निजगृहं हि सर्वस्याभयस्थानमिति भावः । इत्युक्तप्रकारेण कृपारससिन्धुना करुणालयेन तेन नृपेण मेघरथेन अभिहितेन वचने अभिहिते कथिते सति, एकत्र नपुंसके भावेऽन्यत्र च कर्मणि क्तः । स कपोतः समाश्वसत् ॥४॥

अत्रावसरे श्येनागमनमाह—

अशनभूतमिमं मम भूपते ! झटिति मुञ्च च तद्वदुदीरयन् ।
इति तदैव शशादनपक्षवाननुपदं नुपदं ददताऽऽगमत् ॥५॥

तदैव कपोतागमसमय एव अनुपदं कपोतपदमनुपश्चात् पदं स्वचरणं ददन्नु न्यस्यन्निव, एतेन श्येनस्य कपोतपृष्ठानुधावनं सूच्यते । भूपते ! मम अशनभूतम् भोजनसाधनमिमं कपोतं झटिति मुञ्च त्यज इतीत्थं तदुत् कपोतवन्मनुष्यवाण्या उदीरयन् - उच्चरन् शशादने ''शशादनः पत्री श्येन'' इत्यमरोक्तेः श्येनः पक्षवान् पक्षी श्येनपक्षी आगमत इति ॥५॥

अथ नृपकृतोत्तरमाह—

नृपतिरेवमुवाच शशादनं कथमहं तव कैतकमर्पये ?
न खलु बाहुभवा गणनाङ्कं प्रददते ददते शरणागतम् ॥६॥

नृपतीति—नृपतिः मेघरथः शशादनं श्येनं प्रत्येवं वक्ष्यमाण प्रकारेणोवाच, तदेवाह—अहम् तवक तव एतकमेतं कपोतं कथम् अर्पये ददामि, अदाने एव हेतुमाह—बाहुभवाः क्षत्रियाः ''राजन्यो बाहुजः क्षत्रियो विराट्'' इत्यमरः, ''बाहू राजन्यः कृत'' इति श्रुतेरिति भावः । शरणागतं त्राणार्थं शरणे समुपस्थितं प्राणिनम् गणनाङ्कं वधं प्रददते वधकाय न ददते खलु, शरणागतं तद्धिंसकाद्रक्षतीत्यर्थः ॥६॥

द्विज ! तवाप्युचितं न भवेदिदं यदपरासुमदर्दनजाङ्गलैः ।
स्ववपुषः क्रियते परिपोषणं नयवताऽयवता च विगीयते ॥७॥

द्विजेति—द्विज ! पक्षिन् ! ''दन्त वि ''शकुंति पक्षि शकुने शकुंत शकुनद्विजा'' इत्यमरश्च, प्राण्डजा द्विजा'' इत्यमरः । इदं तवापि उचितं न भवेत् नास्ति, इदमिति किम्,

तदाह-यत् अपरेषामन्येषामसुमतां प्राणिनामर्दनैः पीडनैः, मर्दनं वधंकृत्वा जाङ्गलैर्मांसैः पक्षिभिश्च स्ववपुषः स्वशरीरस्य परिपोषणं क्रियते, हिंसकजीवा हि विगीयते इति भावः, तदेवाह—नयवता नीतिज्ञेन अयवता भाग्यवता शुभकर्मानुष्ठानवता च विगीयते निन्द्यते इदं हिंसनमित्यर्थः। "अयः शुभावहो विधि" रित्यमरः ॥७॥

अदनगोचरतामुपपादितेऽपि पतगेऽत्र विनाशमवापिते ।
सुहितता क्षणिका तव सेत्स्यते जननमाननमाऽस्य तपस्विनः ॥८॥

अदनेति --अत्रास्मिन् पतगे पक्षिणि विनाशम् मृत्युमवापिते प्रापिते, हत्वा इत्यर्थः, तथा अदनस्य भक्षणस्य गोचरताम् विषयामुपपादिते कृते, भक्षितेऽपि इत्यर्थः। तव श्येनस्य क्षणिका क्षणमात्रस्थायिनी सुहितता तृप्तता, भोज्यजीर्णे पुनरपि बुभुक्षोदयादिति भावः। सेत्स्यति, सम्पत्स्यते, अस्य तपस्विनः अहिंसकत्वाद्दीनत्वाच्च वा निरपराधित्वाच्च मुनितुल्यस्य पक्षिणः जननमानस्यायुः परिमाणस्य नमानतिः, ह्रास इत्यर्थः, एकत्र क्षणिका तृप्तिरपरत्र सर्वायुर्नाश इति महत्तारतम्यम्, अत एवेदं हिंसनमनुचितमिति भावः ॥८॥

ननु स्वप्राणरक्षणमावश्यकमितिचेतत्राह—

असव एव न तेऽपि सनातनाः पिशितभक्षणलक्षणकर्मणा ।
खग ! भवांश्च भविष्यति निश्चितं कुगतिं सङ्गतिसञ्चित दुःख भाक् ॥९॥

ते तव श्येनस्य असवः प्राणा अप्येव सनातनाः सर्वदा स्थायिनः नैव, "जातस्य हि ध्रुवो मृत्यु" रित्युक्तेरिति भावः, ननु यावज्जीवेत्सुखं जीवेदिति चेन्न, परलोके दुःखसद्भावादित्याह—खग ! भवांश्च भवानपि पिशितस्य मांसस्य भक्षणलक्षणेन भक्षणरूपेण कर्मणि 'कार्येण कुमतेस्सङ्गतिः प्राप्ति र्येनैवं विधेन सञ्चितेन सञ्चितकर्मणा दुःखभाक् नरकादि दुःखभागी निश्चितं यथा स्यात्तथा भविष्यति' वा कर्मणा कुगते र्नरकस्य सङ्गत्या प्राप्त्या सञ्चितदुःखभाक प्राणिवधाद्युपार्जितनरकदुःखभाग् निश्चितं यथा स्यात्तथा भविष्यति ॥९॥

ननु प्राणिवधान्नरकप्राप्तिरित्येव कुत इति चेत्तत्राह—

निरपराध शरीरिनिबर्हणं तदितजाङ्गलभक्षणनिर्मितिः ।
द्वयमिदं नरकाध्वनि शम्बलं निजगदुर्जगदुत्तमशेखराः ॥१०॥

जगति ये उत्तमास्तेषुशेखराः वा जगतां उत्तमा शेखराः शिरोमणयः पुरुषोत्तमाः ज्ञानिनः निजगदुः कथयामासुः, किमित्याह—निरपराधानां शरीरिणं प्राणिनां निबर्हणं हिंसनम्, तदिव तथैव, तदित जाङ्गलेति तेन निबर्हणेन इतस्य प्राप्तस्य जाङ्गलस्य मांसस्य भक्षणनिमित्तः

वा जाङ्गलस्य पक्षिणः पशोश्च भक्षणनिर्मितिः भक्षणानुष्ठानम् इदं द्वयम् नरकाध्वनि नरकमार्गे शम्बलं पाथेयम्; नतु स्वर्गमार्गे, एवञ्चास्माद्द्वयान्नरकप्राप्तिरित्यर्थः ॥१०॥

**किञ्चात्मनः प्रतिकूलानि परेषां न समाचरेदित्याह—**

भवति पिच्छविकर्षणतो यथा ननु तवाऽपि सुदुःसहवेदना ।
किमपरस्य तथा न विचिन्त्यतामनुभवोनु भवोत्तर एव तत् ? ॥११॥

यथा पिच्छविकर्षणतः बर्हाऽऽकर्षणतः बर्हव्यपरोपणतः तवाऽपि दुःस्सहवेदना ननु निश्चयेन भवति, तथा अपरस्य प्राणिनः किं न ? अपि भवत्येवेत्यर्थः । तत्ततः अनुभवः भवोत्तरः अलौकिकः एव नु स्वस्य विलक्षणोऽनुभवः एव विचिन्त्यताम्, एवमपरस्यापि भवतीति ॥११॥

**अनित्यत्वाच्च देहादीनां तदर्थं बधोऽन्याय्य इत्याह—**

वपुरिदं शरदब्द चलाचलं विगणयंश्चपलाचपलं बलम् ।
इह परत्र च निर्वृतिमर्हतामतनुतां तनुतां वधमेव कः ? ॥१२॥

इदं वर्तमानवपुः शरीरम् शरदब्दवत् शरद्घनवत् चलाचलमस्थिरम् अनित्यमित्यर्थः, बलम् शरीरबलञ्च चपला विद्युत्सेव चपलामस्थिरम् विगणयन् जानन् विचारयश्च इह परत्र परलोकेच अतनुताम् महतीं निर्वृतिम् सुखमर्हताम् इह परलोकसुखयोग्यानाम् प्राणिनां मध्ये कः प्राणिवधं करोतु ? न कोऽपि करोत्वित्यर्थः । इह परलोकसुखेक्षुणा हि वधादिरन्तव्यमित्यर्थः ॥१२॥

**अथ मेघरथोक्तिमुपसंहरति—**

तदपहाय शरीरि परासनं पललभक्षणलोलुपतां तथा ।
खग ! दयापर एधि ! यथेदृशी न भवता भवता पुनराप्यते ॥१३॥

तदेति—खग ! तत्ततः हेतोः शरीरिणां परासनं हिंसनम् तथा पललस्य मांसस्य भक्षणे लोलुपतां सतृष्णत्वं चापहाय त्यक्त्वा दयापरः दयावान् एधि भव, दयाधर्मं पालयेत्यर्थः । यथा येन प्रकारेण भवता त्वता पुनः ईदृशी तिर्यग् योन्यादिरूपा भवता संसारिता योनिः न आप्यते, दयाधर्मपालनात्सज्जन्मलाभो भवतीति भावः ॥१३॥

अथ खगोऽपि जगौ जगतीपतिं तदुदितं विनिवेश्य हृदन्तरे ।
अवितथं तदिदं प्रतिपन्नवानशरणः शरणं यदयं त्वकाम् ॥१४॥

अथेति—अथ खगः श्येनोऽपि तेन मेघरथेन उदितं कथितं हृदन्तरे मनसि विनिवेश्य कृत्वा सम्यग्बुद्ध्वेत्यर्थः, जगतीपतिं मेघरथं जगौ, किमित्याह—यदयं कपोतः यद् यस्माद्ऽशरणः

शरणरहितः त्वकां त्वां शरणं प्रतिपन्नवान् तदिदमवितथं सत्यम्, यद्वा त्वकाम् त्वाम् शरणं रक्षकम् प्रतिपन्नवान् स्वीकृतवान् तत्तो हेतोः अशरणः अवध्यः, इदमवितथं सत्यम्, ॥१४॥

अग्रे वक्तव्यमाह—

परमहं क्षुधया पारपीडितः क्षितिपते ! शरणं कमधिश्रये ?
क्वचन नाभ्युपपत्तिविनिर्मितौ, किमहता महतामविशेषता ? ॥१५॥

परमिति—क्षितिपते ! परं किन्तु क्षुधया परिपीडितः अहं कं शरणं क्षुधा–पीडानाशकत्वाद्रक्षणमधिश्रये ? को मम क्षुधां नाशयिष्यतीति प्रश्नः क्वचन कुत्रापि स्थले अभ्युपपत्तेः शरणस्य विनिर्मितिः न, अहता अविनाशित्वं किम् महतां अविशेषता, अपितु नैव ॥१५॥

क्षुधापीडितस्यापि रक्षणं धर्ममेवेत्याह—

इममहो ! परिपालयितुं यथा प्रयतसे न तथा कथमेव माम् ? ।
क्षुदुपतापहतासुगणोऽपि मे-ऽरमयते मयते च विदां पराम् ॥१६॥

इममिति—इमं कपोतं परिपालयितुं रक्षितुं यथा प्रयतसे प्रयत्नं करोषि, तथैव मां परिपालयितुं कथं न, प्रयतसे ? इति प्रश्न. । ननु तव का विपदित्याह–मे ममापि क्षुधः बुभुक्षवः उपतापेन पीडया हत' असुगणः प्राणराशिः अरं शीघ्रमयते गच्छति, क्षुधा मृतप्रायोऽहमित्यर्थः । परामुत्कृष्टां विदाम् विदां वेदनामयते गच्छति चेत्यर्थः । अहो ! एकस्य रक्षणमपरस्य नेति भेदनीतिराश्चर्यमित्यर्थः ॥१६॥

नहि बुभुक्षितस्य भक्तिरिति लोकोक्तिमनुसन्धायाह—

सुकृत किल्बिष तत्त्वविवेचनं भवति सौस्थ्यवतामिह भूस्पृशाम् ।
विदधते किमकृत्यमहो ! नवा सुकृतिनः कृतिनश्च बुभुक्षिताः ॥१७॥

सुकृतेति—इहलोके सौस्थ्यवतां बुभुक्षादिराहित्येन स्वस्थचेतसां भूस्पृशां प्राणिनां सुकृतस्य पुण्यस्य किल्बिषस्य पापस्य च तत्त्वस्य विवेचनम् हेयोपादेयतया चिन्तभवति विधीयते इत्यर्थः "स्वस्थे चित्तवद्धयः मञ्जरन्ती सम्भवन्ती" युक्तेरिति भावः । अहो इति खेदे, सुकृतिनः धार्मिकाः कृतिनः पण्डिताश्च बुभुक्षिताः क्षुत्पीडिताः सन्तः किम्वा अकृत्यं प्राणिवधादिकरूपं न विदधते ? कुर्वते, अपितु सर्वमेवाकृत्यं विदधते इत्यर्थः ॥१७॥

अथ श्येनोक्तिमुपसंहरति—

तदमुना सुकृतेन कृतं प्रभोऽशनमिदं मम सांप्रतमर्पय ।
जगति पुण्यवतां समवृत्तितां सुमनसो मनसो व्रतेतराम् ॥१८॥

तदेति—तत्ततः अमुना त्वदुपदिष्टेन सुकृतेन पुण्येन कृतम् बुभुक्षितस्य नैतेन सुकृतेन प्रयोजनमित्यर्थः । अतः, प्रभो ! साम्प्रतं मम इदं कपोतरूपमशनं भोजनमर्पय । ननु मा भूते

सुकृतेन प्रयोजनम्, तथापि समदृष्टिस्त्वास्थेयैवेति चेत्तत्राह—सुमनसः ज्ञानिनः जगति पुण्यवतां मनसः समवृत्तितां भ्रुवतेतराम्, पुण्यवतां कृते समता नाम, मादृशानां पलादानान्तु सा जीवनाशायैवेति न मत्कृते सेति भावः ॥१८॥

तदशने पतगस्य दुराग्रहं समवलोक्य जगाद धराधवः ।
कलय मे श्रुतशास्त्रविबोधतः सहृदयं हृदयं च दयाश्चितम् ॥१९॥

तदिति— तस्य कपोतस्याशने भक्षणे पतगस्य श्येनस्य दुराग्रहम् समवेक्ष्य धराधवः महीपः मेघरथः जगाद । किमित्याह— मे मम श्रुतस्याकर्णितस्य आगमस्य च विबोधितः सम्यक् तत्त्व—ज्ञानात् हृदयं स्वमनः सहृदयं जिनोपदिष्टतत्त्वासितं अतएव दयाश्चित् दयोपेतं च कलय संपश्य, दयालुत्वान्नाहं तुभ्यं कपोतमर्पयिष्यामि, वा विबोधितः ज्ञानोपदेशतः हृदयं स्वमनः सहृदयं सहानुभूतिमद् दयाञ्चितं दयालुं च कलय कुरु, नतु पापे कदाग्रहीस्या इतिशेषः ॥१९॥

ननु तर्हि मम बुभुक्षायाः का गतिरिति चेत्तत्राह—

कलरवेण समं तुलितं निजं पिशितमर्पयितुं भवतः क्षमे ।
न पुनरेतमहं करुणारस प्रसर वासरवाऽर्जितकीर्तिभृत् ॥२०॥

कलेति—कलरवेण कपोतेन समं तुलितं, कपोतभारपरिमाणम् निजं स्वकं पिशितं मांसम् भवतः त्वत्कृते अर्पयितुं क्षमे समर्थोऽस्मि, ननु तर्हि कपोतमेव कथं न ददासीति चेत्तत्राह—अहम् करुणारसस्य प्रसरस्य प्रवाहस्य वासरवेण आस्पदत्वकीर्त्तनेनार्जितकीर्तिभृत् प्राप्तकीर्तिः दयालुरित्येवं स्यातः सन् एतं कपोतं पुनः न नैवार्पयितुं क्षमे, अन्यथा पूर्वोक्तकीर्तिलोपप्रसङ्ग इति भावः ॥२०॥

तदुदिते मुदितेन पतत्रिणाऽभ्युपगते नृपतिः स तुलांशके ।
न्यधित पत्रिणमेकत एकतः स्वपललं पललम्भनलालसः ॥२१॥

तदिति—मुदितेन प्रसन्नेन पतत्रिणा श्येनपक्षिणा तस्य मेघरथस्य उदिते वचने अभ्युपगते स्वीकृते सति सः नृपति' तुलायाः अंशके भागे एकतः एकत्र पत्रिणं कपोतम्'' एकतः अन्यत्र भागे च स्वस्य स्वशरीरस्य पललं मांसम् पललम्भने लालसः निहितस्य स्वमांसस्य कपोतातुलितत्वे पुनरपि अधिकमांसदानेच्छुः सन् एतेन तस्य पक्षिरक्षणे महानुत्साहस्सूचितः न्यधित स्थापितवान् दत्तवान् इति ॥२१॥

क्षुरिकया प्रविदार्य्य तनुं पलं क्षिपति तत्र नृपः स यथा यथा ।
अपि परं पतगोऽपि तथा तथा क्षितिभृतोऽतिमतोऽजनि भारवान् ॥२२॥

क्षुरीति—स नृपः मेघरथः क्षुरिकया तनुं स्वशरीरं प्रविदार्य छित्वा यथा यथा पलं मांसम् क्षिपति तुलायां निदधाति, पतगः कपोतपक्ष्यपि तथा अतिधृतः भारातिशयवतः क्षितिभृतः राज्ञो मेघरथात् परमधिकं यथा स्यात्तथा भारवान् गुरुरजनि जातः ॥२२॥

खगमवेक्ष्य महाविवधं नृपः स्वमपि तत्र पवित्रमतिर्न्यधात् ।
विततमात्तरसत्वमपेक्षयाऽप्यतुलया तुलया तुलयन्निव ॥२३॥

खगेति—नृपः पवित्रमतिः शुचिमनाः, अतएव खगं कपोतपक्षिणं महाविवधं अतिभारं गरीयांसमवेक्ष्य विचार्य दृष्ट्वा वा स्वमात्मानमपि स्वसर्वशरीरमपि तत्र तुलांशे, विततं प्रसिद्धमात्तर-सत्वम् स्वीकृतपरिपालनयोग्यतम् अतुलया अनन्यया अतुलया अपेक्षया कार्यकालमपेक्ष्य तुल-यन् मानं कुर्वन्निव मदीया दयालुता कार्यकाले सती नवेति विवेचयन्निवेत्यर्थः न्यधात् अस्थाप-यत् इति ॥२३॥

तमधिरूढचरं च ततस्तुलां जनपरम्परया विनिशम्य च ।
सचिवमुख्यजनाः समुपागताः सपदि संपदि संचितमूचिरे ॥२४॥

तमिति—ततः तुलाम् अधिरुढम् चरमधिरुढम् जनपरम्परया कर्णाकर्णि विनिशम्य राजा तुलामधिरुढ इत्येवं लोकमुखाच्छ्रुत्वेत्यर्थः। सपदि तत्कालम् समुपागताः सचिवमुख्याः जनाः सम्पदि संचितम् लक्ष्मीविषये राशीकृतम्, प्रचुरलक्ष्मीसमृद्धमित्यर्थः। तं राजानमूचिरे अत्र सानुस्वारनिरनुस्वारयोर्न यमकबाधकत्वमिति बोध्यम् ॥२४॥

किमूचिरे इत्याह—

भवति जीवति जीवति केवलं सकल एव जनोऽवनिनायक !
स्फुरति देहिनि देहमधिश्रिते करणकारणकार्यसमुच्चयः ॥२५॥

अवनिनायक ! राजन् ! केवलम् एकस्मिन् भवति त्वयि जीवति सति एव सकलः जनः अस्मदादिः प्रजावर्गः जीवति, राजनाशे प्रजानाशादिति भावः, तत्र दृष्टान्तमाह-देहिनि जीवे देहमधिश्रिते स्फुरति सति करणानामिन्द्रियादीनां कारणकार्यसमुच्चयः कारणकार्य-भावः, अथवा-करणानि इन्द्रियाणि कारणं देहादि कार्यं ज्ञानादि एतत्सर्वं कर्तृभूते जीवे विद्य-माने सति नान्यथेति, अन्यथा तु जीवनाशे इन्द्रियादीनामपि नाश एवेति भावः ॥२५॥

एकानेकयोरनेकस्यानुरोधः श्रेयानित्याह—

पतगमात्रकलेवरपालने प्रकृतिपालनकर्मणि कर्मठम् ।
न कथमिच्छसि जीवितमात्मनो वसुमती सुमतीश्वरताऽस्ति यत् ? ॥२६॥

पतगेति—पतगमात्रस्यैकस्य पक्षिणः कलेवरस्य शरीरस्य पालने रक्षणमपेक्ष्य प्रकृतानां प्रजानां पालने कर्मणि कर्मठं शक्तमात्मनः स्वस्य जीवितं कथं न इच्छसि, किञ्च, यद्यतः सुमतीश ! धीमन् वसुमती पृथ्वीरता तेऽनुकूला अस्ति, जगत्त्वयि रज्यति, नतु विरज्यति, ततश्च जगद्रक्षणाय त्वया जीवितं रक्षणीयम्, वरमेकपतगनाशः, जगति विरक्ते हि यथा तथा जीवितत्यागो राज्ञः समुचित इति भावः ॥२६॥

किञ्चायं कपटकपोत इत्याह—

कपटनाटक सूत्रण सूत्रभृत् किमसुरो यदि वा सुर एषकः ।
क्वचन भार इयान्न निरैक्ष्यत प्रवसतां वसतां च पतत्रिणाम् ॥२७॥

कपटेति—एषकः कपोतः कपटनाटकस्य मायाकर्मणः सूत्रेण विस्तारेण सूत्रभृत्सूत्रधारः असुरः सुरो वा किम् ? ननु कुत एष प्रश्नः इति चेत्तत्राह—प्रवसतामुड्डीयमानानां वसताम् उपविष्टानाञ्च पतत्रिणाम् पक्षिणाम् इयान् भारः ईदृग्गुरुत्वम् क्वचनापि न निरैक्ष्यत दृष्टः, ततोऽयं कपोतः सुरोऽसुरोवा अन्यः यो वा भवतु पक्षी तु नास्त्येवेति भावः ॥२७॥

नह्यल्पस्य हेतोर्बहु हातव्यमित्याह—

बहुलमल्पकृते गमयन् जनो न विदुषां धुरि कीर्तनमाश्रयेत् ।
इति विमृश्य निजाऽसुपरिक्षयाद् विरम सारमसारमतः परम् ॥२८॥

बहुलमिति—अल्पकृते अल्पस्य हेतोः बहुलमधिकं गमयन् त्यजन् जनः विदुषां धुरि अग्रे कीर्तनं प्रशंसां न आश्रयेत् प्राप्नुयात्, इतीत्थं सारं तत्त्वं विमृश्य विचार्य निजासु परिक्षयाद् स्वप्राणार्पणाद्विनाशाद्विरम निवर्त्तस्व, अतः परमन्यत् अल्पस्य कृते बहुत्यागोऽसारम् न वरमित्यर्थः ॥२८॥

ननु परोपकारो विधेय इति चेत्राह—

उपकृतीः कुरुषेऽत्र परः शताः पुरुषरूपममुं परिपालयन् ।
सुकृतमर्जयसे सुतरां प्रभो ! मतिमताऽतिमताः क न नीतयः ? ॥२९॥

उपेति—पुरुषरूपममुं निजात्मानं परिपालयन् रक्षन् अत्रलोके परः शताः असङ्ख्याता उपकृतीः परोपकारान् कुरुषे करिष्यसि करोषि अकरोश्च, तथा प्रभो ! सुतरामतिशयेन सुकृतं पुण्यमर्जयसे सञ्चेष्यसि सञ्चिनोषि समचिनोश्च, तस्माद्बहूकृतेऽल्पत्यागो वरमित्येव नीतिः, तदाह—मतिमता ज्ञानिना नीतयः क्व न अतिमताः पूजिता ? अपि तु सर्वत्रैव नीतिराश्रितैवेत्यर्थः ॥२९॥

इति ससंभ्रममभ्रमतो हिताः नरपतिं प्रति यावदवादिषुः ।
प्रकट एव च तावदभूत् पुरः सुरवरो स्वरोष विनाकृतः ॥३०॥

इतीति—हिताहितेच्छवः जना नरपतिं प्रति अप्रमत्तः अप्रमत्तो यथार्थभावेन हिताः हितेच्छवः निश्चयेन, विना सन्देहमित्यर्थः, ससम्भ्रमम् यावद् इति पूर्वोक्त त्वरितम् भवादिषु: उक्तवन्तः, तावत् खरोषविनाकृतः क्रोधं 'शब्दोच्चारं क्रोधं च विना तद्रहित इत्यर्थः । विना तूष्णीञ्च धारयन् सुरवरः कोऽपि श्रेष्ठ प्रकटोऽभूत् इति ॥३०॥

स नृपतिर्विमलामलकप्रम प्रवरमौक्तिकहारविराजिना ।
दलयता रुचिभिस्तमसां चयं सुमनसा मनसाऽभिदधे ततः ॥३१॥

सेति—ततः प्राकट्यानन्तरम् विमलानामुज्ज्वलानाम् आमलकप्रमाणाम् धात्रीफल-प्रमाणानाम् प्रवराणामुत्तमानां मौक्तिकानां हारेण विराजिना शोभमानेन रुचिभिः स्वकान्तिभिः तमसां चयमन्धकारसमूहम् दलयता नाशयता सुमनसा देवेन स नृपतिः मेघरथः मनसा हृदय-पूर्वकम् यथार्थ रूपेण अभिदधेय कथितः ॥३१॥

देवोक्तिमेवाह—

तव समीक्ष्य गुणान् गगनातिगान् ध्रुवमुवाद कणादमुनिर्गुणान् ।
स्वसमये गुणसौरभवर्जितान् स्वमति संमति सङ्कलितान् वयः ? ॥३२॥

तवेति—कणादिमुनिः वैशेषिकशास्त्रप्रणेता स्वमतेः सम्मत्या न त्वन्यमतेरपि सङ्क-लितेत्यर्थः स्वसमये निजशास्त्रे वैशेषिकशास्त्रे तव गुणान् गणनातिगान् सङ्ख्यातान् समीक्ष्य गुणान् रूपादीन् गुणस्य सौरभात्सम्बन्धाद्वर्जितान् निर्गुणान् उवाद जगौ, गुणेषु गुणा न वर्त्तन्ते इति तन्मतमिति भावः । ध्रुवमेवमहं मन्ये इत्यर्थः गुणेषु गुणानां वृत्तौ तेषां परिमितत्वमेव स्यात्, न च तथा, तव गुणानामानन्त्यात् एवञ्च कणादस्य गुणानां निर्गुणत्वकथनम् त्वद्गुणा-नन्त्यमूलकमेवोत्प्रेक्ष्यते, अन्यत्र गुणानामानन्त्याभावादिति भावः ॥३२॥

सम्प्रति स्वागमनहेतुमाह—

वृषभवाहनदैवतनायकः समितिवर्णनमाधिततावकम् ।
अहमहो ! असहिष्णुरिहाऽऽगमं प्रभवतो भवतोऽथ परीक्षणे ॥३३॥

वृषभेति—वृषभवाहनो दैवतनायकः ईशानेन्द्रः वा वृषभो वाहनं यस्य स चासौ दैवतानां दैवतानां नायको नेता च तादृश ईशानेन्द्र तावकम् त्वत्सम्बन्धि समितिवर्णनम् सभाया वर्णनं अधिताकरोत्, अहो ! इत्याश्चर्ये, अथ असहिष्णुः ईर्ष्यालुरहस्यम् प्रभवतः समर्थस्य भवतः तव परीक्षणे परीक्षणनिमित्तमिह आगमम् ॥३३॥

श्रितभवान्तरवैरनिपातशौ युधमधिश्रयतः स्वरसादिमौ ।
समधिशय्य तनुं च तदेतयोर्वितवां स्ततवाक् ! सुपरीक्षणम् ॥३४॥

श्रितेति—श्रितेनाश्रितेन भवान्तरस्य वैररूपेण अवशौ अस्वस्थौ इमौ श्येनकपोतौ स्वरसात् स्वेच्छयैव युघमधिश्रयतः युध्येते. तत्ततः एतयोर्द्वयोः पक्षिणोः तनुं शरीरं समधिशय्याधिष्ठाय ततवाक् विस्पष्टभाषः सन् सुपरीक्षणम् विततवान् कृतवानस्मि ॥३४॥

इति निवेद्य विधाय धराधवं झगिति सज्जमियाय दिवं सुरः ।
नृपतिमन्त्रिजना अनुयुञ्जते स्म विनता विनतातनु भूरुचः ॥३५॥

इतीति--इतीत्थं निवेद्य कथयित्वा झगिति शीघ्रमेव धराधवं मेघरथं सज्जमविकलाङ्गं विधाय कृत्वा सुरः दिवं स्वर्गमियाय जगाम, विनता गरुडमाता तस्यास्तनुभूः पुत्रो गरुडस्तस्य रुगिव रुग् कान्तिर्येषां ते नृपतेः मन्त्रिजनाः, यद्वा नृपतयः सामन्ताश्च । विनताः नम्राः सन्तः अनुयुञ्जते पृच्छन्ति स्म, राजानमिति शेषः ॥३५॥

तत्प्रश्नमेवाह--

वद विभो ! पतगावयि ! कीदृशौ प्रथमजन्मनि वैरनिबन्धनम् ।
किमनयोस्त्रिदशोऽपि च कीदृशोऽजनि भवे निभवेतनहृद् पुरा ? ॥३६॥

अयि ! विभो ! वद कथय, किमित्याह—पतगौ पक्षिणौ श्येनकपोतौ कीदृशौ किं स्वरूपौ अनयोः पक्षिणोः प्रथमजन्मनि पूर्वभवे वैरस्य निबन्धनम् कारणम् किम् ? त्रिदशो देवोऽपि च निभवेतनहृत् कपटभृति हरः कपटस्वरूप इत्यर्थः, पुरा भवे पूर्वजन्मनि कीदृशः अजनि ॥ ३६ ॥

नृपतिरभ्यधित प्रथमान्तरीपकशिरोमणिभूषणसन्निभे ।
अभवदैरवते किल पद्मिनी शकलकं कलकण्ठनरं पुरम् ॥३७॥

नृपेति—नृपतिः मेघरथोऽभ्यधितोवाच । किमित्याह—प्रथमस्यान्तरीपस्य जम्बूद्वीपस्य शिरोमणिभूषणसन्निभे शिरोमणिरूपे ऐरावते वर्षे कलकण्ठाः मधुरभाषिणः नरा यस्मिन् तादृशं पद्मिनीशकलकम् पद्मिनीखण्डम् नाम पुरमभवत् इति ॥३७॥

इह बभूव च सागरदत्तको वणिजवृत्तसितद्युतिसागरः ।
वरमिदं गृहिणी जयसेनिका कमलयाऽमलया सदृशाकृतिः ॥३८॥

इहेहि—इह पद्मिनीखण्डपुरे सागरदत्तकः तदाख्यः वणिजस्य वृत्तौ वृत्तिरेव सितद्युतिः चन्द्रः तस्य सागर इव वणिक्कर्मनिपुणः इत्यर्थः । बभूव । इदं गृहिणी अस्य भार्या च अमलया शुचिरूपया कमलया लक्ष्म्या सदृशाकृतिः तुल्यरूपा जयसेनिका तदाख्या वरं यथास्यात्तथा बभूव ॥३८॥

अभवतां तनयौ सनयौ तयोर्विनयिनौ धननन्दनसंज्ञकौ ।
स्वजनकाऽनुमतेन कदापि तौ स्वविषयं विषयं प्रति चेलतुः ॥३९॥

अमेति—तयोः जयसेनिका सागरदत्तयोः धननन्दनसंज्ञकौ धनः नन्दनश्च सन्तौ नीतिमन्तौ विनयिनौ तनयौ अभवताम्। तौ धननन्दनौ कदापि स्वजनकस्यानुमतेनानुमत्य स्वविषयमन्यदेशं विषयं जनपदं प्रति चेलतुः ययतुः ॥३९॥

अमितपण्यभरोद्धुरसार्थिनौ कतिपयैर्दिवसैर्व्यवहारिणौ।
पुरमवाप्य च नागपुरं स्थितिं धनवतां नवतां मणिमापतुः ॥४०॥

अमितेति—अमितैरसङ्ख्यातैः पण्यभरैः क्रयानकसमूहैः उद्धुरसार्थिनौ विशाल-सार्थवन्तौ व्यवहारिणौ 'व्यवहारं प्रकुर्वद्भ्यां ताभ्यामेकमुपार्जितम्। बहुमूल्यं तत्र रत्नं कथञ्चिद्दैव योगतः' (४११ शान्ति पञ्चम प्रस्तावे) वणिजौ तौ कतिपयैर्दिवसैः कियत् दिवसानतीत्य धनवतामिभ्यानां स्थितिं स्थानं नागपुरं तदाख्यं पुरमवाप्य च नवतां नव भावः नवताम्, सुन्दरतरम् मणिमेकमापतुः प्रापतुः ॥४०॥

तदुपलब्धिविधावपि शङ्खिकाभिधनदीपुलिने मिथ एव तौ।
कलहमादधतौ च तदन्तरे निपतितौ पतितौ मृतिमीयतुः ॥४१॥

तदुपेति—तदुपलब्धिविधौ मणिप्राप्तिकर्मण्यपि मयैवेयं मणिरूपार्जितत्विममैवेयं तवेत्येक आह अन्योपीत्येवमाहेति तल्लोभेन तौ धननन्दनौ शङ्खिकाभिधाया नद्याः पुलिने तटे मिथः परस्परं कलहं विग्रहमादधतौ कुर्वन्तौ तस्याः शङ्खिकानद्याः अन्तरे प्रवाहमध्ये निपतितौ सन्तौ मृतिमीयतुः मृतौ ॥४१॥

लोभं निन्दन्नाह—

अहह! लोभविजृम्भितमेतकद् यदिमकौ सुहृदावपि सोदरौ।
उपलरूपमणेरुपलब्धये सकलहं कलहंसगतौ मृतौ ॥४२॥

अहह! महानयं खेदविषयः, यत् एतकद् एतत्लोभस्य विजृम्भितम् विलसितम् किमेतदित्याह—इमकौ इमौ धननन्दनौ सोदरौ समानोदरजातौ सुहृदौ मित्रे अभिन्नाशयौ कलहंसगतौ कलहंसवद्गमनशीलौ, उपलक्षणत्वात् शुभलक्षणा, तादृशावपि सन्तौ उपलरूपस्य प्रस्तररूपस्यातितुच्छसारस्य मणेः उपलब्धये प्राप्तये स कलहं विगृह्य मृतौ लोभात्प्रस्तरार्थे प्राणत्याग इति महान् खेद इति भावः ॥४२॥

उपगतावथ तौ वणिजौ खगावभवतां भवताण्डवदर्शितौ।
प्रथमजन्मविरोधवशादिमौ कलयतो लयतोदपरौ स्म तत् ॥४३॥

उपेति—अथ मृत्वा तौ वणिजौ धननन्दनौ भवस्य ताण्डवदर्शिनौ नृत्तदर्शिनौ भववैचित्र्यानुभववन्तौ सन्तौ उपगतौ मृतौ सत्याम् खगौ पक्षिणावभवताम्, तत्तत:, प्रथमजन्मनि विरोधस्य वशात् प्रभावात् लयतोदपरौ लयोविनाशः तोदः पीडा च तयोः परौ अभिमुखौ सन्तौ इमौ धननन्दनौ तत्कलहं कलयतः स्माकुरुताम् ॥४३।

नृप इतश्च शुभानगरीश्वर स्तिमितसागर आस गुणाकरः ।
अहमभूवमितो भवतो भवे तनुभवोऽनुभवोऽस्य च पञ्चमे ॥४४॥

नृप इति–इतः इति कथान्तरे शुभानगरीश्वरः गुणाकरः स्तिमितसागरस्तदाख्यः नृप आस बभूव । अहं मेघरथः इतोऽस्माद् भवतो भवात्पञ्चमेऽतीते भवे जन्मनि अस्य स्तिमितसागरस्य तनुभुवः पुत्रः अनुभवः अभूवं जातश्च ॥४४॥

अभिधया प्रथितोऽस्म्यपराजितो बलपदं सबलं कलयन् मुदा ।
दृढरथस्तु तदाऽपि ममाऽनुजो नगदया गदया समलङ्कृतः ॥४५॥

अभीति—सबलं समर्थं बलपदं बलदेव नाम मुदा कलयन् दधदहं मेघरथः अभिधया नाम्ना अपराजितः प्रथितः ख्यातः अस्मि आसम् तदा पञ्चमे भवे दृढरथस्तु नागान् वृक्षादीन् पर्वतांश्चापि द्यति खण्डयति तया तादृश्या पर्वतभेदिन्या गदया तदाख्यास्त्रेण समलङ्कृतः ममानुजो अनन्तवीर्यं वासुदेवो बभूव ॥४५॥

प्रतिहरिर्दमितारिरिति श्रुतः समभवद् दमितारिगणस्तदा ।
मदनुजेन रणे स हतः कृते प्रियतमाऽऽयतमाकनकश्रियः ॥४६॥

प्रति इति—तदा तस्मिन् समये दमितारिरितिश्रुतः ख्यातः दमितारिगणः जितशत्रुसङ्घः प्रतिहरिः हरिप्रतिपक्षः शत्रुरित्यर्थः प्रतिविष्णुः प्रतिवासुदेवः समभवत् । स दमितारिः प्रियतमायाः अयतमाया आयत्तमायाः भविष्यत्कल्याख्यायाः शुभतमायाः कनकश्रियः तदाख्यायाः कृते निमित्तम् मदनुजेन रणे युद्धे हत. ॥४६॥

भवपथे कलुषात् सुचिरं भ्रमि समनुभूय ततो भरतेऽत्र सः ।
निकृतिनाम नदीपुलिने कृपारसमया समया स्फटिकाचलम् ॥४७॥
अजनि सोमभतापसनन्दनो हितबाल तपा मृतिमापिवान् ।
अथ सुरूप इति प्रथिताभिधो विबुधतां बुधतां च समासदत् ॥४८॥ युग्मम्॥

भवेति—कलुषात् पापाद्धेतोः भवपथे संसाराध्वनि सुचिरं चिरकालं भ्रमि भ्रमणं समनुभूय कृत्वा ततोऽनन्तरमत्र भरते क्षेत्रे स दमितारिः, निकृतिनाम्न्या नद्याः पुलिने तटे स्फटिका–

चलं समया स्फटिकाचलपर्वतसमीपे कृपारसस्य मया लक्ष्म्या दयावत्त्वाद्धेतोः सोमभस्य तदाख्यस्य तपसस्य नन्दनः पुत्रः समजनि जातः, विहितं बालतपोऽज्ञातपो येन स तादृशः सन् मृतिमापिवान् ममार, अथानन्तरम् सुरूप इतीत्थं प्रथिताभिधः ख्यातनामा विबुधतां देवत्वं बुधतां मतिमत्त्वञ्च समासदत्प्राप्तवान् ॥४७॥४८॥

द्विमितताविषनायककल्पितं स मम वर्णनमात्रमसूयया ।
असहमान उपेत्य परीक्षणं व्यधित बाध्यतबाध्यतमोभरः ॥४९॥

द्वीति— द्विमितस्य ताविषयस्य स्वर्गस्य द्वितीयस्वर्गस्य नायकेन कल्पितं कृतम् "भुविस्त्रविषताविषौ नाक" इति हैमः । मम वर्णनमात्रम् प्रशंसनम् असूयया असहमानः स दमितारिजावः सुरूपदेवः आधिमततीति स आध्यतः पीडितमनाः वधमर्हतीति वध्यः सः एव बाध्यः विनाश्यः तादृशः तमोभरः अज्ञानातिशयो यस्य स तादृशः अधिपीडितः मतिमांश्च उपेत्यागत्य मम परीक्षणम् व्यधीत चकार वाकारश्चार्थे ॥४९॥

इति निशम्य महीन्द्रनिवेदितं विदितपूर्वभवौ विरतौ भवात् ।
समधिगम्य विमूर्छनमूर्ध्वधोन्यपततां पततां प्रवराविमौ ॥५०॥

इतीति–इतीत्थं महीन्द्रेण मेघरथेन निवेदितं कथितं निशम्य विदितपूर्वभवौ जातिस्मृतिमन्तौ इमौ द्वौ पततां पक्षिणां प्रवरौ श्येनकपोतौ भवात्संसारात् विरतौ विरक्तौ सन्तौ विमूर्छनं मूर्च्छां समधिगम्य प्राप्य ऊर्ध्वधः पृथिवीतले न्यपतताम् पतितौ ॥५०॥

नृपतिभृत्यजनैर्व्यजनैरलं, मलयजैरपि वीजितचर्चितौ ।
समुपलभ्य च चेतनितां खगाववदतां वदतां वरमेव तम् ॥५१॥

नृपतीति—नृपतेः मेघरथस्य भृत्यजनैः तालवृन्तैः मलयजैः श्रीखण्डद्रवैश्च तालवृन्तमरुता वीजितौ चन्दद्रवैश्चानुलिप्तौ अलमत्यर्थम् वीजितचर्चितौ कृतानिलौ लिप्तौ च, कृतशीतोपचाराविति यावत् । खगौ पक्षिणौ श्येनकपोतौ चेतनितां स्वस्थतां समुपलभ्य प्राप्य तं वदतां वरं मेघरथमेवावदतामकथयताम् ॥५१॥

तदुक्तिमेवाह--

अचकथः खलु पूर्वभवं यथा नरपते ! निरपेक्षतयैव नौ ।
त्वमुचितं प्रतिपाद्य शुभं तथा निरयतो रयतोऽपि समुद्धर ॥५२॥

नरपते ! यथा निरपेक्षतया प्रेरणां विनैव नौ आवयोः पूर्वभवमचकथः खलु, तथा त्वमुचितं मद्योग्यं शुभं प्रतिपाद्य उपदिश्य रयतः वेगात् निरयत नरकादपि समुद्धर समुत्तारय ॥५२॥

अवधिबोधवशात् तदुदीरितं परिकलय्य नृपः पुनरादिशत् ।
निखिलदुःखविमोचनदर्शनं श्रयतमाऽऽयतमाय युवां खगौ ॥५३॥

अवधीति—नृपो मेघरथः अवधिबोधवशात् अवधिज्ञानोपयोगात्तयोः पक्षिणोरुदीरितं कथितं परिकलय्य ज्ञात्वा पुनः आदिशमकथयत्, किमित्याह—युवां खगौ आयतमाय भविष्यत्कल्याणाय शुभतमाय निखिलानां दुःखानां विमोचननाशनदर्शनं सम्यग्दर्शनमित्यर्थः, तस्यैव तथा शक्तिमत्त्वादिति भावः । श्रयतमाश्रयतम् ॥५३॥

अनशनं प्रतिपद्य विरागिणौ तदुपदेशवशेन च दर्शनम् ।
समधिगम्य समाधिभरं मृतौ शुभवने भवनेऽभवतां सुरौ ॥५४॥

अनेति—तस्य मेघरथस्योपदेशवशेन विरागिणौ जातवैराग्यौ श्येनकपोतौ दर्शनं सम्यग्दर्शनमधिगम्यानसनं चतुर्विधाहारत्यागलक्षणं प्रतिपद्य स्वीकृत्य समाधिभरम् यथा स्यात्तथा मृतौ सत्याम् शुभवने भवने भुवनपतौ सुरावभवताम् इति ॥५४॥

स नृपतिः परिपारितपोषधो नयपरः पृथिवीं परिपालयन् ।
विहगवृत्तमनुस्मृतिमानयन्नभजताऽभजतापविरागताम् ॥५५॥

सेति—नृपतिः मेघरथ. परिपारितपौषधः पारयित्वा नयपरः नीतिमार्गगः सन् पृथिवीं परिपालयन् विहगयोः श्येनकपोतयोः वृत्तम् वृत्तान्तम् अनुस्मृतिमानयन् अभः न बिभेति, न भाति प्रकाशते प्रकटी भवति अनङ्गत्वाद्वा अभः कामः तज्जेन तापेन विरागता उद्विग्नताम् कामाद्वैराग्यमित्यर्थः, अभजत प्राप्तइति ॥५५॥

दुरुपसर्गपरीषहसंहतिं भृशविसोढुमना विभुरन्यदा ।
स्थिरतमोऽष्टमयुग्दिवसत्रयप्रतिमयाऽतिमया स्थितवान् स्वयम् ॥५६॥

दुरुपेति—विभुर्मेघरथः, अन्यदा, स्थिरतमः धीरः, अतएव दुरुपसर्गाणाम् दुष्टोपससर्गानां परीषहाणाञ्च वा अन्यदा दुःखसह्योपसर्गाणां परीषहाणाञ्च संहतिं समूहं भृशमत्यर्थं विसोढुमनाः सहनेच्छुः सन् अतिमया मानमतिक्रान्तया, अनुपमयेति यावत्, अष्टमयुजा अष्टमयुक्त्या दिवसत्रयस्य प्रतिमया कायोत्सर्गमुद्रया स्वयमनुदिष्ट एव स्थिरतमः अतिस्थिरः स्थिरचित्त इति यावत् स्थितवान् तस्थौ ॥५६॥

वृषभवाहनदेवपतिस्तदाऽन्तरवरोधमवस्थितिमाश्रयन् ।
मम नमोऽस्तु त इत्यभिधाय तं विनतिमानतिमात्रमवन्दत ॥५७॥

वृषभेति—तदा वृषभवाहनः वृषभो वाहनं यस्य स देवानां पतिरीशानेन्द्रः देवपतिरीशानेन्द्रः अन्तरवरोधमन्तः पुरे अवस्थितिमाश्रयन् स्थितः सन् अतिमात्रमत्यन्तविनतिमान् विनतः ते तुभ्यं मम नमोऽस्तु इतीत्थमभिधायोक्त्वा तं मेघरथमवन्दत इति ॥५७॥

तमनुयोक्तुमुपाक्रमताऽधिकं प्रियतया प्रियतन्महिषीजनः ।
दयित ! कस्य नतिस्त्वयकाऽधुनामघवताऽघवता व्यरचीव सा ॥५८॥

तमेति—प्रियः तस्येशानेन्द्रस्य महिषीजनः मुख्यदेवीजनः अधिकं यथा स्यात्तथा प्रियतया प्रेम्णा तं देवम् अनुयोक्तुं प्रष्टुमुपाक्रमतारभत, किमित्याह—दयित ! प्रिय ! अघवता भाग्यवता त्वयका त्वया मघवता इन्द्रेणेव अधुना सा नतिः कस्य कृते विरचि ? ॥५८॥

सुरपतिर्वदति स्म हसंस्ततो घनरथस्य जिनाधिपतेः सुतः ।
नृपतिर्मेघरथो विहिताष्टमः प्रियतमायतमानतया स्थितः ॥५९॥

सुरेति—ततः प्रश्नानन्तरम् सुरपतिः ईशानेन्द्रः हसन् वदति स्म, किमित्याह—जिनाधिपतेः घनरथस्य सुतः नृपति मेघरथः विहिताष्टमः अष्टमतपः नतवान् प्रियतमया अति प्रियया आयतमानतया दीर्घप्रतिमया—स्थितः, अस्तीति शेषः ॥५९॥

पुरि स पुण्डरिकिण्यभिधारुचि प्रतिमयाऽप्रतिमोऽत्र भविष्यति ।
भरत एव जिनः किल षोडश स्तमहमामहमाऽऽनम मादरात् ॥६०॥

पुरीति—स मेघरथः अस्मिन् जम्बूद्वीपे पूर्वमहाविदेहे पुष्करवती विजये पुण्डरीकिणीत्यभिधया नाम्ना रोचते शोभते इति तस्याम् पुरि नगरे वा सोऽवदत् शृणु त्रैलोक्यसुन्दरिः ! क्षितिमण्डले नगर्यां पुण्डरीकिण्यां राजामेघरथाभिधेः ।२३३। कृताष्टमतपः कर्मा स्थिरप्रतिमया स्थितः वर्त्तमानः शुभध्याने मया भक्त्या नमस्कृतः ।२३४। शान्ति० पञ्चमप्रस्तावे । प्रतिमयाः प्रतिमोऽनुपमः स्थिरप्रतिमया स्थिरशुभध्यानस्थ इत्यर्थः, स मेघरथः अत्र भरतक्षेत्रे षोडशः जिनः भविष्यति खलु । तम् अमहम् वा आमो रोगः त हन्तीत्यामहः भावरोगविनाशकस्तं तेजस्विनम् अहनादरात् भक्तिपूर्वकमानमम् नतवानिति ॥६०॥

अयि ! समाधिनिवेशितमानसं प्रबलदानवमानवनायकाः ।
अपि न चालयितुं प्रभविष्णवो न मरुतो मरुतोऽर्जुनभूधरम् ॥६१॥

अयीति—अयि ! प्रिये ! इति शेषः । समाधौ निवेशितं एकीभूय लग्नं मानसं यस्य तं तादृशं समाधिस्थं मेघरथम् प्रबलाः बलवन्तः दानवानां असुराणां मानवानाञ्च नायकाः मरुतो सुराः देवाः अपि अर्जुनभूधरं श्वेतं पर्वतं हिमालयम् मरुतः वायव इव चालयितुम् कम्पितुम् ध्यानभङ्गं कर्तुम् न प्रभविष्णवः समर्थाः ॥इति॥६१॥

अथ सुराधिपतेर्महिषीयुगं घनरथाङ्गजसत्त्वपरीक्षणम् ।
रचयितुं सहसा स्वतिरूपिकाभि-धमगाधमगात गतोत्तमम् ॥६२॥

अथेति—अथानन्तरम् सुराधिपतेरीशानेन्द्रस्य अगाधं अनुपमेयम् दुर्बोधं वा महिषी-युगं देवीद्वयम् स्वतिरूपिकामिव सुरूपिकाऽतिरूपिकाख्यम् गतेन गमनेन कृत्वोत्तमम् गमन-चातुरीयुक्तम् गतोत्तमं गतमुत्तममुत्तमत्वं यस्य तादृशं नीचस्वभावमित्यर्थः। घनरथाङ्गजस्य मेघरथस्य सत्त्वस्यात्मबलस्य परीक्षणं रचयितुं कर्तुम् सहसाऽविवेकेनैवागत ययौ ॥६२॥

समुदयेन जयः प्रभवेदिति स्वमनसा परिभाव्य विकृत्य तम् ।
स्वसदृशं वनिताजनमेत्य चा-ऽविकलयाऽकलया तमुपासृजत् ॥६३॥

समुदेति—समुदयेन समूहेन जयः मेघरथमनः क्षोभरूपो विजयः प्रभवेत्स्यादितीत्थं स्वम-नसा परिभाव्य विचार्य स्वसदृशं तं समृध्यरूपं वनिताजनं स्त्री विकृत्य विकुर्व्य एत्यागत्य च अविकलया समग्रया कलया चातुर्येण तं मेघरथम् उपासृजत् उपसर्गमकरोत् ॥६३॥

उपसर्गप्रकारमेवाह—

शृणु नरेश्वर ! पुण्यफलद्वयं यदिह राज्यममुत्र सुराङ्गनाः ।
तदधुना तव जातमतः कथं-न सुखमासु खमामयमिच्छति ? ॥६४॥

नरेश्वर ! शृणु, किमित्याह-यदि इह लोके राज्यम् अमुत्र परलोके सुराङ्गनाः देव्य इति पुण्यस्य फलद्वयम्, अधुना अस्मदागमने सति तत्फलद्वयं तव जातम् सम्पन्नम्, अतः आसु स्त्रीषु खम् शून्यमामया रोगो यतः तादृशं निरबाधं सुखम् कथं न इच्छति, भवानिति शेषः। फले औदासीन्यं नोचितमिति भावः ॥इति॥६४॥

प्रलोभनान्तरमप्याह—

त्रिदिवलोकविलोकनमादितः कलय निर्वृतिसद्मवर्णिकाम् ।
इति समेत्य च काऽपि तदग्रतो-व्यवहिताऽवहिता स्वमदीदृशत् ॥६५॥

आदितः प्रथमम् निर्वृतिसद्मस्य सुखसद्मस्य वर्णिकाम् वर्णिकारूपां आच्छादन-मिव पटान्तरमिव त्रिदिवलोकस्य स्वर्गस्य विलोकनमवलोकनं कलय कुरु, इतीत्थम् काऽपि अव हिता सावधाना व्यवहिता तिरोहिता च समेत्यागत्य तस्य मेघरथस्याग्रतोऽग्रे स्वम् अदीदृशत् प्रकटयति स्म ॥६५॥

सुभग ! तावदिदं सुतरां तपो वितनुषे तनुखेदनिबन्धनम् ।
सविधगाऽस्मि न यावदिति त्वया प्रमदया मदया न भृता जगे ॥६६॥

सुभगेति—सुभग ! सुन्दर ! सुतरामत्यन्तम् तनुखेदस्य शरीरक्लेशस्य निबन्धनम् सम-पादकमिदं तपः तावत्तदवधि वितनुषे करोषि, यावद्यदवधि सविधगा समीपगा नास्म्यहम्,

मत्सामीप्ये तु तपो न युक्तमिमावतीति भावः, इतीत्थं त्वया अन्यया मदयानम् मदेन गमनम् तद्भृता मदमत्तगमनया प्रमदया स्त्रिया जगे ॥६६॥

अमृतकुण्डयुगं विधिना कृतं सुखनिधानयुगं यदि वाऽप्यदः ।
स्वकुचयुग्ममवैक्षयदेकिका ध्वनिगदं निगदन्त्यपि चेदृशम् ॥६७॥

अमृतेति—एकिका काऽप्येका ईदृशं वक्ष्यमाणं ध्वनिगदं व्यक्तशब्दं निगदन्ती अपि च, अदः कुचयुग्मम् विधिना ब्रह्मणा अमृतस्य कुण्डयुगं पात्रद्वयम् 'यदि वा सुखस्य निधानयुगं कोषद्वयन् कृतमितीदृशं ध्वनिगदं व्यक्तशब्दं निगदन्त्यपि चैकिका काऽप्येका स्वकुचयुग्मम् निजस्तनद्वयमवैक्षयद्दर्शितवती ॥६७॥

वपुरिदं मम संस्पृश तत्क्षणं जनयदेव महाशय ! निर्वृतिम् ।
वचसि मे प्रतिपत्तिमथाचरेति निजगे निजगेहवदेकया ॥६८॥

वपुरिदमिति—एकया कयाचित् निजगेहवत् स्वगृहवत् लक्षणया निजगेहिनीवत् मे मम वचसि प्रतिपत्तिमादरमाचर कुरु, महाशय ! तत्क्षणं निर्वृत्तिम् सुखं जनयत् कुर्वत् ममैवेदं वपुः शरीरम् संस्पृश आश्लिष्येतीत्थं निजगे ॥६८॥

प्रतिवचोऽपि ददासि न नः—कथं सकरुणं महतां हृदयं खलु ? ।
इति च पर्यनुयुञ्जत ता नृपं नरमणी रमणीव स किं वदेत् ॥६९॥

प्रतीति—ताः स्त्रियः नः अस्माकम् प्रतिवच उत्तरमपि कथं न ददासि ? पृष्टस्य प्रतिवचनमुचितमिति भावः । महताम् त्वादृशानाम् उदाराशयानाम् हृदयं खलु सकरुणाम् दयालुः, तथा, च दयया प्रतिवचनं देहीति भावः । इतीत्थञ्च नृपं पर्यनुयुञ्जत पर्यनुयोगं प्रश्नमकार्षुः पुनः प्रश्नमकुर्वन्, स नरमणिः नरश्रेष्ठः मेघरथः रमणीव स्त्रीव किं वदेत् प्रतिवचं दद्यात् न किमपि, चाञ्चल्यं हि रमणीधर्म इति भावः ॥६९॥

इति निशां सकलां विविधोक्तिभि-र्विततभावविभावनयाऽप्यलम् ।
अचलसत्त्वमवेक्ष्य तमानमन् गुणवतो णवतो महनं क न ! ॥७०॥

इतीति—इतीत्थं प्रकारेण सकलां निशां रात्रिं यावत् विविधाभिरनेकप्रकाराभिरुक्तिभिः विततया विस्तृतया भावस्य हावस्य विभावनया प्रकटनयाऽपि अलमत्यर्थम् अचलसत्त्वम् अक्षुब्धमनसमवेक्ष्य तम् मेघरथम् आनमन् नमवत्यः । गुणवतः णवत. ज्ञानिनः क महनं पूजनं न ! अपि तु सर्वत्रैवेत्यर्थः ॥७०॥

कुसुमकार्मुक कार्मुकमेककं वयमहो ! भवताऽवजितं च तत् ।
सुभटता भुवनत्रितयेऽपि ते प्रकटतां कटतां कथमेतु ना ? ॥७१॥

कुसुमेति—अहो इत्याश्चर्ये। वयं देव्यः एककम् अद्वितीयम् कुसुमकार्मुकस्य कामस्य कार्मुकम् धनुरिव, सर्ववशीकरणसमर्थत्वादिति भावः। तच्च कार्मुकम् भवता त्वया मेघरथेन प्रवजितं पराजितम्। तत्तः ते तव भुवनत्रितयेऽपि सुभटता भटश्रेष्ठता प्रकटताम् अद्वितीय-धनुर्भञ्जकस्य श्रेष्ठभटतोचितैवेति भावः। ना अन्यः पुरुषः कटताम् क्रियाकारकत्वम्, फलभाक्त्वमिति यावत्, कथं केन प्रकारेण एतु प्राप्नोतु, अन्यस्यैतादृशसत्त्वाभावादिति भावः ॥७१॥

प्रियतमेन यथा शतमन्युना तव सुसत्त्वविवर्णनमादधे।
तदवलोक्य तथैव सविस्मयाः समुदिता मुदिताः परमास्महि ॥७२॥

प्रियेति—सुसत्त्व! सुधीर! प्रियतमेन शतमन्युना इन्द्रेण यथा येन प्रकारेण तव विवर्णनम् प्रशंसनमादधे कृतम्, तथा तदवलोक्य समुदिताः मिलिताः सर्वा एव सविस्मयाः साश्चर्याः परमत्यर्थं मुदिताः प्रसन्नाश्चास्महि वर्त्तामहे ॥७२॥

इति विवर्ण्य विवर्ण्यतमं प्रभुं विकृतयौवनमप्यपहृत्य तत्।
द्विमितताविषनायकनायिके स्वसदनं सदनङ्गमुपेयतुः ॥७३॥

इतीति—विवर्ण्यतमं श्रेष्ठं प्रभुं मेघरथम् इतीत्थं विवर्ण्य स्तुत्वा तद्विकृतं भावोत्पादितं यौवनं युवतीनां समूहं च अपहृत्य संहृत्य द्विमितताविषनायकनायिके द्वितीयस्वर्गेन्द्रदेवीद्वयम् सदनङ्गम् कामकलाशालि स्वसदनमुपेयतुः ॥७२॥

उषसि पारयति स्म स पौषधं प्रतिमया सह मेघरथो नृपः।
अलभताऽधिकमेव विरागतां रजनिमाजनिमानमनुस्मरन् ॥७४॥

उषसीति—स मेघरथो नृपः उषसि प्रभाते प्रतिमया सह पौषधं पारयति स्म समाप्तवान् रजनिम् रात्रौ आजनिमानम् जातं वृत्तान्तमनुस्मरन् अधिकमेव विरागतां वैराग्यमलभत प्राप्तः ॥७४॥

दयितवेदितवृत्तविभावरीचरित संश्रवणात् प्रियमित्रया।
भवसुखात् सुतरां निरवेद्यत प्रियमतं यमतन्त्रमतः स्त्रियाम् ॥७५॥

दयितेति—दयितेन प्रियेण मेघरथेन वेदितवृत्तस्य कथितवृत्तान्तस्य विभावरीचरितस्य रात्रिवृत्तान्तस्य संश्रवणात् प्रियमित्रया राज्ञ्या भवसुखात् विषयसुखात्सुतरामत्यन्तं निरवेद्यत निर्विण्णा। अतः स्त्रियाम् विषये यमतन्त्रम् नियमशास्त्रम् प्रियमतम् पत्युरिष्टम् अभूदिति शेषः ॥७५॥

घनरथः समवासरदन्यदा जिनपतिर्भविकाब्ज विबोधनम्।
विरचयन् रविवत् पुरी तत्र स-सुतमसां तमसां क्षयकर्मणा ॥७६॥

घनेति—अन्यदा जिनपतिः स घनरथः रविवत्सूर्यवत् सुतमसाम् तमसामज्ञानानामन्धकाराणाञ्च क्षयकर्मणा नाशकरणेन भविकानां भव्यानाम् अब्जानां कमलानां विबोधनम् सम्यग्ज्ञानम् विकासञ्च रचयन् कुर्वन् तत्र पुरि समवासरत् ॥७६॥

आदिष्टशिष्टपुरुषैः समुपेत्य विश्व-विश्वम्भराधिपतिमेघरथाय तूर्णम् ।
विज्ञप्तिमित्यवहिताय तवेश वाह्योद्याने जिनो घनरथः समुपागतोऽस्ति ॥७७॥

आदिष्टेति—आदिष्टैः पूर्वमेवाज्ञापितैः शिष्टैराज्ञाकारिभिः पुरुषैः समुपेत्यागत्य विश्वस्य सकलायाः विश्वम्भरायाः पृथिव्याः अधिपतये मेघरथाय अवहिताय तदेकतानाय जिनागमनमपेक्षमाणाय इति विज्ञप्तम्, इतीति किमित्याह—ईश ! तव वाह्योद्याने जिनः घनरथः समुपागतोऽस्ति ॥७७॥

इत्याकर्ण्य क्षितीशः प्रमुदितहृदयोऽपास्य सिंहासनं तद्
गत्वा सप्ताष्टपादानवनितलमिलन्मौलिमौलिर्विनम्य ।
सम्यक् शक्रस्तवोक्तिप्रतिकृतिकृतकस्तोत्रजातैरुदारैः,
स्तुत्वा भूयोऽपि नत्वा त्रिभुवनविनतं भक्तितस्तीर्थराजम् ॥७८॥

पादैस्तैरेव सिंहासनमसममहारत्नकान्तिप्रतान-
भ्राजिष्णुस्फूर्तिजिष्णुः कृतसुकृतशताध्यासमध्यास्य-हृष्यन् ।
पश्यंस्तानेव ताताऽऽगमकथकजनानग्रतोदौःस्थ्य भेदं
दृष्ट्वा कल्याणजातं व्यसृजदतितमां स्वस्य कल्याणमिच्छुः ॥७९॥
(युग्मम्)

इत्येति—इत्युक्तमाकर्ण्य क्षितीशः मेघरथः प्रमुदितहृदयः प्रसन्नमनाः सन् तत्सिंहासनमपास्य त्यक्त्वा सप्ताष्टपादान् गत्वा अवनितले पृथिव्यां मिलन्मौलिना स्पृष्टमुकुटेन मौलिना मस्तकेन विनम्य नत्वा उदारैः गभीरार्थैः शक्रस्तवोक्तिप्रतिकृतिभिः शक्रस्तवतुल्यैः कृतकैः स्वनिर्मितैः स्तोत्रजातैः स्तोत्रसमुच्चयैः सम्यक् स्तुत्वा भूयः पुनरपि त्रिभुवनेन विनतं कृतप्रणामं तीर्थराजम् भक्तितः नत्वा, तैरेव सप्ताष्टभिः पादैः असमानामतुल्यानां महारत्नानां कान्तिप्रतानैः कान्तिसमूहैः भ्राजिष्णुः रोचमानं सिंहासनम् कृतेन सुकृतशतेन पुण्यशतेन अध्यासोऽधिरोहणं यस्मिन् तत् तादृशम् सिंहासनम् स्फूर्त्या कान्त्या तेजसा वा जिष्णुरिन्द्रस्य इव स मेघरथः अध्यास्य अधिरुह्य हृष्यन् मोदमानः पश्यन् तान् तातस्य घनरथस्य आगमस्या-

गमनस्य कथकान् वाचकान् जनान् अग्रतः स्वस्य कल्याणमिच्छुः सन् दौस्थ्यभेदं दरिद्रता-नाशकमतितमां प्रचुरं कल्याणजातं सुवर्णादि दत्त्वा व्यसृजत् विसृष्टवान् ॥७८॥७९॥

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावतां सद्गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमद् द्वादशः ॥८०॥

श्लोकः निगदार्थः ॥८०॥

द्वादशसर्गान्तेऽन्त्यममङ्गलश्लोकः

एका सर्वस्य काम्या न च भवति न वा सर्वथा काप्यकाम्या,
व्याख्या लोके प्रतिता भवति बहुविधैःपेक्षिता चाहता च ।
सत्काव्येऽसत्काव्ये गतिरियमखिले संप्रधार्याऽत्र सर्गे,
पूर्णेऽयं दर्शनस्यामलमतिरचिता द्वादशे वृत्तिरिष्टा ॥१॥

॥ इति द्वादश सर्ग व्याख्या समाप्ता ॥

---

त्रयोदशसर्गादौ मङ्गलाचरणश्लोकः—

यस्येयं सप्तभङ्गी प्रतिविषयमिता सप्तभङ्गप्रवृत्त्या,
चादिष्टा माननीत्योः सकलविकलतायोगिनीमानमुख्या ।
तं श्रीशान्तिं प्रणम्यात्रयपदपथगो दर्शनो वक्ति सर्गे,
व्याख्यां योग्यां मितार्थां त्रियुतदशमके विज्ञमोदप्रदात्रीम् ॥१॥

## ॥ अथ त्रयोदश सर्ग व्याख्या प्रारभ्यते ॥

अथ त्रयोदशसर्गस्यादौ मङ्गलमाचरति—

वचः परास्तव्यभिचारभावाद् यस्याऽऽगमत्वेन बुधैरमानि ।
स केवलालोकविलोक्यलोकः शान्तिप्रभुर्वो ददतां प्रमोदम् ॥१॥

वच—इति—बुधैः विद्वद्भिः यस्य श्रीशान्तिप्रभोर्वचः प्रवचनत्वेन प्रसिद्धं वचनम् परास्तः दूरीभूतः व्यभिचारभावः व्यभिचारित्वम्, वस्तुयाथात्म्यप्रतिपादकत्वमित्यर्थः, तस्माद्धेतोः आगमत्वेन आप्तोक्तत्वेन रूपेण अमानि, अत्र कालो न विवक्षितः, सर्वदैवतद्वचनस्यागमत्वादिति बोध्यम्, तत्र हेतुगर्भं विशेषणमाह—केवलेन तदाख्येन पञ्चमज्ञानरूपेण आलोकेन वस्तुमात्रयाथात्म्यप्रतिभासकत्वादालोकरूपेण ज्ञानेन विलोक्यः साक्षात्कार्यो लोको यस्य स तादृशः स प्रसिद्धः प्रस्तुतचरितनायक—शान्तिप्रभुः तदाख्यः षोडशतीर्थङ्करः वः युष्माकं श्रावकाणां प्रमोदं हर्षोल्लासं ददताम्, मनः प्रसत्त्वादिनेति भावः। अत्र वचस आगमत्वे केवलालोकविलोकनस्य हेतुतया पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

अत्र सर्गे इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिच्छन्दः—प्रायेण ॥१॥

अथाऽनुजेनाऽपि समं स मान्यः क्षोणीभुजां मेघरथः क्षणेन ।
जितेश्वरं नन्तुमनन्तवेदं वव्राज राजन् स्वपरिच्छदेन ॥२॥

अथ कथां प्रस्तौति—अथेति—अथ तीर्थेशघनरथागममभिज्ञाय, क्षोणीभुजां राज्ञां मान्यः पूजार्हः सर्वनृपश्रेष्ठत्वादिति भावः। स मेघरथः तदाख्यनृपः क्षणेन तत्कालमेव एतेन त्वरा तीर्थेशे भक्त्यातिशयश्च सूचितः, अन्यथाविलम्बस्यापि सम्भवादिति भावः। अनुजेन कनिष्ठेन भ्रात्रा दृढरथेन स्वपरिच्छदेन निजपरिजनेनापि समं राजन् शोभमानः अनन्तवेदं अनन्तज्ञानं जिनेश्वरम् केवलज्ञानिनं जिनेन्द्रमित्यर्थः, नन्तुम् अभिवन्दितुं वव्राज ॥२॥

अथ तत्र प्राप्तस्य कृत्यमाह—

प्रदक्षिणीकृत्य जिनं यथावद् नत्वा नृपे मेघरथे निविष्टे ।
दिदेश धर्मं नरदेव तिर्यग् भाषाधिसंवादकिरा गिराऽर्हन् ॥३॥

जिनं वीतरागं घनरथं प्रदक्षिणीकृत्य यथावद् विधिपूर्वकं नत्वा मेघरथे नृपे निविष्टे उपविष्टे सति अर्हन् जिनो घनरथः नरस्य देवस्य तिरश्चश्च भाषायाः अविसंवादम् तद्रूपेण परिणतिं किरति आपादयति विस्तारयतीति तया तादृश्या गिरा, तीर्थेशस्य वचनं हि एकरूपमपि श्रोत्रनुकूलभाषासु परिणमतीत्यागम इति भावः । धर्मं दिदेश व्याचख्यौ ॥३॥

तद्धर्मदेशनामेवाह—

सुखैरनेकैरपि लालितोऽयं जन्तुर्न सन्तोषमुपैति किञ्चित् ।
अनुत्तरस्थानविलुप्तमानसामान्यसौख्यैरपि यद् न तृप्तः ॥४॥

सुखैरिति—अनेकैः सुखैः सुखकरविषयैः लालितः सत्कृतोऽपि अयं भुवनोदरवर्त्तमानो जन्तुः प्राणी किञ्चिदीषदपि सन्तोषम् लालसानिवृत्तिं—नोपैति तत्र हेतुमाह—यद्यतः अनुत्तरस्थानैः—“नोत्तराणि प्रधानानि स्थानानि येभ्यस्तानि तादृशानि तैः पञ्चानुत्तरदेवलोकस्थानैरित्यर्थः)—सर्वोत्कृष्ट पाच अनुत्तरदेवलोकस्थान नृपादिस्थानजन्यैः विलुप्तं मानसामान्यं परिमाणतारतम्यं येभ्यस्तादृशैः अपरिमेयैरपि सुखमेव सौख्यं तैः अपि न तृप्तः, अल्पसौख्यैर्न तृप्यतीति किमु वक्तव्यमित्यपि शब्दार्थः ॥४॥

प्रमादमुत्सार्य तदार्यचित्ताः ! मानुष्यसामग्र्यकमप्यवाप्य ।
इदं च चिन्तामणिवद् दुरापं धर्मं विदद्ध्वं प्रयता जनौघाः ! ॥५॥

ननु तर्हि किं करणीयमित्याह—प्रमादमिति तत्तृप्त्यभावाद्धेतोः, आर्यचित्ताः ! पापकार्यनिवृत्तिमनस्काः मनस्विनः ! जनौघाः जनाः, प्रयताः संयमवन्तः सन्तः मानुष्यसामग्र्यकम् मनुष्यभवमिति यावत्, अवाप्य अपि प्रमादमावश्यकेऽनवधानत्वमुत्सार्य त्यक्त्वा—(मानुष्य सामग्र्यकं मनुष्यभवदेवगुर्वादिसामग्रीमवाप्यापि प्रमादं निद्रादि पञ्चप्रकारं प्रमादमुत्सार्य त्यक्त्वा चिन्तामणिवद् दुरापं दुर्लभम् इदमुपदिश्यमानं धर्मं विदद्ध्वम्—कुरुध्वम्, तत एव मनुष्यभवसाफल्यादिति भावः ॥५॥

धर्माराधनफलमाह—

प्रमादसन्दर्भविमर्दनेन यो धर्ममाराधयितुं यतेत ।
विपत्तयस्तस्य समापतन्त्यः संपत्तयः किं न समुद्भवन्ति ? ॥६॥

प्रमादेति—यो जनः प्रमादस्य सन्दर्भस्य परम्पराया विमर्दनेन परिहारं कृत्वा विनाशनपूर्वकम् धर्ममाराधयितुं यतेत, तस्य जनस्य समापतन्त्यः स्वयमागच्छन्त्यः विपत्तयः सम्पत्तयः किं कुतो न समुद्भवन्ति जायेरन् ? अपि तु विपत्तयः समुत्पद्यमानाः धर्मानुष्ठानप्रभावेण सम्पत्तिरूपेणैवोत्पद्यन्ते ,इत्यर्थः । तस्य विपदो विनश्यन्ति सम्पदश्च भवन्तीति भावः ॥६॥

अत्रैव दृष्टान्तं प्रस्तौति—

निदर्शनं शूरनृपोऽत्र विज्ञाः ! कृत्वाऽवधानं शृणुत प्रधानम् ।
तथाहि जम्बूपपदेऽन्तरीपे पूर्वेऽत्र वर्षे पुरमस्ति वित्तम् ॥७॥

निदर्शनमिति—विज्ञाः ! तत्वज्ञाः श्रोतारः ! अत्र धर्मानुष्ठानतः सम्पत्तिलाभे शूरनृपः शूराख्योनृप प्रधानम् इतरविलक्षणं निदर्शनं दृष्टान्तं अस्तीति शेषः । अवधानं चित्तैकाग्र्यं कृत्वा शृणुत, तथाहीति वार्ता प्रस्तावे । जम्बूपपदेऽन्तरीपे—जम्बूद्वीपे इत्यर्थः । पूर्वे प्रथमे अत्र वर्षे क्षेत्रे भरते क्षेत्रे इत्यर्थः । वित्तं प्रसिद्धं पुरं नगरमस्ति ॥७॥

अथ तन्नगरमेवाह—

क्षितिप्रतिष्ठं नगरप्रतिष्ठं नाम्ना समानन्दित सर्वशिष्टम् ।
मनुष्यधर्माणमुदाहरन्ते यद् धर्मवासेन बुधाः कुबेरम् ॥८॥

क्षितीति—नगरेषु प्रतिष्ठा गौरवादि सम्मानादिरूपा यस्य तत्तादृशं नगरश्रेष्ठम्, समानन्दिताः सर्वे शिष्टाः जनाः येन तादृशम् नाम्ना क्षितिप्रतिष्ठम्, पुरमस्तीति पूर्वश्लोकेनान्वयः । वासेन सत्त्वेन हेतुना बुधाः कुबेरं यक्षराजं मनुष्यधर्माणं मनुष्यस्य धर्मो यस्य स तादृश इति तम् उदाहरन्ते कथयन्ति, मनुष्याश्रित तन्नगरीयाढ्यत्वादि सम्बन्धादेव कुबेरो मनुष्यधर्मेत्यसम्बन्धरूपाऽतिशयोक्तिः ॥८॥

अथ तत्रत्यनृपमाह--

स तत्र दिग्व्यापकवीरसेनः श्री वीरसेनः समभूद् रसेनः ।
यदीयकीर्तेः सितिमाऽवलोकाद् ह्रीणः शशाङ्कः क्षयितामधत्त ॥९॥

सेति—तत्र क्षितिप्रतिष्ठे नगरे स प्रसिद्धः दिशा व्यापिका जयादिना वशीकारिका वीरा सेना यस्य स तादृशः दिग्विजयीत्यर्थः । श्रीवीरसेनः तदाख्यः रसायाः पृथिव्या इनः पतिः, नृप इत्यर्थः । समभूत् यदीयकीर्तेः सितिम्नः शुक्लताया अवलोकाद्दर्शनाद्धेतोः ह्रीणः स्वस्य तथा शौक्ल्याभावाल्लज्जितः शशाङ्कश्चन्द्रः क्षयितां क्रमशः कलाक्षयवत्त्वमधत्त कथमन्यथा पूर्ण एव न तिष्ठति ? अन्योऽपि हि लज्जया क्षीणश्रीको भवतीति भावः । अतिशयोक्तिः ॥९॥

अथ राज्ञीमाह—

प्रिया तदीयाऽजनि धारिणीति प्रख्यातनामा शुचिशीलधामा ।
तिलोत्तमा नैव तिलोत्तमा सा यद्रूपमालोक्य बुधैरवर्णि ॥१०॥

प्रियेति--शुचिशीलस्योज्ज्वलचरित्रस्य धामा स्थानभूता धारिणीति प्रख्यातनामा तदीया वीरसेनस्य प्रिया अजनि, प्रख्यातनामेति प्रिया विशेषणत्वेन स्त्रीत्वोऽपि प्रयोगः ॥ बुधैः यस्माः

धारिण्याः रूपं सौन्दर्यम्—"रूपं स्वभावे सौन्दर्ये" इत्यमरः। आलोक्य स तिलोत्तमा इत्येव-मवर्णि, तिलोत्तमा प्रसिद्धा सुरस्त्री नैव, एषैव तिलोत्तमागुणयोगित्वान्न तु सुरीति भावः।।१०॥

अथ तस्याः स्वप्नदर्शनमाह—

परेद्यविः सा शयिता सुखेन स्वप्ने महेन्द्रं पुरतः प्रयान्तम्।
विलोक्य चोत्थाय तदैव देवी हृष्टा महेन्द्राय तमुज्जगार ॥११॥

परे इति—परेद्यवि एकदा सुखेन शयिता सा स्वप्ने पुरतोऽग्रतः प्रयान्तं गच्छन्तं महे-न्द्रमिन्द्रं विलोक्य तदैव उत्थाय च हृष्टा देवी महेन्द्राय नृपाय वीरसेनाय तं वृत्तान्तं स्वप्नं वा उज्जगार जगौ ॥११॥

धराधवोऽप्यभ्यऽधिताधिबुद्धिर्देवेन्द्रवत् ते भविता तनूजः।
चलः स यत् प्रैक्षि चलाचलाक्षि! जाने स तेनैव चलोऽचलोरु ॥१२॥

धरेति—धराधवः नृपः वीरसेनः अपि, अधिबुद्धिः "अधिका बुद्धिर्यस्य सोधिबुद्धिः" अतिबुद्धिमान् इत्यतोऽभ्यधितजगौ, किमित्याह—ते तव देवेन्द्रवदिन्द्रसदृशः तनूजः पुत्रो भविता चलाचलाक्षि! चञ्चलनेत्रे! अचलोरुः! स्थिरोरु! यथतः स इन्द्रः चलः गच्छन् प्रैक्षि दृष्टः तेन हेतुना एव स तव पुत्रः चलः चञ्चलः भवितेति सम्बध्यते जाने मन्ये इत्यर्थः ॥१२॥

दिनं तदारभ्य बभार देवी गर्भं महापुण्यभरावदाता।
प्रपूर्यमाणाखिलदोहदा सा राज्ञा सुखं सूनुमसूत राज्ञी ॥१३॥

दिनमिति—दिनं तदारभ्य तत्स्वप्नदर्शनदिनमारभ्य, महता पुण्यभरेण पुराकृत पुण्य-समूहेनावदाता विशुद्धा देवी राज्ञी गर्भं बभार। तथा राज्ञा प्रपूर्यमाणोऽखिलो दोहदो गर्भा-भिलाषो यस्याः सा तादृशी सा धारिणी राज्ञी सुखक्लेशेन—सुखं यथास्यात्तथा, अक्लेशेनेत्यर्थः सूनुं पुत्रमसूत सुषुवे ॥१३॥

अथ सूनुनामकरणमाह—

श्रितेऽत्र गर्भं समवैक्षि मात्रा यद्देवराजः पुरतो जिहानः।
अतः पिता तं किल देवराजं धाम्ना विराजन्तमुवाच नाम्ना ॥१४॥

श्रिते इति—अत्रास्मिन् जातके गर्भं श्रिते अधिष्ठिते सति मात्रा जनन्या यथतः पुर-तोऽग्रतः जिहानः गच्छन् देवराज इन्द्रः समवैक्षि दृष्टः, अतएव—हेतोः पिता वीरसेनः धाम्ना तेजसा विराजन्तं तं जातकं नाम्ना देवराजम् उवाच, किलेत्यैति स्वे ॥१४॥

कुमारवर्येऽत्र च पञ्चवर्षे जातेऽन्यदा सा महिषी नृपस्य।
शरत्तडित्वत्प्रतिरूपरूपं स्वप्ने ककुद्मन्तमपश्यदुच्चैः ॥१५॥

कुमारेति—अत्रास्मिन् कुमारवर्ये कुमारश्रेष्ठे पञ्चवर्षे जाते च अन्यदा सा नृपस्य महिषी पट्टराज्ञी धारिणी स्वप्ने उच्चैः प्रतिरूपं तुल्यं रूपं यस्य तं तादृशं ककुद्मन्तं वृषभमपश्यत् ॥१५॥

ततो दिनादेव नृदेवकान्ता गर्भं दधाना सुतरां बभासे ।
वसुन्धरेवाऽप्रतिमं निधानं दौर्गत्यविच्छेदकरं जनानाम् ॥१६॥

तत इति—ततस्तस्मादेव दिनादारभ्य नृदेव-कान्ता नृपप्रिया धारिणी गर्भं दधाना सुतरामत्यन्तं बभासे शुशुभे। केवेत्याह—जनानां-दौर्गत्यस्य दरिद्रतायाः विच्छेदकरं नाशकम-प्रतिममनुपमं निधानं धनराशिं, दधानेति सम्बध्यते। वसुन्धरा पृथ्वीव ॥उपमा ॥१६॥

अजीजनत् सा समयेऽथ पूर्णे सूनुं सुवर्णद्युतिवर्ण्यवर्णम् ।
महोत्सवेऽतीयुषि वत्सराजं स्वप्नानुसारेण नृपस्तमाह ॥१७॥

अजीजनदिति—अथानन्तरं सा राज्ञी पूर्णे समये-दशमे मासि सुवर्णस्य द्युत्या कान्त्या वर्ण्यः वर्णनीयो वर्णो द्युतिर्यस्य तादृशं सुवर्णवर्णम् सूनुम् अजीजनत्। नृपः वीरसेनः, महोत्सवे जन्मोत्सवे-अतियुषि अतिक्रान्ते सति तं सूनुं स्वप्नानुसारेण वत्सराजं तन्नामानमाह,-तथा नाम दधौ ॥१७॥

अथाऽस्य विद्याप्राप्तिमाह—

शिशुत्वमारभ्य विवर्धमानं विद्याः समापेतुरमुं समस्ताः ।
रसातिरेकादिव शैवलिन्यो गम्भीरतायाः पदमम्बुराशिम् ॥१८॥

शिशुत्वेति—विवर्धमानममुं वत्सराजम्, रसस्य अनुरागस्य, अथ च जलस्य अतिरेका-दाधिक्याद्धेतोः शिशुत्वमारभ्य बाल्यादेव समस्ताः सकलाः विद्याः चतुर्दश अष्टादशप्रकाराः, गम्भीरताया अगाधतायाः पदमास्पदम्, अगाधमित्यर्थः। अम्बुराशिम् सागरम् शैवलिन्यः नद्य-इव समापेतुः आपुः-"तरंगिणी शैवलिनी तटिनी" इत्यमरः उपमा ॥१८॥

अथ राज्ञो मरणमाह—

ज्वरादिरोगैः परिताप्यमानो वैद्यैः परैरप्युपचर्यमाणः ।
अमात्यवृन्दैः परिचर्यमाणः क्षोणीपतिर्मृत्युदशां स चाऽऽप ॥१९॥

ज्वरादीति—स क्षोणीपतिः वीरसेनश्च ज्वरादिरोगैः परितप्यमानः पीडामनुभवन्, परैः स्वकर्म-कुशलैरुत्कृष्टैः वैद्यैः उपचर्यमाणः चिकित्स्यमानः अमात्यवृन्दैः परिचर्यमाणः सेव्यमानोऽपि मृत्युदशां न तु मृत्युम् आप उपायेन मृत्युर्न रुध्यते इति भावः ॥१९॥

अथ पौरचिन्तामाह—

इतश्च पौराः परितोऽपि कुण्डे कुण्डे भृशं साध्वसमाश्रयन्तः ।
विकाशिकाशप्रसराभकूर्चाः आलोचयन्नापणचत्वरेषु ॥२०॥

इतश्चेति—इत इति विषयपरिवर्त्तने । पौराः अपि परितः सर्वतः कुण्डे कुण्डे स्थाने स्थाने भृशमत्यन्तं साध्वसं भयमाश्रयन्तः, राज्यस्य राजविहीनत्त्वाद्भयमिति भावः, अपि अत एव, विकाशिनः फुल्लस्य काशस्य तदाख्यतृणविशेषस्य यः प्रसरः स्फीतता तदाभं कूर्चं श्मश्रू येषां तादृशाः पलिताः, वयोवृद्धा इति यावत्, आपणचत्वरेषु हट्टप्राङ्गणेषु—'अङ्गणं चत्वरे जिरे,' इत्यमरः । आलोचयन् विचारितवन्तः ॥२०॥

तेषां विचारमेवाह—

हहा ! वयं स्वामिनि नामशेषे जाते कथं नाम पुरा भवामः ! ।
विनैव ताराधिपतिं हि ताराः पुष्णन्ति तारा अपि किं प्रकाशम् ! ॥२१॥

हहा इति । हहा इति खेदे । वयं नागराः स्वामिनि राज्ञि वीरसेने, नामैव मृतत्वाच्छेषो यस्य तादृशे जाते सति, पुरा भाविनि काले कथं नाम भवामः ? कीदृशी स्थितिरस्माकं स्यादिति महती चिन्तेति-भावः । तत्रैव दृष्टान्तमाह—हि यतः ताराधिपतिं—चन्द्रं विनैव ताराः विशुद्धाः प्रकाशमाना अपि "तारो मुक्तादि संशुद्धावि"त्यमरः । प्रकाशं पुष्णन्ति किम् ? नैव इत्यर्थः । तथा राजानं विना नान्यः प्रजाः पालयितुं समर्थ इति भावः ॥२१॥

अथ स्वसम्भावनामाह—

नृपाङ्गजो यद्यपि देवराजो ज्येष्ठः कथञ्चिद् वयसा तथाऽपि ।
अयं प्रजावत्सल एव वत्स-राजस्तु नः संमत एव राजा ॥२२॥

नृपेति—नृपाङ्गजः राजपुत्रः देवराजः तदाख्यः, वयसा अवस्थया कृत्वा ज्येष्ठः कथञ्चित् ज्येष्ठत्वानुगुणगुणाद्यभावादिति भावः । तथाऽपि तस्य वयसा ज्येष्ठत्वे सत्यपि, अयम् मद्बुद्धिस्थः प्रजावत्सलः वत्सराज एव तु नोऽस्माकं राजा-सम्मतः, राज्ञि प्रजावात्सल्यमेव गुणः प्राधान्ये-नापेक्ष्यते इति भावः ॥२२॥

गुणप्राधान्यमेव समर्थयति—

बुधा गुणैरेव विदुर्गुरुत्वं नागेन नो वा वयसो महिम्ना ।
निधीयते मूर्धसु राजलोकैः पुष्पं हि गन्धाद्, न दलं न शाखा ॥२३॥

बुधा इति—बुधाः विद्वांसः गुणैः एव गुरुत्वं ज्येष्ठत्वादि विदुः मन्यन्ते, एवकारव्यवच्छेद्यमाह—'मत्तङ्गजो गजो नाग इत्यमरोक्तेः नागेन हस्तिना तद्वदुच्चतरेण पुरुषेण यद्वा नागेन

तद्वत्क्रूरस्वभाववता महता पुरुषेणेति भावः" नागेन हस्त्यादिसाधनेन वयसः महिम्ना आधिक्येन वा नो नैव,. तत्र दृष्टान्तमाह–हि यतः राजलोकैः गन्धादगुणाद्धेतोः पुष्पं मूर्धसु निधीयते–स्थाप्यते दलं पत्रं पुष्पात्प्राचीनमपि न, तथा ततोऽपि–प्राचीनं शाखा न, निधीयत इत्युभयत्राऽप्यन्वेति, "गुणाः पूजा स्थानं गुणिषु न च लिङ्गं न च वयः। इति भावः ॥२३॥

अथ देवराजप्रवृत्तिमाह—

प्रजानुरागं प्रचुरं चरेभ्य–स्तस्मिन् कनिष्ठेऽपि गुणाऽकनिष्ठे।
मुहुर्निशम्येति स देवराजो राज्यं जिघृक्षु चिन्तयति स्म चैवम् ॥२४॥

प्रजेति—स देवराजः कनिष्ठेऽनुजेऽपि गुणैः कृत्वा अकनिष्ठे गुरौ ज्येष्ठे वा तस्मिन्–वत्सराजे प्रचुरं सातिशयं प्रजानामनुरागं भक्ति–मुहुर्निशम्य राज्यं जिघृक्षु ग्रहीतुमिच्छुश्च इत्येवं–वक्ष्यमाणप्रकारेण चिन्तयति स्म ॥२४॥

तच्चिन्तामेवाह—

जनानुरागो ध्रुवमस्ति यस्मिन्, संपत् तमाश्लिष्यति न भ्रमोऽत्र।
हृदा विचिन्त्येति स मुख्यमेकं, द्रव्यैरमात्यं स्ववशं चकार ॥२५॥

यस्मिन् जनानुरागः ध्रुवं निश्चयेन, न तु कल्पनयेति कृत्रिममिति भावः, अस्ति सम्पद्राज्यादिलक्ष्मीः तं–पुरुषमाश्लिष्यत्याश्रयति, अत्र विषये भ्रमो विपर्ययो न इतीत्थं हृदा विचिन्त्य स देवराजः द्रव्यैः धनदानेन मुख्यमेकममात्यं स्ववशं स्वपक्षगं चकार ॥२५॥

अथ तदग्रिमकृत्यमाह—

मतङ्गजा जङ्गमदुर्गमेते राज्ञामितीवाऽऽदित तान् पुरा सः।
ततस्तुरङ्गान् नृपरक्षिवीरान्, व्यापाद्य जीवत्यपि राजताते ॥२६॥

मतङ्गजा इति—एते राजपालिता मतङ्गजाः–करिणः राज्ञां जङ्गमदुर्गम्, दुर्गादिव तेभ्योऽपि समये–रक्षणसम्भवादिति भावः। इतीव इति विचिन्त्य इव–स देवराजः पुरा प्रथमम् तान् गजान् आदित स्ववशान् चकार। ततः पश्चात् राजताते राजनि वीरसेने जीवत्यपि सति नृपरक्षिवीरान् राज्ञोऽङ्गरक्षकान् भटान्–व्यापाद्य हत्वा तुरङ्गमानश्वान् आदितेति सम्बध्यते ॥२६॥

अथ युग्मेन राज्ञो मृत्युमाह—

किमौचितीमञ्चति देवराजे राज्यप्रदानं सति वत्सराजे !।
परं प्रकुर्वे किमहं दुरन्तै रोगैरिदानीमभिभूतगात्रः ॥२७॥
इति स्वचित्ते वसुधाधवोऽस्य ज्येष्ठस्य सूनोरविनीत–भावम्।
विदन् द्विरुक्तामयजाततापः सन्तापमन्तर्निदधद् ममार ॥२८॥युग्मम्॥

किमिति—वत्सराजे गुणज्येष्ठे सति देवराजे-देवराजाय राज्यप्रदानम्, औचिती-मुचितत्वम्, अञ्चति किम् ? नैवेत्यर्थः, ननु तर्हि वत्सराजायैव दीयतामिति चेन्न, स्वस्य तथा करणे साम्प्रतं शक्त्यभावादित्याह-परं किन्तु दुरन्तैः मृत्युप्रदायकतया दुष्परिणामैः दुश्चिकित्स्यैर्वा रोगैः कृत्वा अभिभूतगात्रः निःसत्त्वीकृतशरीरः अहमिदानीं किं प्रकुर्वे कर्तुं शक्तः ? न किमपीत्यर्थः ॥ वसुधाधवः महीपतिर्वीरसेनः इति पूर्वोक्तासामर्थ्यहेतोः अस्य ज्येष्ठस्य सूनोः पुत्रस्य देवराजस्य अविनीतभावम् उद्धतत्वं स्वचित्ते विदन् जानन् अन्तः मनसि सन्तापं दुःखम् निदधत्कुर्वन् अन्तर्हितमेव कुर्वन् वा अतएव द्विरुक्तेन द्विगुणीभूतेन आमयेन-रोगेण जाततापः प्राप्तपीडः ममार मृत्युं प्राप्तः ॥२७॥२८॥युग्मम्॥

अथ तयोः राजपुत्रयोः प्रवृत्तिमाह—

परे तु कृत्यानि नृपस्य चक्रुः श्रीवत्सराजेन सहाऽप्यमात्याः ।
श्रीदेवराजोऽपि शशास राज्यं तत्राऽनुरागं न दधुः प्रजाश्च ॥२९॥

परे इति—परे अन्ये अमात्या अपि तु, तुश्चार्थे, अमात्या अपि चेत्यर्थः। श्रीवत्सराजेन सह नृपस्य मृतस्य श्रीवीरसेननृपस्य कृतानि और्ध्वदेहिककर्माणि चक्रुः श्रीदेवराजः अपि राज्यं शशास, चस्त्वर्थे किन्तु इत्यर्थः। प्रजाः तत्र-देवराजे अनुरागम् राजभक्तिं न दधुश्चक्रुः, अनभिमतत्वादिति भावः ॥२९॥

अथ वत्सराजस्य प्रवृत्तिमाह—

महीपतेस्तस्य च वत्सराजः सेवां चकारेतरवत् स नित्यम् ।
न चाग्रजत्वं हि न चानुजत्वं राज्ञां मतं सेवकतामपास्य ॥३०॥

महीति—स वत्सराजश्च तस्य महीपतेर्देवराजस्य इतरवत् पुरुषान्तरवत् नित्यम् सेवां चकार, न तु अनुजे राज्ञः कथमितरवद्व्यवहार इति चेत्तत्राह-हि यतः सेवकतामपास्य विहाय राज्ञाम् अग्रजत्वम् ज्येष्ठत्वम् न च मतम् इष्टम् न च नापि अनुजत्वम्, मतम्। राजानो हि सेवामिच्छन्ति, तेषां ज्येष्ठादि विवेको न भवतीति भाव. ॥३०॥

अथ मन्त्रिदुश्चेष्टितमाह—

स एव मन्त्री नृपतेरपायं स्वस्याऽपि जानन्नित एव दुष्टः ।
रहस्यऽवादीद नृपतिं खला हि स्वस्यानुमानेन परं विदन्ति ॥३१॥

स द्रव्येण वशीकृतः दुष्टः परापकारचिन्तकः मन्त्री एव नृपतेः देवराजस्य स्वस्यापि इतः-वत्सराजादेव अपायं विनाशं जानन् निश्चिन्वन् नृपतिं देवराजं रहसि अवादीत्, ननु

वत्सराजस्य सेवा परायणत्वेऽपि कथं तस्मिन् दु शङ्केति चेत्तत्राह-हि यतः खलाः स्वस्य निजस्य अनुमानेन-अहं यथा तथैव परेऽपि इत्यनुमानेन परमन्यं विदन्ति, आत्मवदेव अन्यमपि जानन्तीत्यर्थः ॥३१॥

अथ मन्त्र्युक्तिमेवाह—

नृदेव ! सेवाप्रवणोऽपि तेऽयं नैवाऽनुजो वृद्धिमुपागतः सन् ।
क्षयाऽऽमयाऽऽकार इवाङ्गबद्धः स्यादायतौ क्षेमकरः कथञ्चित् ॥३२॥

नृदेवेति—नृदेव ! राजन् ! सेवायां प्रवणोऽनुरक्तोऽपि अयं ते अनुजः वत्सराजः वृद्धिम् उपागतः समृद्धि प्रजापक्षपातादिसामग्रीसमग्रः सन् अङ्गबद्धः शरीरस्थः क्षयाख्यो य आमयो रोगः सनयक्ष्मा तस्य आकारश्चिह्नमिव आयतौ भविष्यत्काले कथञ्चित् कथमपि क्षेमकरः कुशलानुबन्धो नैवस्यात्, यथा हि क्षयचिह्नम् काले नाशाय तद्वद्-दायादोऽपीति भावः ॥३२॥

अथ देवराजकृत वत्सराज निर्वासनमाह—

नरेश्वरस्तस्य वचः स तथ्यं जानन् स्वचित्ते विगलद्विवेकः ।
विनाऽपराधं किल वत्सराजं निर्वासयामास तदैव देशात् ॥३३॥

नरेश्वर इति—स नरेश्वरो देवराजः तस्य मन्त्रिणः वचः तथ्यं स्वचित्ते जानन् विचारयन्, अतएव विगलद्विवेकः भ्रष्टबुद्धिः-सन् तदेव अपराधं विनैव वत्सराजं देशात्स्वराज्यान्निर्वासयामास, किलेत्यैतिह्ये ॥३३॥

पिशुनाः सर्वहरा इत्याह—

न पत्तनग्रामनिवासमात्रत्यागं प्रकुर्वन्ति निषेविता ये ।
त एव केषां प्रभवोऽपि देशत्यागे समर्थाः पिशुनास्तदत्र ॥३४॥

ये निषेविता उपासिता. प्रभवः राजानः, ते एव केषां केषाञ्चित् पत्तनानि ग्रामा निवासा एव पत्तन-ग्रामनिवासमात्रम् तस्य त्यागं न प्रकुर्वन्ति. देशत्यागमपि प्रकुर्वन्ति, न केवलं पत्तनादिभ्य एव निष्कासयन्ति, किन्तु देशादपीत्यर्थः । न नु सेविता अपि-कुत इत्थं कुर्वन्ति इति चेत्तत्राह—तत्ततः अत्र सेवक देशत्यागादि विषये पिशुना. सूचकाः समर्थाः पटवः, पिशुनादि विरुद्धकथनाद्युपायै. निरागसोऽपि दण्डयन्तीति भाव । राज्ञोऽविवेकित्वे पिशुनसामर्थ्यं प्रसरतीति यावत् ॥३४॥

अथ तन्मातु· प्रवृत्तिमाह—

निरागसस्तस्य तथाऽपमानं माता समाकर्ण्य समं भगिन्या ।
निवार्यमाणाऽपि नृपेण बाढं व्यावर्तनायेव समन्वयासीत् ॥३५॥

निरेति—निरागसः निरपराधस्य, "आगोऽपराधोमन्तुश्चे"त्यमरः । तस्य वत्सराजस्य तथा देशत्यागरूपमपमानं समाकर्ण्य भगिन्या स्वस्रा समं माता वत्सराजमाता नृपेण-देवराजेन बाढं भृशम्, "गाढबाढ दृढाणि च ।" अतिवेलभृशाऽत्यर्था:" इत्यमरः । निर्वार्यमाणा मा गम इत्येवं निषेध्यमाना अपि व्यावर्त्तनाय परावर्त्तनाय इव समं सह अन्वयासीदनुययौ ॥३५॥

गृहीतसर्वाभरणास्त्रयोऽपि क्षोणीभुजा दुर्जनवाक्यतोऽपि ।
अवन्तिदेशस्य विभूषणं तेऽवन्तीपुरीं प्रापुऋतेऽपि यानम् ॥३६॥

गृहीतेति—क्षोणीभुजा राज्ञा देवराजेन दुर्जनानां वाक्यमिव वाक्यम् तस्मात्, दुर्वचः पुरस्सरमित्यर्थः, गृहीतान्याच्छिन्नानि सर्वाणि न तु कतिचिदेव आभरणानि येषां ते तादृशाः ते त्रयः अपि वत्सराजादयः यानम् शकटादिं ऋते विनाऽपि पादचारेणैव अवन्तिदेशस्य विभूषणम् अवन्तीपुरीं प्रापुः ययुः ॥३६॥

ननु कथमेवं तेषां सहसा दुःखप्राप्तिरिति चेद्दैवमेवात्र कारणमित्याह—

न चिन्त्यते यद् मनसा कदाऽपि स्वप्नेऽपि यस्याऽनुपलब्धिरेव ।
न योगिनां यद्विषयः कदाऽपि दैवं पुनस्तत् सहसा करोति ॥३७॥

नेति—यद्दुःखादि मनसा कदाऽपि न चिन्त्यते, स्वप्नेऽपि यस्य दुःखादेरनुपलब्धिरननुभवः, यद् योगिनां कदाऽपि न विषयः गोचरः, तद्दुःखादि, पुनरिति वाक्यालङ्कारे, दैवं भाग्यं सहसा अकस्मादेव करोत्युपनयति, दैवस्याचिन्त्यो महिमेत्यर्थः ॥३७॥

अथावन्तीवृत्तान्तमाह—

अपालयत् तां नगरीं नरेन्द्रः प्रध्वस्तशत्रुर्जितशत्रुनामा ।
द्विधाऽपि देव्या कनकश्रिया यो-राज्यं मनः स्वं च वशीचकार ॥३८॥

अपालेति—तामवन्तीं नगरीं प्रध्वस्तशत्रुः विनाशितारिः, अतएव अन्वर्थतया-जितशत्रुनामा नरेन्द्र अपालयत् शास्ति स्म, यः-जितशत्रुः द्विधा प्रकारद्वयवत्या अपि कनकश्रिया-सुवर्णादिकोशसमृद्धया कनकश्रीनाम्न्या च देव्या सुरी विशेषया पट्टराज्ञ्या च अनुक्रमेण राज्यं मनश्च-वशीचकार स्वस्थमकरोत् ॥ श्रीधनादिसम्पन्नः स इति भावः ॥३८॥

अथ-वत्सराजादिवृत्तान्तमाह—

पुरी समीपं समुपेत्य शालच्छायां समालम्ब्य विलम्बभाजम् ।
भृशं श्रमार्तां विमलानुजैव तां धारिणीं व्याहरति स्म चैवम् ॥३९॥

पुरीति—पुर्याः अवन्तीनगर्याः समीपं समुपेत्य-प्राप्य विलम्बभाजम् अतिदीर्घाम्, ह्रस्वच्छायायां तथा तापशान्तेरभावात्तत्राधिकक्कालं स्थितेरसम्भवाच्चेति भावः ॥ शालच्छायां

तरुच्छायां-समालम्ब्याऽऽश्रित्य विमलानाम्नी अनुजा कनिष्ठभगिन्येव भृशमत्यन्तं श्रमार्त्ता क्लान्तां तां धारिणीं वत्सराजमातरमेवं च व्याहरति कथयति स्म । ३९॥

तदुक्तिमेवाह—

क्षणं प्रतीक्षस्व महाशयेऽत्र यावत् पुरोऽभ्यन्तरमेव गत्वा ।
द्विधा स्थितिर्यत्र विधीयते तत् स्थानं समालोक्य नयामि पश्चात् ॥४०॥

क्षणमिति—महाशये ! अत्र क्षणं कियत्कालं-प्रतीक्षस्व कालं यापय अवधिमेवाह-यावदवधि पुरः नगर्याः अभ्यन्तरं मध्ये गत्वा, द्विधा स्थितिः निवासेन जीविकया च स्थितिः-यत्र स्थाने विधीयते क्रियेत तत्तादृशं स्थानं समालोक्य मार्गयित्वा न यामि आयामि पश्चात्परावृत्य इत्यर्थः । नहि केवलमितस्ततो भ्रमणेन निर्वाह-इति भावः ॥४०॥

इतीरयित्वा त्वरितं नगर्या मध्येऽपि गत्वा परतो गृहान् सा ।
विलोकयन्ती सहसा महेभ्य श्रीसोमदत्तस्य गृहं विवेश ॥४१॥

इतीति—इति पूर्वोक्त प्रकारेण ईरयित्वा कथयित्वा नगर्या मध्ये त्वरितं शीघ्रम् "अथ शीघ्रं त्वरितमि"त्यमरः । गत्वा परतः दूरतः न तु सामीप्यात्—अपरिचितस्य समीपगमने कुसन्देहादिसम्भवादिति-भावः । यद्वा उत्कृष्टान् गृहान् विलोकयन्ती सा विमला सहसा अतर्कितमेव महेभ्य श्रीसोमदत्तस्य गृहं विवेश ।४१॥

पुरः स्थितेनेभ्यवरेण साऽपि पृष्टा किमर्थं समुपागताऽसि ? ।
उवाच सा स्वच्छमहेच्छ ! मह्यं यच्छाऽऽश्रयं कञ्चिदनाश्रयायै ॥४२॥

पुरइति-पुरः गृहाग्रभाग एव स्थितेन इभ्यवरेण सोमदत्तश्रेष्ठिना साऽपि विमला किमर्थं समुपागताऽसि, इत्येवं पृष्टा अपि, ततः सा उवाच, किमित्याह-स्वच्छमहेच्छ ! निर्मलोदाराशयः ! अनाश्रयायै आश्रयरहितायै मह्यमाश्रयं कञ्चिदल्पमपि यच्छदेहि ॥४२॥

स्वजामिजामेयसमन्विताऽहं तिष्ठामि यत्र त्वदुरुप्रतिष्ठा ।
त्वमास्स्व मद्भाटक एव किन्तु ब्रूहि स्वयं भाटकमग्रतो मे ॥४३॥

स्वेति—यत्र त्वद्दत्ते आश्रये स्वस्य जाम्या भगिन्या जामेयेन भागिनेयेन च समन्विता अहं तिष्ठामि निवसामि, अनाश्रयस्याश्रयदानेन च तव उर्वी महती प्रतिष्ठा कीर्तिर्भविष्यतीति शेषः, लोके अनाथरक्षणं गौ स्वकरमिति-भावः । अथेभ्योक्तिमाह-त्वम् मद्भाटके-मन्निवासे आस्स्व तिष्ठ, किन्तु मे मम भाटकम् स्थानोपभोगवेतनं स्वयमेव अग्रत एव ब्रूहि, यथा न पश्चाद् विवादः स्यादिति भावः ॥४३॥

अपास्तलज्जं कृपणोपयुक्तं तेनोदिता सा पुनराह तात ।
त्वदालये कर्म पुरा विदध्वो भोज्ये त्वया भाटकमस्ति नान्यत् ।४४॥

अपास्तेति—अपास्ता—त्यक्ता अकिञ्चनाद्भाटकस्य—याचनजन्या लज्जा यथास्यात्तथा कृपणस्य उपयुक्तमुचितम् यथास्यात्तथा तेनेभ्येनोदिता कथिता सा विमला पुनराह तात ! पुरा प्रथमं त्वदालये तव गृहे कर्म गृहकर्म विदध्वः कुर्वावः तत्र कर्मणि च "त्वया भोजनं मृतकं च दातव्यम्, किन्तु" त्वया केवलं भोज्ये भोजनीयाऽहम्, मृतकं च भाटके—ज्ञेयम्, इतोऽन्यत् भाटकं नास्ति ॥४४॥

तथेति तेनाभिहिते त्रयोऽपि स्थाने प्रदत्तेऽस्थुरुरीकृताहीः ।
प्रतिश्रुतस्याऽवनमन्तरेण यद्वा सतां न व्रतमन्यदस्ति ॥४५॥

तथेतीति—तथा त्वदुक्तप्रकार एवास्त्विति तेनेभ्येनाभिहिते कथिते सति स्थाने निवासार्थगृहादिरूपे प्रदत्ते च उरीकृताहीः स्वीकृतवाचः ते त्रयोऽपि वत्सराजादयः अस्थुः अध्यवात्सुः । ननु किमिति वचनं पालयामासुरिति चेत्तत्राह—यद्वा यतः सताम् प्रतिश्रुतस्य प्रतिज्ञातस्य अवनं पालनमन्तरेण विना अन्यद्व्रतमवश्यं पालनीयं नियमादि नास्ति, नहि सन्तः प्रतिज्ञातं त्यजन्तीति यावत् ॥४५॥

निरुद्यमो वामपि नन्दनोऽयं सन्नन्दनस्तिष्ठति किं विकर्मा ? ।
निरन्तरं भोजयितास्मि चैनं कृत्येन मत्तर्णकरक्षणेन ।।४६॥

निरुद्यम इति—वां युवयोः भगिन्योः अयं वर्त्तमानः अपि नन्दनः पुत्रः वत्सराजः निरुद्यमः व्यवसायरहितः, तच्च न युक्तमित्याह—सन्नन्दनः सत्पुत्रः विकर्मा कार्यव्यवसायरहितः तिष्ठति किम् ? नैवेत्यर्थः अर्थोद्यमरहितः भोजनमात्रकर्मा कुपुत्र एवेति भाव । ननु तादृशकार्याभावादेवायं निष्क्रियः, न तु अलसत्वादितिचेत्तत्राह—मत्तर्णकानां मदीयवृषभादीनां वत्सानां वा रक्षणेन चारणरूपेण कृत्येन कर्मणा एनं तव नन्दनं वत्सराजम् नित्यं भोजयितास्मि, एवं च भोजनमात्रवेतनेन मत्तर्णकचारणकर्माऽयं करोतु अकरणान्मन्दकरणं श्रेयः, इति अकिञ्चनस्य वराहिकाऽपि लाभ इति च न्यायादिति भावः ॥४६॥

इतीभ्यधुर्यस्य निवेदनेन ताभ्यां कथञ्चिद् भणितो हठेन ।
अनीहमानस्त्रपया सकोपो बाह्ये ययौ तर्णकरक्षणाय ॥४७॥

इभ्यधुर्यस्य धनिकमुख्यस्य सोमदत्तस्य इत्युक्तप्रकारेण निवेदनेन कथनेन ताभ्यां मातृमातृष्वसृभ्याम् कथञ्चिद् हठेनाग्रहपूर्वकं कथितः त्रपया स्वस्य राजपुत्रत्वाद्गोचारणरूपनिकृष्ट-

कार्यजन्यलज्जयासङ्कोचोऽप्रीतः अतएव अनीहमानोऽनिच्छन्नपि बाह्ये वनप्रदेशे तर्णकानां रक्षकानां रक्षणाय चारणाय-ययौ, वत्सराज इति शेषः ॥४७॥ युग्मम् ॥

क्वचित् प्रदेशे विजने स तस्मिन्नाकस्मिकाकर्णित तारनादैः ।
खल्लूरिकायां श्रममादधानान् ज्ञात्वा कुमारानगमत् कुमारः ॥४८॥

क्वचिदिति—स कुमारः वत्सराजः तस्मिन् क्वचिद्विजने जनरहिते प्रदेशे आकस्मिकैः-अतर्कितोपनतैः आकर्णितैः श्रुतैः तारैरत्युच्चैः नादैः शब्दै. कृत्वा खल्लूरिकायां मल्लव्यायामभूमौकुमारान् यूवकल्पपुरुषान् श्रमम् व्यायाममादधानान् कुर्वाणान् ज्ञात्वाऽनुमायागमत्, तत्रेति शेषः ॥४८॥

वितन्वतां तत्र कुमारकाणां शस्त्रश्रमं सम्यगवेक्षमाणम् ।
कृताङ्घ्रघातेन मुदं वहन्तं तद्व्यत्ययादास्य विकूणनं च ॥४९॥

वितन्वतानिति – तत्र खल्लूरिकायाम् शास्त्रश्रमं शास्त्राभ्यासं वितन्वतां कुर्वताम् कुमारकाणाम्, शेषे षष्ठी, तथा च शास्त्रश्रम वितन्वतः कुमारानित्यर्थः । सम्यक् उत्तममध्यमादिविवेक पूर्वकमीक्षमाणम्, कृतेन अङ्गघातेन अभ्यासे परस्परं सकलशास्त्रप्रयोगेण जातेन शरीरक्षतेन वीरोचितत्वान्मुदं हर्षम् तद्व्यत्ययादपाटवेन वध्यस्यावेधे प्रहारनिष्फलतायाञ्च तिरस्कार बुद्ध्या आस्य विकूणनं मुखसङ्कोचं च-वहन्तं कुर्वन्तम् ॥४९॥

विलोक्य तं लोक विलोकनीय-स्वाकारसम्भावितबुद्धिधारम् ।
चमत्कृतस्तद्गुणकाम्ययैवाऽपृच्छत् कलाचार्य उदारचित्तः ॥५०॥

विलोक्येति – लोकैः विलोकनीयेन सौष्ठवाद्दर्शनीयेन स्वस्याऽऽकारेण रूपेण सम्भाविताऽनुमिता बुद्धिधारा तीक्ष्णबुद्धिजा यस्य तादृशं त वत्सराजम् विलोक्य तस्य गुणस्य काम्यया कस्यायं गुणस्य कस्य गुणिनोऽयं गुण इति गुणीति जिज्ञासया एव उदारचित्तः मनस्वी कलाचार्यः कलाशिक्षकः चमत्कृतः सोत्सुको विस्मितश्चापृच्छत् ॥५०॥

तत्प्रश्नमेवाह—

अये ! महाभाग ! समागतोऽसि देशात् कुतः पुण्यतमप्रदेशात् ।
कयाऽऽख्यया ख्यातिमितोऽसि कीदृक् शास्त्रे श्रमस्ते वद मेऽग्रतस्त्वम् ? ॥५१॥

अये इति—अये ! महाभाग ! कुतः कस्मात् पुण्यतमः प्रदेशः नगरादिरूपः यस्मिन् यस्य तस्मात्, साऽभिप्रायमिदं विशेषणम्, त्वादृशस्य पुण्यतमप्रदेश एव सम्भव इति भावः । देशात् समागतोऽसि, तथा कया आख्यया नाम्ना ख्यातिमित. प्राप्तोऽसि, किमभिधेयोऽसीत्यर्थः । किञ्च शास्त्रे—शास्त्रप्रयोगविषये ते तव कीदृक् श्रमोऽभ्यास इत्येतत्सर्वम् मेऽग्रतो वद ॥५१॥

अथ वत्सराजकृतोत्तरमाह—

इति प्रतिश्रुत्य तदुक्तवाचमाचष्ट वाचस्पतिवत् कुमारः ।
अहं महाराष्ट्रमहाभिधानाद् देशात् समागां कुतुकेन चाऽत्र ॥५२॥

इतीति—इति उक्तप्रकारेण तदुक्तवाचं प्रतिश्रुत्य-श्रुत्वा वाचस्पतिवत् बृहस्पतितुल्यः कुमारो वत्सराजः आचष्ट समुत्तार, किमित्याह–अहं महाराष्ट्रमिति महाभिधानाद्देशात्कुतुकेन कौतूहलेन चाऽत्र देशे समागामागतोऽस्मि, ॥५२॥

स्वनाम तु स्वयं न वक्तव्यमित्याह—

सचेतनः कः स्वत एव नाम ब्रूयाद् विदन् स्वं व्यवहारसारम् ।
विलोपतस्तस्य न किं भवेतां नु द्रव्यजीवद्वितयव्ययौ च ? ॥५३॥

सचेतन इति - कः सचेतनः मतिमान् व्यवहारसारं श्रेष्ठव्यवहारं विदन् जानन् स्वं नाम स्वतः एव ब्रूयात् ? न कोऽपीत्यर्थः । "आत्मनाम गुरोर्नाम नामाऽतिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयो" रित्युक्तेरिति भावः न केवलं व्यवहारलोप एव, किन्त्वनर्थान्तरमपि सम्भाव्यते तदाह—तस्य व्यवहारस्य विलोपतस्त्यागात् द्रव्यस्य निलधनस्य जीवस्य स्वजीवस्येति द्वितयस्योभयस्यैव व्ययौ नाशौ च भवेताम् ॥ अतस्तन्न वक्तव्यं मयेति यावत् ॥५३॥

नामाऽकथने युक्त्यन्तरमाह—

भवेत् परोक्षप्रतिपत्तिरेव नाम्ना न साक्षात् प्रतिभासवासः ।
अपेक्षतां को हि बुधोऽनुमानं प्रत्यक्षमाने व्यवतिष्ठमाने ? ॥५४॥

भवेदिति—नाम्ना नाम पदेन, परोक्षप्रतिपत्तिरेव परोक्षज्ञानमेव, वाच्यस्येत्यर्थाल्लभ्यते, एवकार व्यवच्छेद्यमाह–न साक्षात्प्रत्यक्षेण प्रतिभासवासः भानगन्धः शब्दजन्यज्ञानस्य परोक्षत्वा-दितिभावः । तस्य च प्रत्यक्षाभाव एवोपयोगः इत्याह–को हि बुधः ज्ञानविवेकपूर्णः प्रत्यक्षमाने प्रत्यक्षप्रमाणे व्यवतिष्ठमाने उपपन्ने सति अनुमानम् उपलक्षणतया परोक्षमानमपेक्षताम् ? न कोऽपीत्यर्थः प्रत्यक्षे प्रमाणे सति प्रमाणान्तरं न गवेषणीयमिति प्रत्यक्षे प्रमाणाभावादिति भावः एवञ्च अत्राहं प्रत्यक्षमानसिद्ध एवेति नामाख्यानमनतिप्रयोजनकमित्यर्थः ॥५४॥

अथ तृतीयप्रश्नमुत्तरयति—

परिश्रमः कश्चन मेऽस्ति शास्त्रे संदृष्टमात्रोऽभवत्प्रसङ्गात् ।
इति ब्रुवाणोऽर्पितबाणधन्वा स्वाभ्यासमेभ्यः समदीदृशत् सः ॥५५॥

परीति—शास्त्रे शास्त्रविद्यायाम् कश्चन परिश्रमोऽभ्यासः , अत्र इह स्थाने भवतां प्रसङ्गात् संयोगात् अवसरं प्राप्येति यावत् । संदृष्टमात्रः दृष्ट एव अस्ति भवतां शास्त्राऽभ्यासो दृष्ट

इत्येतावन्मात्रमेव ममशास्त्रे श्रम इति स्वार्जवोक्तिः, कलाचार्यस्य च सूक्ष्मबुद्धितया शास्त्रविद्या-निपुणोऽयमित्यनुमितं तेन अत एव, इत्युक्तप्रकारेण ब्रुवाणः वत्सराजः अर्पितो बाणोधनुश्च यस्य स तादृशः सन् एभ्यः कुमारादिभ्यः स्वस्य अभ्यासं शास्त्राभ्यासं समदर्शत् ।।५५।।

अहो ! श्रुतार्थप्रतिपत्तिमत्त्वमेतस्य वक्तृत्वमहो ! महीयः ।
अहो ! धनुर्वेदविशेषवित्त्वमित्यात्तचित्तास्तमवर्णयंस्ते ।।५६।।

अहोइति—ते कलाचार्यप्रभृतयः आत्तचित्ताः-तस्य कौशल्यं दृष्ट्वा जातविस्मयाः एतस्य वत्सराजस्येत्यर्थः, श्रुतानां शास्त्राणामर्थस्य-तत्त्वस्य प्रतिपत्तिमत्त्वं ज्ञातृत्वम्, अहो ! अनन्य-साधारणतया अद्भुतमित्यर्थः ।। तथा महीयः अति प्रशस्यम् वक्तृत्वम्, अहो ! तथा, धनुर्वेदस्य विशेष्यवित्त्वम् नैपुण्यम् अहो ! इत्येवं प्रकारेण तं वत्सराजमवर्णयन् प्राशंसन् ।।५६।।

पुराद् नृपोदेशवशात् पुरावत् सूदैस्तदाऽऽनीतमभुञ्जतान्नम् ।
कलाविदा तेन समं कुमारा मारानुकारं तमबूभुजंश्च ।।५७।।

पुरादिति—तदा कुमारादि कृतपरिश्रमास्समय-एव पुरावत् पूर्ववत् सूदैः पाचकैः नृपा-देशवशात् पुरात् आनीतमन्नम् कुमारा तेन कलाविदा कलाचार्येण समं सहाभुञ्जत, मारानुकारं रूपेण कन्दर्पप्रतिमं त वत्सराजञ्च अबूभुजन् भोजयन्ति स्म ।।५७।।

ते तर्णका रक्षकमन्तरेण पस्त्यं सकालेऽपि ययुर्विचर्य ।।
प्रदोषकालेऽखिलदोषमुक्तेः क्रीडा विधायाऽऽश्रयदाश्रयं सः ।।५८।।

ते इति—ते: चारणार्थमानीताः तर्णकाः वत्साः रक्षकमन्तरेणाऽपि चारकं विनाऽपि विचर्य चरणं कृत्वा सकाले समयात्प्रागेव पस्त्यं गृह "निशान्त्यपस्त्यसदनमि"त्यमरः ययुः, स वत्स-राजश्च अखिलाना दोषाणामपराधानां मुक्तेः मुक्तिसम्बन्धीनी., दोषान् मुक्त रहितस्य शिक्षिकाः क्रीडाः विधाय प्रदोषकाले सन्ध्याकाले आश्रयमाश्रयत् स्वावासं प्राप्त इत्यर्थ. ।।५८।।

चिराय किं वत्स ! समागमस्त्वं किं वत्सरूपाणि समागमन् प्राक् ! ।
इतीभ्यवर्येण हितेन पृष्टः स प्राह किञ्चिच्छयितोऽस्मि तात ! ।।५९।।

चिरायेति—वत्स ! सस्नेहामन्त्रणे, त्वं चिराय-विलम्ब्य किं कुतो हेतोः समागमः, वत्सरूपाणि वत्साः प्राक् उचितकालात्प्रागेव किं कुतः समागमन् ? इतीत्थं हितेनेष्टेनेभ्यवर्येण पृष्टः स प्राह-किमित्याह-तत ! किञ्चित् शयितः अस्मि, किञ्चित्कालं सुप्तोऽभूवम्, तेनाऽयं विप र्ययो जात इत्यर्थः ।।५९।।

पूर्वश्लोकोक्तवाक्यशेषमाह—

ततः समायासिषुरेतकानि श्रान्तस्य निद्रा सुलभा स्वभावात् ।
इदं द्वितीयेऽह्नि पुनस्तृतीयेऽप्यस्योत्तरं जातमनुत्तरं च ॥६०॥

तत इति—ततः शयनाद्धेतोरेव एतकानि वत्सरूपाणि समायासिषुः समायातानि । शयने हेतुमाह–श्रान्तस्य श्रमक्लान्तस्य निद्रा स्वभावात् सहजत एव सुलभा, श्रान्तोह्यधिकं निद्रातीति भावः । इदं वत्सानां सकाल एवागमनं स्वस्य च प्रदोषे–समागमनम्, द्वितीये अह्नि पुनः तृतीये, अस्य उत्तरं चतुर्थाह्निच अनुत्तरं यत्पर्यनुयोगस्य प्रतिवाक्याभावः तादृशं जातम् ॥६०॥

स वत्सरूपाणि दिनोदयेऽपि लात्वा विमुच्यैव वने प्रयाति ।
कुमारकाणां सविधेऽस्त्रविद्या-वैदग्ध्यमुत्तेजयितुं नतानाम् ॥६१॥

स इति - स वत्सराजः दिनोदयेऽपि दिनप्रारम्भे एव, प्रभाते इत्यर्थः । वत्सरूपाणि लात्वा आदाय वने विमुच्य चरणार्थं विसृज्य नतानाम् स्वं प्रति नम्राणां विहिताऽऽदराणामिति यावत्, कुमारकाणां सविधे समीपे अस्त्रविद्यायां वैदग्ध्यं नैपुण्यमुत्तेजयितुम् प्रत्यग्रभूतां कर्त्तुं, वर्धयितुम्, आवृत्त्या दृढीकर्त्तुं वा प्रयाति–गच्छति स्म ॥६२॥

अनारतं तैरुपरोध्य भोज्यं प्राज्याज्यसौन्दर्यमभोज्यताऽयम् ।
गृहं प्रयातेषु च च तर्णकेषु सायं समायाति स मुक्तमायः ॥६२॥

अनेति—तैः कुमारैः अयं वत्सराजः अनारतम् सततम् प्राज्यस्योऽमत्यधिकमाज्यस्य घृतस्य, उपलक्षणत्वादन्यस्यापि पौष्टिकस्य दुग्धादेः सत्त्वेन सौन्दर्यं साभिलाषग्राह्यत्वं यस्मिन्–तादृशं भोज्यं स्वाद्वन्नादि अभ्योजत, तथा मुक्तमायः निष्कपटः सः च गृहं प्रयातेषु तर्णकेषु–सायं समायाति, स्मेति शेषः ॥६२॥

तमेव माचख्यतुरेकदा ते मातृष्वसा साऽस्य तथा च माता ।
न वत्स ! किं रक्षसि वत्सकांस्त्वं गोपालवृत्तिं प्रतिपद्य हृद्याम् ? ॥६३॥

तमिति—एकदा तं वत्सराजम्, सा मातृष्वसा–तथा अस्य माता च ते द्वे अपि एवं वक्ष्यमाणप्रकारेण आचख्यतुः, तदेवाह—वत्स ! त्वम् हृद्यां प्रियां गोपालवृत्तिं गोपालकत्वं प्रतिपद्य स्वीकृत्य–वत्सकान्, स्वार्थे कः, वत्सानित्यर्थः, किं कुतो–हेतोर्न रक्षसि ? ॥६३॥

अथ वत्सराजकृतमुत्तरमाह—

न मातरौ ! वत्सकरक्षणेन गोपालवृत्तिर्विदुषां मताऽस्ति ।
निरन्वयत्वाच्च तथापि युष्म–न्निर्देशतोऽहस्त्रितयं कृतं तत् ॥६४॥

नेति--मातरौ ! मातृमातृष्वसारौ ! मातृष्वसुरपि मातृत्वेन "मातृष्वसा मातुलानी-श्वश्रूश्च पितृष्वसे"त्यादिना-मातृत्वेनोक्तेरिति भावः। वत्सकस्य रक्षणेन-चारणमात्रेण गोपाल-वृत्तिः लोकरूढगोपालकता विदुषां मता नाऽस्ति। गोपालकानां कुलमेव पृथगस्ति, न चाहं गोपालान्वयः, तदाह-निरन्वयत्वाच्च, तादृशकुलाभावाच्च नाऽहं-गोपाल इति भावः, ननु तर्हि कथं गोपालयोग्यं गोचारणं करोषि ? इति चेत्तत्राह-युष्माकं निर्देशतः आज्ञातः तद्वत्सरक्षण-महस्ति तवं दिनत्रयं यावत्कृतम्, गुर्वाज्ञाभङ्गो मामूदिति-यावदिति भावः ॥६४॥

अथ स्वमन्तव्यमाह—

अतः परं नैव पुनर्नियोज्यो-नेदृग् विधातास्मि कथञ्चनाऽपि ।
असून् परित्यक्तुमपि स्पृहावान् स्यात् सज्जनो नाऽनुचितं विधातुम् ॥६५॥

अत इति —अतः परमितोऽग्रे पुनः नैव-नियोज्यः वत्सरक्षणायाज्ञाप्यः, अहमिति शेषः, कुत इत्याह-कथञ्चन अपि युष्मदाज्ञायां सत्यामपीति यावत्, ईदृक् वत्सरक्षणादिकं न नैव विधातास्मि विधास्यामि, ईदृगाग्रहे हेतुमाह-सज्जनः-उत्तमजनः असून् प्राणानपि, किमुत किङ्करत्वादि, परित्यक्तुं स्पृहावान् स्यात्, प्राणानपि परित्यजेत किन्तु अनुचितं स्वानर्हं विधातुं न स्पृहावान् स्यात् मादृशराजपुत्रस्य वत्सरक्षणमयोग्यमिति भावः ॥६५॥

प्रतिप्रभावं नृपनन्दनानां धाम्ना समुद्यन्नितरां स वत्सः ।
प्रबोधमापादयति स्म कञ्चित् पद्माकराणामिव भानुमाली ॥६६॥

प्रतीति—धाम्ना तेजसा नितरामत्यन्तं समुद्यन् वर्धिष्णुः स वत्सो वत्सराजः प्रभावं स्वसामर्थ्यं प्रति नृपनन्दनानां कञ्चिदनिर्वचनीयं प्रबोधं परिचयम्, पक्षान्तरे विकासम्, आपाद-यतिस्म करोतिस्म, कइव इत्याह-भानुमाली सूर्यः पद्माकराणामिव ॥६६॥

स भोजनं तत्सविधे विधाय मध्यन्दिनादूर्ध्वमुपागतश्च ।
अभाणि ताभ्यामपरेद्युरेवं निश्चिन्तता वत्स ! तवाऽपि केयम् ! ॥६७॥

स इति—स वत्सराजश्च तेषां राजपुत्राणां सविधे समीपे भोजनं विधाय मध्यन्दिनात् दिनार्धाद् ऊर्ध्वम्, अपराह्न इत्यर्थः। उपागतः सन् अपरेद्यु ताभ्यां मातृमातृष्वसृभ्यामेवं, वक्ष्य-माणप्रकारेण अभाणि कथित, किमित्याह-वत्स ! तवाऽपि का इयं लक्ष्यमाणा निश्चिन्तता चिन्ताराहित्यम् ? कुतो निश्चिन्तस्तिष्ठतीति प्रश्न इति भावः ॥६७॥

ननु किन्निपया मामकी निश्चिन्ततेति चेत्तत्राह—

न कष्टमस्माकमजातपूर्वं दृष्ट्वा सुखं स्थातुमिहोचितं ते ।
न सन्ति काष्ठान्यपि यद् गृहेऽस्मिन् यैः पच्यतेऽन्नं कृतकृत्यवित्तम् ॥६८॥

अस्माकम् अजातपूर्वं पूर्वं कदाऽप्यजातम्, राज्ञीत्वादिति भावः, कष्टम् दृष्ट्वा ते तव सुखम् कष्टचिन्तां विनैव स्थातुमिह निःसहायावस्थायां न उचितम् कष्टमेवाह—यतः अस्मिन् गृहे काष्ठानीन्धनानि अपि न सन्ति, यैरिन्धनैः कृत्वा कृतेन दासीकर्मणा वित्तं लब्धम् अन्नं पच्यते तदेतन्महत् कष्टं त्वन्निश्चिन्तता प्रयुक्तमिति भावः ॥६८॥

इतीरितः सोऽपि कठोरधारं पाणौ कुठारं विनिवेश्य वत्सः ।
विहङ्गिकामंसतले निधाय काष्ठान्युपाहर्तुमगाद् वनान्ते ॥६९॥

इतीति—इत्युक्तप्रकारेण ईरितिः प्रेरितः स वत्सः वत्सराजोऽपि कठोरधारं तीक्ष्णाग्रं कुठारं पाणौ विनिवेश्य गृहीत्वा विहङ्गिकां भारयष्टिं भारानयनार्थं स्कन्धवाह्यकाष्ठमित्यर्थः। अंसतले स्कन्धे निधाय काष्ठानि उपाहर्तुमानेतुं वनान्ते वनमध्ये अगात् ॥६९॥

वनाद् वनं वर्धकिवद् भ्रमन् स कान्तारमन्तः सहसा विवेश ।
ददर्श यक्षायतनं च तत्र प्रौढप्रभावोऽपहतोपसर्गम् ॥७०॥

वनादिति—प्रौढप्रभावः उग्रतेजाः स वत्सराजः वर्धकिवत् काष्ठतटवत्—"तक्षा तु वर्द्धकिस्त्वष्टा रथकारस्तु काष्ठतट्" इत्यमरः। वनाद्वनं भ्रमन् सहसा—अतर्कितमेव कान्तारमन्तः वनमध्ये विवेश तत्र कान्तारे च उपहतः नष्टत्वाद् रहितः उपसर्गः बाधा यत्र तादृशं, यद्वा प्रौढप्रभावेण उपहतोपसर्गमित्यन्वयः। "प्रौढप्रभावः अपहतोपसर्गं अपहतो दूरीभूत उपसर्गो यस्मिन् तादृशं निरुपसर्गं मित्यर्थ.।" यक्षायतनं यक्षमन्दिरं ददर्श ॥७०॥

न तद् वनं कश्चन पाणिनाऽपि यक्षस्य निस्सीममहामहिम्ना ।
शशाक संस्प्रष्टुमपि ज्वलन्तं वह्निं यथा तापकृताभ्युपायम् ॥७१॥

नेति—यक्षस्य नि.सीम्ना अपरिमितेन महता महिम्ना प्रभावेण तद्वनं कश्चनाऽपि जन्तुः पाणिनाऽपि—किमुत कुठारादिनेत्यपिशब्दार्थः। तापे दहने पक्षान्तरे बाधायां कृतः अभ्युपायः प्रवृत्तिर्येन तादृशं ज्वलन्तं वह्निं यथा, वह्निमिव संस्प्रष्टुमपि न शशाक ।७१॥

स भाग्यवांस्तत्र परिभ्रमंश्चाऽपश्यद् महाचन्दनशालमेकम् ।
पयोदवृन्दैरिव शम्भुशैलं-व्यालैः समालम्बितमूलपादम् ।७२॥

सइति—भाग्यवान् स वत्सराजः तत्र यक्षायतनसमीपे परिभ्रमंश्च पयोदवृन्दैः मेघसमूहैः, समाश्रितं शम्भुशैलं कैलासमिव, व्यालैः महासर्पैः समालम्बितमूलपादम् समाश्रितमूलम् एकं महान्तं चन्दनस्य शालं वृक्षमपश्यत् ॥७२॥

ततः किं कृतवानित्याह—

अपास्य तान् पापचयानिवाऽयं हस्तेन पुच्छेषु दृढं विधृत्य ।
स पर्शुना तस्य चकर्त शाखां सौरभ्यसंवासितदिग्गणस्य ॥७३॥

अपास्येति—स प्रसिद्धो वत्सराजः पापचयानिव पापानीव पापतुल्यानित्यर्थः, अनिष्टकारित्वादितिभावः । तान् सर्पान् हस्तेन पुच्छेषु दृढं शक्तिपूर्वकम् अपास्य दूरीकृत्य सौरभ्येण-संवासितः सुरभीकृतः दिशां गणः येन तादृशस्य तस्य चन्दनसालस्य शाखां पर्शुना कुठारेण-चकर्त चिच्छेद ॥७३॥

स खण्डशस्तां विरचय्य शाखां तच्छिक्ययुग्मं परिपूर्य सम्यक् ।
विहङ्गिकां न्यस्य निजांसदेश आभीरवद्ध्रीरहितश्चचाल ॥७४॥

स इति—स वत्सराजः तां कृत्तां शाखां खण्डशः खण्डं विरचय्य कृत्वा तदानीतं शिक्ययोः भारवहनरज्ज्वोः युग्मं सम्यक् परिपूर्य आभीरवद् काष्ठजीविकवद् ह्रीरहितः त्यक्तलज्जः विहङ्गिकां निजांसदेशे न्यस्य कृत्वा चचाल, स्वगृहं प्रति इति शेषः ॥७४॥

समुत्सुको मन्दिरमायियासु- र्यावत् पुरीद्वारमवाप वत्सः ।
दिनाधिनाथोऽस्तमियाय तावत् तत्कष्टमालोकितुमक्षमो व ॥७५॥

समुत्सुक इति-समुत्सुकः गृहं प्राप्तुं सोत्कण्ठः मन्दिरं गृहमायियासुः आजिगमिषुः वत्सः वत्सराजः यावद्यदवधि पुर्याः नगर्या द्वारमाप तावदेव तस्य कष्टमनुभूतपूर्वं काष्ठवहनादिरूपं काष्टं आलोकितुम् अक्षमोऽसमर्थः व इव "वा यथा तथा वैवं साम्ये" इत्यमरः । दिनाधिनाथः, सूर्यः अस्तमियाय ॥७५॥

ततः किं जातमित्याह—

तदैव चारक्षजनैर्नियुक्तैः पुर्याः प्रतोल्यः सकलाः पिनद्धाः ।
तत्रोद्घटन्तेऽभ्युदिते दिनेश राजीवकोशा इव ताः प्रबद्धाः ॥७६॥

तदा वत्सराजस्य पुरद्वारप्राप्तिसमय एव च नियुक्तैः अधिकृतैरारक्षजनैः रक्षकपुरुषैः पुर्याः सकलाः प्रतोल्यः रथ्याः "रथ्या प्रतोली विशिखे" त्यमरः । पिनद्धा दत्तार्गलाः कृताः प्रबद्धाः पिनद्धाः पक्षान्तरे सङ्कोचं गताः ताः प्रतोल्यः राजीवकोशाः कमलकुड्मलानीव तत्र पुरे दिनेशे सूर्ये अभ्युदिते सति उद्घटन्ते अनावृताः विकसिताश्च भवन्ति, शेषः ॥७६॥

तत वत्सः किं कृतवानित्याह—

अनाप्नुवंस्तत्र ततः प्रवेशं स ध्यातवान् चान्ध्यविहीनचित्तः ।
ग्रहीष्यते कश्चन चन्दनं मे निद्रासमाश्लिष्ट तनोरिहेदम् ॥७७॥

अनेति-ततः प्रतोलीपिधानाद्धेतोः तत्र पुरे प्रवेशमनाप्नुवन् "आन्ध्येनाज्ञानेन विहीनं चित्तं यस्य स तादृशः-बुद्धिमानित्यर्थः । स ध्यातवान् चिन्तयामास, किमित्याह-निद्रया समाश्लिष्टा तनुः शरीरं यस्य तादृशस्य सुप्तस्य मे ममेदं चन्दनमिह नगराद्बहिः कश्चन चौरादि ग्रहीष्यते चोरयिष्यति ॥७७॥

विचिन्त्य चैवं विनिवृत्य यक्ष-गेहान्तरेऽशेत दृढं प्रदाय ।
कपाटयुग्मं स विहङ्गिकां द्रोः शाखाप्रदेशद्वितयेऽवलम्ब्य ॥७८॥

चिन्तानन्तरं तत्कृत्यमाह—विचिन्त्येति-एवमुक्तप्रकारेण विचिन्त्य च विनिवृत्य पश्चादागत्य यक्षगेहान्तरे यक्षमन्दिरे कपाटयुग्मं दृढं प्रदाय पिधाय विहङ्गिकां का वा कृतिं द्रोः वृक्षस्य शाखायाः प्रदेशद्वितये द्वयोः प्रदेशयोः अवलम्ब्य लम्बयित्वा अशेत सुप्तवान् ॥७८॥

निशीथकाले किल याममात्रं विद्याधरीवर्ग उपेत्य नृत्यम् ।
सदैव तस्यैलविलस्य चक्रेऽग्रेस्वर्गिकान्ता प्रतिरूपरूपः ॥७९॥

निशीथेति-तस्य ऐलविलस्य यक्षस्य, "यथैकपिङ्गैलविलश्रीदपुण्यजनेश्वरा" इत्यमर. ॥ अग्रे निशीथकालेऽर्धरात्रे "अर्धरात्र निशीथौ द्वावि" त्यमरः । स्वर्गिणां देवानां कान्तानां-स्त्रीणाम् देवीनामित्यर्थः । प्रतिरूपं तुल्यं रूपं सौन्दर्यं यस्य स तादृश. देवीतुल्यः विद्याधरीवर्गः उपेत्य सदैव याममात्रं प्रहरं यावत् नृत्यं चक्रे करोति स्म, किलेत्यैतिह्ये ॥७९॥

स्वकञ्चुकं काचन तत्र यान्ती स्थानं विसस्मार मणिप्रकाशम् ।
स कुञ्चिका निर्व्यथनेन दृष्ट्वा निर्गत्य लात्वा च तदन्तरस्थात् ॥८०॥

स्वेति-काचन विद्याधारी मणिभिः प्रकाशते इति तादृशं स्वस्थानं निजास्पदं यान्ती सती तत्र यक्षायतने कञ्चुकं निचोलं विसस्मार विस्मृतवती । स वत्सराजश्च कुञ्चिकाया निर्व्यथनेन छिद्रेण "छिद्रं निर्व्यथनं रोकमि"त्यमरः । दृष्ट्वा निर्गत्य बहि निःसृत्य तत्कुञ्चकं लात्वा अन्तः यक्षायतनान्तरस्थात्तस्थौ ॥८०॥

प्रभावती सा गुणतोऽपि नाम्ना विद्याधरी स्वालिजनं जगाद ।
गताऽर्धमार्गं स्मृतकञ्चुकाऽऽल्यो हा ! विस्मृतस्तादृशकञ्चुको मे ॥८१॥

प्रभेति—सा स्मृतकञ्चुका गुणतः प्रभागुणेन नाम्ना अपि प्रभावती विद्याधरी अर्धमार्गगता सती स्वालिजनं निजसखीवर्गम् "आलिः सखी वयस्या चे "त्यमरः । जगाद । किमित्याह-आल्यः ! हाइति खेदे । मे मम तादृशः अद्भूतः कञ्चुकः विस्मृतः ॥८१॥

प्रभावती वेगवती समेता व्यावृत्य तं प्रैक्षत तत्र साऽपि ।
अवीक्ष्य तं तत्र ततश्च ताभ्यां चित्ते व्यचिन्तीति सचेतनाभ्याम् ॥८२॥

प्रभावतीति—सा प्रभावती वेगवती-तन्नाम्नी सख्यपि समेता सङ्गता सती, मिलित्वेत्यर्थः। यद्वा तत्र नृत्यस्थाने व्यावृत्त्य परावृत्त्य समेता समागता, तं कञ्चुकं प्रैक्षत अशोधयत् । तत्र नृत्यस्थाने तं कञ्चुकमवीक्ष्य अदृष्ट्वा ततस्तदनन्तरञ्च सचेतनाभ्यां बुद्धिमतीभ्यां ताभ्यां प्रभावतीवेगवतीभ्यां चित्ते-इति वक्ष्यमाणप्रकारेण व्यचिन्ति चिन्तितम् ॥८२॥

तयोश्चिन्तामेवाह—

मरुत्प्रणुन्नः सवनान्तरेऽगादुड्डीय कुत्राऽपि न वीक्ष्यते यत् ।
विमृश्य चैवं विपिनं भ्रमित्वा ताभ्यां समस्तं समवैक्ष्यताऽदः ॥८३॥

मरुदिति—स कञ्चुकः मरुता पवनेन प्रणुन्नः प्रेरितः सन्नुड्डीय कुत्रापि वनान्तरे वनमध्ये अज्ञातस्थाने अगात् ननु कुत एतदनुमानमित्यपेक्षायामाह-यद्यतोः-न वीक्ष्यते, अन्यथा हि अत्र स्थितोऽवश्यं वीक्षितः स्यादिति भावः । ताभ्यामेवं विमृश्य विचार्य च समस्तं विपिनं भ्रमित्वा अदः कञ्चुकम् समवैक्ष्यत समशोध्यत ॥८३॥

अवापि कुत्राऽपि स चाऽपि नैव दृष्टा परं तत्र विहङ्गिका सा ।
पुनर्व्यचिन्ति ध्रुवमस्ति कोऽपि यक्षस्य गेहे पुरुषः प्रसुप्तः ॥८४॥

अवापीति—स कञ्चुकश्चापि कुत्रापि नैव अवापि, परं किन्तु स शाखावलम्बिता विहङ्गिका दृष्टा, पुनः तां तद्दृष्ट्वा व्यचिन्ति, किमित्याह-ध्रुवं निश्चयेन कोऽपि पुरुषः यक्षस्य गेहे प्रसुप्तोऽस्ति, कथमन्यथाऽत्र विहङ्गिकायाः सम्भव इति भावः ॥८४॥

विहङ्गिकाया अन्यथाऽनुपपत्तिमेव घटयति—

विहङ्गिका तस्य विलोक्यते यत् सम्भाव्यते नैव विनाऽऽश्रयं सा ।
अनेन नूनं स परं गृहीतो नान्यः समागाद् न गतोऽपि कश्चित् ॥८५॥

विहेति—तस्यात्र वर्त्तमानस्य पुरुषस्य विहङ्गिका विलोक्यते, यद्यतः सा विहङ्गिका आश्रयम् स्व स्वामिनं विना नैव सम्भाव्यते, अचेतनत्वादिति भावः । परं नूनमत्यधिकनिश्चयेन अनेन विहङ्गिका स्वामिना पुरुषेण स कञ्चुकः गृहीतः, प्रकारान्तरं निषेधति-अन्यः कश्चित्पुरुषः समागान्न, गतोऽपि न ॥८५॥

तदेनमेवात्र विभीषयावो द्वारं समुद्घाटय यथाऽर्पयेत ।
न खेचराणामपि वस्तुभीतः कश्चित् परित्रातुमलं यतोऽत्र ॥८६॥

तदिति—तत्ततः एनं विहङ्गिकास्वामिनमेव विभीषयावः भयमुत्पादयावः, यथा द्वारं समुद्घाटय अर्पयेत, कञ्चुकमिति प्रकरणाल्लभ्यते । यतः अत्र भीतः सन् कश्चिदपि खेचराणाम् विद्याधराणां वस्तु परित्रातुं स्वसात्कर्त्तुं न अलं समर्थः, भयपीडितो वस्तु मुञ्चेदेवेति भावः ॥८६॥

हृदा विचिन्त्येति चिरं स ताभ्यां द्वाभ्यां स्वयं भीषितभीषितोऽपि ।
अधारयन् भीतिमवस्थितोऽन्तर्नोद्घाटयामास पुनः कपाटे ॥८७॥

हृदेति– हृदा इति उक्तप्रकारेण चिरं विचिन्त्य ताभ्यां प्रभावती वेगवतीभ्यां स्वयं स्वाभ्यामेव भीषितभीषित: अत्यन्तं भाषितोऽपि भीतिम् अधारयन् अकुर्वन् स वत्सराज अन्तः यक्षालयान्तरेवावस्थितः कपाटे कपाटद्वयं पुनः–न नैवोद्घाटयामास ॥८७॥

भयान्न यक्षस्य निकेतनस्य द्वारं करेण स्पृशतोऽपि ते च ।
ततो मिथोऽमन्त्रयतामितीमे दूरेण तस्मादपसृत्य किञ्चित् ॥८८॥

भयादिति —ते द्वे विद्याधर्यौ च भयाद्यक्षकोपभयात् यक्षस्य निकेतनस्य द्वारं करेणापि, किंपुनः उद्घाटनादिरूपेण, स्पृशतोऽपि न, ततोऽनन्तरमिमे द्वे विद्याधर्यौ तस्माद्यक्षायतनाद् किञ्चिद् दूरेण अपसृत्य गत्वा मिथः परस्परमिति वक्ष्यमाणप्रकारेणाऽमन्त्रयताम् ॥८८॥

तन्मन्त्रणामेवाह—

नरोऽत्र यः कश्चिदवस्थितोऽस्ति तस्यैव नूनं पितरावधृत्या ।
किमाविभातं विलपिष्यतो नैतस्यां क्षपायां विरहार्तिदूनौ ? ॥८९॥

नर इति—अत्र यः कश्चिद् अज्ञातः नरः पुरुषोऽवस्थितोऽस्ति तस्यैव पितरौ मातापितरौ विरहस्य पुत्रवियोगस्य अर्त्या पीडया दूनौ खिन्नौ सन्तौ अधृत्या धैर्यभङ्गहेतुना एतस्यां क्षपायां रात्रौ आविभातं प्रभातकालं यावत् न–विलपिष्यतः विलापं करिष्यतः किम् ? अपि त्ववश्यं करिष्यतः इत्यर्थः ॥८९॥

ततश्च मध्येनगरि व्रजित्वा श्रुत्वाऽस्य नामाद्यमुपेत्य चात्र ।
विलप्स्यते तद्ध्वनिना यथाऽयं द्वारं समुद्घाटयतेऽस्य भिन्नः ॥९०॥

तत इति - ततस्तस्तो हेतोश्च मध्येनगरि पुरान्तः व्रजित्वा गत्वा अस्यात्रस्थस्य नगरस्य नामाद्यं नामप्रभृति श्रुत्वा, अन्यस्य कस्यापि विलपद्भ्यां पितृभ्यां सकाशादितिभावः ॥ अत्र–च उपेत्य पुनरागत्य तयोः पित्रोः ध्वनिना शब्देन विलप्स्यते विलपिष्याव इत्यर्थः । यथा–भिन्नः भेदं प्रापितः भ्रमात्पितरौ ममेति प्रत्यायितः सन् अस्य यक्षालयस्य द्वारं समुद्घाटयते मुञ्चेत् ॥९०॥

इतीदृशं ते लघु मन्त्रयित्वावन्त्यां गते मन्दिरमस्य बुद्ध्वा ।
सुदुःश्रवान् शुश्रुवतुर्विलापां–स्तन्मातृमातृष्वसृदुःखजातान् ॥९१॥

इतीति –इतीत्थमीदृशमुक्तप्रकारम् ते द्वे–विद्याधर्यौ मन्त्रयित्वा लघु शीघ्रमेव अवन्त्यां गते प्राप्ते सत्यौ अस्य वत्सराजस्य मन्दिरं गृहं बुद्ध्वा कुतोऽपि परिज्ञाय तस्य वत्सराजस्य मातु–

मातृपित्रोश्च दुःखात् तदनागमनजन्यदुःखात् जातान् सुदुःखान् अति करुणतया श्रोतृजन-शंसनान् विलापान् परिदेवनानि—"विलापः परिदेवनानि" इत्यमरः । जुघुषतुः ॥९१॥

तद्विलापमेव वर्णयति—

न देवराजं न च देवराजं चित्ते न्यधावोपचितं श्रियाऽपि ।
त्वदाशया वासितजीवितव्ये तन्मानना नाऽजगणाव वत्स ! ॥९२॥

नेति—वत्स ! त्वदाशया त्वामाशास्य त्वं मम दर्शनाय इति मनसि कृतेच्छया । वासितं कृतं जीवितव्यं जीवनं याभ्यां ते तादृश्यौ आवाम् श्रिया समृद्ध्या उपचितं सम्पन्नं—देवराजं शक्रं न नच देवराजं तव ज्येष्ठभ्रातरं चित्ते न्यधाव स्वचित्तेनाऽऽवामाश्रयाव: ऽऽश्रयत्, तथा, तस्य देवराजस्य माननाम् अत्रैव तिष्ठतमित्येवंरूपां प्रार्थनां न अजगणाव गणयावः स्म तथ्याऽपि त्वदनागमनम् आवां महाविरहौ करोतीति शेषः ॥९२॥

न काष्ठभारानयने निदेशं भूयः प्रदद्वस्तव वत्सराज ! ।
अजानतीभ्यां यदिदं निदिष्टं पुत्रावकाभ्यामपि तत् क्षमस्व ॥९३॥

नेति—किञ्च वत्सराज ! भूयः पुनरपि तव काष्ठभारस्य आनयने आहरणार्थम् निदेश-माज्ञां न प्रदद्वः दास्यावः पुत्र अजानतीभ्यां तवागमनविरहयुक्ताभ्यामावकाभ्यां यत् इदं काष्ठानयनं निदिष्टं तत् क्षमस्व, शीघ्रमागच्छेत्यर्थः ॥९३॥

न जीवितं तिष्ठति नौ विना त्वामित्युक्तिरेषा विफलाऽधुनाऽभूत् ।
इदं कथङ्कारमथाऽपि वाच्यमाशा-पिशाची प्रबला यदस्ति ॥९४॥

नेति—त्वां वत्सराजं विना नावावयोः जीवितं न तिष्ठति, मरिष्याव आवामिति यावत्, इतीत्थमुक्तिरेषा आवयोरेतत्कथनम्, अधुना त्वदनागमने जीवितयोरावयो सत्योः विफला मिथ्या अभूत्, इदमेतत् कथङ्कारं कथा कथं वाच्यम् यतः अथाऽपि—अद्याऽपि आशा एव अस्माकमपि महादुःखात्पिशाचीव सा प्रबला अस्ति, त्वमागमिष्यसीति आशा बलवती, अतः एवावयोर्जीवितं तिष्ठति, अन्यथा तु नैव तिष्ठेदित्यतः सोक्तिः मिथ्येति न कथ्यते इति भावः ॥९४॥

तथा न कान्तस्य वियोगदुःखं ज्येष्ठस्य पुत्रस्य न चाऽप्यवेदि ।
न देशसाम्राज्यमहापदस्य हा ! हा ! यथा ते सहचारिणोऽद्य ॥९५॥

तथेति—कान्तस्य स्वपतेः वियोगदुःखं तथा न अवेदि ज्ञातम्, ज्येष्ठस्य पुत्रस्य देव-राजस्य च न, देशस्य साम्राज्यस्य सम्बन्धिनो यानपहात् तत्त्यागजन्यमसाधारणं दुःखं तस्यापि तदपीत्यर्थः, इत्येकस्मिन्, न, अवेदि. हा हा इति शोकातिशये, यथा अद्य ते सहचारिणः सहवा-सिनः वियोगदुःखमवेदीति सम्बध्यते सर्वाधिकं तव वियोगदुःखमित्यर्थः ॥९५॥

उपर्युपर्येव वितत्य दुःखं-दुःखस्य नौ दैवमवाप तृप्तिम् ।
यथा तरङ्गस्य तरङ्गमब्धेर्यद्येतदद्यैव परं समीरः ॥९६॥

उपेति—दुःखस्य उपरि उपरि परतः परतः एव दुःखं वितत्य विस्तार्य, समुत्पाद्येति यावत्, दैवम् मम भाग्यम् तृप्तिम् दुःखदानेच्छापूर्तिम् नो न च-अवाप, यथा अब्धेः समुद्रस्य तरङ्गस्य उपर्युपरितरङ्गं, वितत्य, समीरः यदि परम् ततोऽप्यधिकं-यतेतैव, तरङ्गान्तरोत्पादनाय प्रवर्त्तेत एवेत्यर्थः । अत्र नो इति, यद्येतदद्यैवेति च पाठः, न सम्यक् अर्थाऽसङ्गते, किन्तु नौ इत्यस्य स्थाने नो इति, यद्येतदद्यैवेत्यस्य स्थाने च यतेत यद्येवेति च पाठः सम्यक्प्रतिभाति तथैव च व्याख्यातं मयेत्याकलनीयम् ॥९६॥

अथ विद्याधरीविचेष्टितमाह—

तयोरिदं ते परिदेवनं तच्छ्रुत्वा समागत्य तथा व्यधत्ताम् ।
अमन्यतच्छेकतयाऽऽप्यलीकं-सर्वं स तच्चेष्टितमस्तदोषः ॥९७॥

तयोरिति—तत्ततः तयोः वत्सराजमातृमातृष्वस्रोः इदमुक्तप्रकारम् परिदेवनं विलापं श्रुत्वा ते विद्याधर्यौ समागत्य यक्षमन्दिरमागत्य तथा तन्मातृमातृष्वसृप्रकारम् व्यधत्ताम्, किन्तु अस्त-दोषः निष्कलङ्कः स वत्सराजः छेकतया विदग्धतया सर्वमपि तयोः विद्याधर्योः चेष्टितं कृत्यं विलापा-दिकम् अलीकमनृतममन्यत, तद्धि त्वापि न मम मातुरिदमित्येवं सत्यमङ्गीचकारेत्यर्थः ॥९७॥

निशावसाने निजमाश्रयं ते-निर्विद्य विद्याधरवामनेत्रे ।
आगच्छतां कः खलु धर्मराजात् प्राणान् परित्याजयितुं क्षमः स्यात् ।॥९८॥

निशेति—विद्याधरेषु तज्जातिषु वामनेत्रे स्त्रियौ विद्याधर्यावित्यर्थः, ते द्वे अपि निशावसा-ने रात्रिसमाप्तौ निर्विद्य, विरज्य निजमाश्रयं स्थानमागच्छताम्, धर्मराजात् यमराजमाश्रित्य, "धर्मराजः पितृपतिः शमवर्त्ती परेतराडि" त्यमरः । प्राणान् परित्याजयितुं कः खलु क्षमः समर्थः स्यात्। न कोऽपि स्वप्राणान् स्वतएव त्याजयितुमिच्छति, दिने च लोकमध्ये विद्याधराणां शक्त्य-पचयान्मृत्युशङ्केति भावः ॥९८।

अथ वत्सराजोदन्तमाह—

अथ प्रभाकृत्प्रसरत्प्रभाभिर्मत्वा प्रभातं प्रभया परीतः ।
विहङ्गिकां प्रागिव संनिधाय मात्रोर्मुदा सार्धमवाप सद्म ॥९९॥

अथेति—अथ विद्याधर्योः गतयोः सत्योः प्रभाकृतः सूर्यस्य प्रसरन्तीभिः प्रभाभिः प्रभातं मत्वा प्रभया तेजसा परीतः समन्वितः, तेजस्वीत्यर्थः स वत्सराजः प्रागिव पूर्ववदेव विहङ्गिकां वीवधं सन्निधाय स्कन्धे स्थापयित्वा मात्रोः मातृमातृष्वस्रोः नामैकदेशेन मातृष्वस्रर्थकेन मातृ-

शब्देनैकशेव इति बोध्यम् । मुदा हर्षेण सार्धं सहैव, मन्दिरम् वाप तस्य गृहप्राप्त्या मातरौ मुमुदतुरित्यर्थः ॥९९॥

ततः स विक्रीय मनीषितार्थैस्तच्चन्दनं मन्दिरसौष्ठवं च ।
प्रसूतियोगेन विधाय योग्यां राज्ञः कुमारैर्निचितां बभाज ॥१००॥

ततइति—ततः गृहप्राप्त्यनन्तरम्, तदानीतं चन्दनं चन्दनकाष्ठम् मनीषितार्थैः स्वेष्ट-मूल्यैः विक्रीय प्रसूतेः मातुः योगेन साहाय्येन मन्दिरस्य गृहस्य सौष्ठवं सुस्थतां भक्ष्यपेयादि-सम्पादनेन सुव्यवस्थिततां विधाय स वत्सराजः राज्ञः कुमारैः निचितां व्याप्तां सेव्यमानां योग्यां खुरलीम् अभ्यासभूमिति, शस्त्राभ्यासं वा बभाज शिश्राय ।।१००॥

सहोदरादभ्यधिकं कुमारैः संमान्यमानः पृथुमाननाऽर्हः ।
समं स तैरेव सदैव भुङ्क्ते कुत्रार्हणा यन्न गुणाधिकानाम् ?॥१०१॥

सहोदरेति—कुमारैः राजपुत्रैः सहोदरात्, सोदरभ्रातुरपेक्षयाऽप्यभ्यधिकं सम्मन्य-मानः सत्क्रियमाणः पृथोः महत्याः सातिशयायाः माननायाः आदरादेरर्हः पात्रं स वत्सराजः सदैव तैः कुमारैव समं सह भुङ्क्ते, रमेति शेषः । ननु कुतः तस्यैतादृशी माननेतिचेद् गुणाः सर्वत्र पूज्यन्ते इत्याह–यद्यतः गुणाधिकानाम् प्रशस्तगुणानाम् कुत्र अर्हणा मानना न ? अपितु सर्वत्रैवेत्यर्थः । गुणाः पूजास्थानं गुणिषु इति वचनादिति भावः ॥१०१॥

अथो कलाचार्ययुतान् महीन्द्रः पुत्रान् कलाकौशलशालमानान् ।
परीक्षितुं शस्त्रविशेषजाताभ्यासं समाजूहवदाप्तभृत्यैः ॥१०२॥

अथो इति—अथो एकदा महीन्द्रः नृपः शास्त्रे विषये विशेषेण जातमभ्यासं श्रमम् परी-क्षितुं पर्यालोचितुम् आप्तैः भृत्यैः कृत्वा कलासु कौशलेन नैपुण्येन शालमानान् शोभमानान् युतान् पुत्रान् कलाचार्येण शिक्षकेण युतान् शिक्षकसहितानित्यर्थः । समाजूहवत् आजुहाव॥१०२॥

अमी प्रणम्ना नृपतेः पुरस्तात् स्वाभ्यासकौशल्यमदीदृशंस्तत् ।
तदन्तिकं वीक्ष्य च वत्सराजं पप्रच्छ तान् क्ष्मामघवाऽघवारः ॥१०३॥

अमी इति—ततः प्रणम्नाः कृतप्रणामाः .विजयशीला वा अमी राजपुत्राः नृपतेः पुरस्तात् स्वाभ्यासस्य कौशल्यमदीदृशन् दर्शयामासुः अघं प्रजादुःखं वारयतीति स तादृशः, प्रजापालकः क्ष्मायां मघवेव स महीन्द्रः तेषां कुमाराणामन्तिकं समीपे वत्सराजं वीक्ष्य तान् कुमारान् पप्रच्छ च वत्सराजविषयां जिज्ञासां प्रकटितवानित्यर्थः ॥१०३॥

उपप्रश्नमेवाह—

कुमारकः कोऽयमपास्तमारः कान्त्या सुतः कस्य किमाह्वयश्च ।
कुतश्च युष्माभिरनेन सङ्ग इत्येतदावेदयताऽङ्गजा मे ? ॥१०४॥

कुमेति—अङ्गनाः पुत्राः कान्त्या अपास्तः अधः कृतः मारः कामः येन स तादृशः कामादप्यधिकसुन्दरः अयं तव पार्श्वे वर्त्तमानः कुमारः कः कीदृशः ? कस्य सुतः किमाह्वयः किं नामा च कुतो हेतोश्चानेन सह युष्माभिश्च अस्त्येति शेषः, सङ्गः सङ्गमः इत्येतत्पृष्टं मे आवेदयत ॥१०४॥

अथ तदुत्तरमाह—

अवादि तैस्तात ! सदा खुरल्यामस्माकमस्यापि मिथोऽस्ति सङ्गः ॥
इदं न विद्मः पुनरेष वीरः किं नामधेयस्तनयोऽपि कस्य ॥१०५॥

अवादिति—तैः कुमारैः पृष्टैः सद्भिः,अवादि कथितम्, किमित्याह तात ! पितः ! खुरल्यामभ्यासभूमौ अस्य अस्माकमपि सदा मिथःसङ्गोऽस्ति पुनः किन्तु एष वीरः किं नामधेयः कस्य तनयोऽपि पुत्रश्चेतीदं वृत्तं न विद्मो जानीमः ॥१०५॥

प्रदर्शयामास ततश्च शस्त्रा-भ्यासं नृपेणाभिहितः स वत्सः ।
पुनः सचित्रं परिपृष्ट एष तेन स्ववृत्तं प्रकटीचकार ॥१०६॥

प्रेति—ततोऽनन्तरञ्च नृपेणाभिहित आदिष्टः स वत्सः वत्सराजः शस्त्राभ्यासं शस्त्रविद्या-कौशलं प्रदर्शयामास पुनः तेन राज्ञा परिपृष्टः एष सचित्रं विस्मयकारि स्ववृत्तं प्रकटीचकार ॥१०६॥

अथो महिष्या कनकश्रियाऽसौ राज्ञः समीपस्थितया न्यगादि ।
मदीयजामेश्च मदग्रजायाः सूनुः प्रसूनायुधसंनिभत्वम् ॥१०७॥

अथो इति—अथो अनन्तरम् राज्ञः समीपस्थितया कनकश्रिया तदाऽऽख्यया महिष्या पट्टराज्ञा असौ वत्सः न्यगादि कथितः, किमित्याह—प्रसूनायुधस्य कामस्य सन्निभः तुल्यः त्वम् वत्सराजः अहमग्रजा यस्यास्तस्याः मदग्रजायाः वा मदीयजामेः मद्भगिन्याः सूनुः असीतिशेषः ॥१०७॥

इतीरयित्वा परिरभ्य सा तं देवी निजाङ्के न्यधिताऽधिसातम् ।
स्वजामियुग्मं स्वयमानिनाय श्रीधारिणी श्रीविमलाह्वयं तत् ॥१०८॥

इतीति—इत्युक्तप्रकारेणेरयित्वा कथयित्वा सा कनकश्रीः देवी राज्ञी अधिसातम् कल्याण-गुणं तं वत्सराजम् परिरभ्याऽऽलिङ्ग्य निजे अङ्के क्रोडे न्यधित स्थापितवती, तत्ततः श्रीधारिणी श्रीविमलाह्वयं स्वस्य जामियुग्मं भगिनीद्वयं स्वयमेव आनिनाय स्वगृहमानीतवती ॥१०८॥

निदेशमासाद्य नरेश्वरस्य सौधे निजेऽस्थापयदेव ते सा ।
अजीहरंस्ता मिलितास्तमोऽस्य तिस्रो यथा विष्णुपदीपदव्यः ॥१०९॥

निदेशेति—सा कनकश्रीः नरेश्वरस्य राज्ञो निदेशमाज्ञामासाद्य प्राप्य ते द्वे भगिन्यौ निजे सौधे प्रासादे एव, नत्वन्यत्र, अन्यथा अवज्ञानुमानसम्भवादिति भावः । तूमस्थापय

तिस्रः विष्णुपदीनां गङ्गानां पदव्यः मार्गाः धारा इति यावत्, "गङ्गा विष्णुपदी जह्नुतनया सुर निम्नगा" इति । पन्थानः पदवी सृतिरि" ति चामरः यथा यादृश्यः, तथा तादृश्यः ताः तिस्रः भगिन्यः धारिण्याद्याः मिलिताः एकत्र संगताः सत्यः अस्य वत्सराजस्य तमोदुःखमंजीहरन् हृतवत्यः ॥१०९॥

मनोवचः कायसमुत्थचेष्टाः साधोर्यथाऽभिन्नतया प्रसिद्धः ।
मिथो महाप्रेमरसानुबद्धास्तिस्रोऽनयंस्ताः समयं सुखेन ॥११०॥

मनइति—यथा येन प्रकारेण साधोः मनोवचः कायेभ्य समुत्थाः जाताश्चेष्टा. क्रियाः अभिन्नतया समानविषयकत्वेन ऐक्यतया प्रसिद्धाः, साधूनां हि यन्मनसि स्फुरति तदेव वचसा, कायेनाऽपि च तदनुरूपैव क्रिया भवतीत्यर्थः "मनस्येकं वचस्येकं कर्मण्येकं महात्मनामि" त्युक्तेरिति भावः । तथा तेनैव प्रकारेण मिथोऽन्योन्यम् महता प्रेम्णा एव रसेन अनुविद्धा सम्बद्धाः ताः ऐक्यं गता इत्यर्थः धारिण्यादयः तिस्रोऽपि भगिन्यः सुखेन समयमनयन् गमयामासुः न तु परस्परं विरुद्धवृत्तितया दुःखेनाऽपीति भावः ॥११०॥

स धारिणेयो धरणीशमेतं ग्रामादिकं तोषभराद्ददानम् ।
अनाथदेवं स्वमुखेन नाथ प्रेष्यस्त्वया सद्मनि सर्वदाऽहम् ॥१११॥

सेति—स धारिण्या अपत्यं पुमान् धारिणेय वत्सराजः तोषभरात् तोषातिशयहेतोः ग्रामादिकं पारितोषिकरूपं ददानमेतं प्रस्तुतं धरणीशं राजानं स्वमुखेन स्वयमेव स्वमनाथत् याचितवान् एवमिति किमित्याह–नाथ ! त्वया सद्मनि स्वगृहे सर्वदा अहं प्रेष्यः दासत्वेन प्रेषणीयः नियोज्यः इति ॥१११॥

प्रमाणमित्यादृतवाचि राज्ञि श्रीवत्सराजोऽपि न संनिधानम् ।
जहौ नरेन्द्रस्य यथैव चेतः क्षेत्रज्ञनाम्नः पुरुषस्य नित्यम् ॥११२॥

प्रमाणेति—प्रमाणमेवमस्त्वित्येवं राज्ञि आदृतवाचि स्वीकृतवति सति श्रीवत्सराजः अपि नित्यम् सर्वदैव नरेन्द्रस्य, क्षेत्रज्ञनाम्नः क्षेत्रज्ञाख्यस्य पुरुषस्य आत्मनः "क्षेत्रज्ञ आत्मा पुरुष" इत्यमरः ॥ चेतः यथैव चित्तमिव सन्निधानं सामीप्यं न जहौ तत्याज, सर्वदा तत्समीपमेव तस्थावित्यर्थः ॥११२॥

विसृष्ट एव प्रभुणा प्रयाति स्वेनाननेनैव निकेतनं स ।
सदा प्रतिज्ञाप्रतिपालकानामाद्यं च तं रञ्जयति स्म धीरः ॥११३॥

विसृष्ट इति—प्रभुणा राज्ञा स्वेन स्वकीयेन–आननेन मुखेनैव, नतु परतोऽपि कदाचित् एतेन भक्त्यतिशयः सूचितः विसृष्टः स्वगृहं याहीत्येवमादिष्टः स वत्सराजः निकेतनं गृहं प्रयाति

गच्छति स्म । तथा धीरः सः प्रतिज्ञाप्रतिपालकानामाद्यं प्रधानं तं राजानं सदा रञ्जयति प्रसादयति स्म, स्वक्रियादिभिरिति शेषः ॥११३॥

तमप्रहित्यैव स संविवेश वासालये भूपतिरेकदाऽयम् ।
सचन्द्रहासः स च चन्द्रहासस्तद्द्वारि तस्थौ स्थिरचित्तवृत्तिः ॥११४॥

तमिति—एकदा सोऽयं प्रस्तुतः भूपतिः तं वत्सराजम् अप्रहित्य गृहमप्रेष्यैव वासालये—स्वावासे संविवेश सुप्तवान् । स्थिरा सत्यपि हेतावक्षोभ्या चित्तवृत्तिर्यस्य स तादृशः दृढाशयः चन्द्र इव स्वच्छत्वाद् हासः स्मितं यस्य स तादृशः स वत्सराजश्च सचन्द्रहासः खड्गसहितः सन्—"खड्गे तु निस्त्रिंशं चन्द्रहासेत्यमरः" सन् तस्य वासालयस्य द्वारि तस्थौ, एतेन तस्य कर्त्तव्यनिष्ठा सूचिता ॥११४॥

पराक्रमागारमथार्धरात्रे राजा जजागार कथञ्चनाऽपि ।
तदैव कस्याश्चन दुःखितायाः शुश्राव नार्याः परिदेवितं सः ॥११५॥

परेति—अथ अर्धरात्रे निशीथे "अर्धरात्र निशीथौ द्वावि" त्यमरः । पराक्रमस्य सुरताया अगारमास्पदम् महापराक्रमः राजा कथञ्चन कुतोऽपि हेतोः जजागार भग्ननिद्रोऽभूत्, तथा तदैव निद्राभङ्गसमये एव राजा कस्याश्चन दुःखिताया विलापानुमितदुःखायाः नार्याः परिदेवितं विलापं शुश्राव ॥११५॥

विधेर्नियोगात् तव हाऽस्मि दूरे प्राणप्रिय ! प्रीतिरियं मुधा मे ।
विदीर्यते यद्धृदयं न पाकिवालुङ्किवल्लीफलवद् ममेदम् ॥११६॥

विलापमेवाह—विधेरिति—प्राणप्रिय ! हा इति शोके ! विधेः भाग्यस्य नियोगाद् वशतः तव दूरे त्वत्तः दूरे इत्यर्थः, अस्मि, मे मम इयं मनसि मन्यमाना प्रीतिः मुधा अलीका, तत्र हेतुमाह—यद्यतः पाकि पक्वं यद् वालुङ्कि नाम्न्याः वल्ल्याः फलं तद्वत् ममेदं हृदयं न विदीर्यते भिद्यते, प्रीतिश्चेदलीका न स्यात्तर्हि विदीर्यतैवेति भावः ॥ वियोगदुःखस्यान्त्यतमसह्यत्वादिति यावत् ॥११६॥

विवर्ण्यतां सैव न कौमुदी किं तस्याः प्रकाशः कथमेव माऽस्तु ।
अवाप्य जैवातृकमेव कान्तं या तं विना न क्षणमात्रमस्थात् ॥११७॥

विवर्ण्यतामिति—सा प्रसिद्धा कौमुदी चन्द्रिका एव किं कुतो हेतोर्न विवर्ण्यताम् स्तूयताम् ? तथा तस्याः कौमुद्याः ‹प्रकाशः उद्योत› स्यातिश्च कथमेव केन प्रकारेण माऽस्तु न अस्तु ? सा कौमुदी स्तूयताम्, तस्याः कौमुद्या एव च प्रकाशोऽवश्यमस्तु इत्यर्थः । तत्र हेतु-

माह–या कौमुदी कान्तं प्रियम् चन्द्रस्य कुमुदबान्धवत्वादिति भावः, जैवातृकं सोमम्, "अब्जो जैवातृकः सोमो" इत्यमरः अवाप्य एव अस्थात् तिष्ठति, विकाशते, तं चन्द्रं विना क्षणमात्रमपि न नैव, यत्रेदृशं प्रेम तदेव सत्यं, न तु मादृशीनां कान्तविरहेऽपि तिष्ठन्तीनामित्यर्थः ॥११७॥

**नितम्बिनीषु प्रथमं विवर्ण्या सौदामनी तप्तसुवर्णवर्णा ।**
**पयोधरे गर्जति वल्लभे या दृष्टा जनैर्नाऽपरथा कथञ्चित् ॥११८॥**

नितेति—नितम्बिनीषु स्त्रीषु विषये प्रथममादौ–तप्तसुवर्णस्य शुद्धकाञ्चनस्य वर्ण इव वर्णः यस्याः सा तादृशी भास्वरपीतवर्णा सौदामनी विद्युद्रूपा स्त्री एव विवर्ण्या स्तोतव्या, तत्र हेतुमाह–या सौदामनी पयोधरे जलधरे वल्लभे प्रिये गर्जति गर्जनां कुर्वति सति, स्थिते सतीति यावत् जनैः दृष्टा दृश्यते, अपरथा पयोधरे विरते कथञ्चित् प्रयत्नतोऽपि न, दृष्टेति सम्बध्यते, न तु मादृशी, या प्रिये विरतेऽपि स्थितैवेति शोकात्स्वावमाननमिति भावः ॥११८॥

**इतीदमीदृग् विनिशम्य सम्यग् भूमीपतिः प्राहरिकानवादीत् ।**
**प्रमीलया तेऽपि निमीलिताक्षाः सर्वेऽप्यभूवन् सुभटास्तदैव ॥११९॥**

इतीति—इति एवं प्रकारेणेदं प्रस्तुतमीदृगुक्तं सम्यक् स्फुटं विनिशम्य श्रुत्वा भूमीपतिः प्राहरिकान् आरक्षान् अवादीत् आह्वयत आजुहाव, ते सुभटाः प्राहरिका अपि सर्वेऽपि तदा एव प्रमीलया तन्द्रया लक्षणया निद्रयेत्यर्थः । निमीलिताक्षाः स्वापेन मुद्रितनेत्राः अभूवन् ॥११९॥

**निदेशदानेन ममाधुनाऽपि स्वामीप्रसादं विदधातु विद्वान् ।**
**अमी पुनः प्राहरिकाश्च सन्तु निद्रासमाघ्रातविलोचनाब्जाः ॥१२०॥**

निदेशेति—स्वामी प्रभुः विद्वान् ज्ञाता च–भवान् अधुना ईदृशदुःसमयेऽपि मम निदेशदानेन आज्ञाक्रियया प्रसादं कृपां विदधातु, भवदाज्ञाप्राप्तिः भवत्प्रसादप्राप्तिरेव नह्य–नभिमते कोऽप्याजानातीति भावः । ननु तर्हि नियुक्तैरेतैः किमिति चेत्तत्राह–पुनरिति वाक्यालङ्कारे अमी प्राहरिकाश्च निद्रया समाघ्रातानि वशीकृतानि विलोचनानि नेत्राणि अब्जानि कमलानीव येषां ते तादृशाः एव सन्तु तिष्ठन्तु, निद्राभङ्गेन नैते बाध्यन्तामित्यर्थः ॥१२०॥

**इतीष्टविज्ञापनयाऽनयाऽपि श्रीवत्सराजस्य जगौ नरेन्द्रः ।**
**कथं गतस्त्वं भवनं नवाऽद्य स प्राह यद् नाऽनुमतोऽस्मि पादैः ॥१२१॥**

इतीति—इतीत्थमनया इष्टस्याभिमतस्य विज्ञापनया निवेदनेन कृत्वा नरेन्द्रः श्रीवत्सराजस्य, श्रीवत्सराजम्, शेषे षष्ठी, जगौ किमित्याह–अद्य त्वं भवनं गृहं कथं कुतो हेतोर्न गतः, स वत्सराजः प्राहोवाच, किमित्याह–यद्यतः पादैः श्रीपादैः तत्र भवद्भिरित्यर्थः विनाऽपि

प्रत्येयं पूर्वोत्तरपदयोर्लोप" इति नियमेनात्र श्रीशब्दस्य लोपो बोध्यः । अनुमतः अनुज्ञातः नास्मि ॥१२१॥

विलोकतां तर्हि जवेन गत्वा का नव्यशोका परिदिव्यतीयम् ॥
इति क्षितीशस्य निदेशमाप्य श्रीधारिणेयः प्रचचाल नम्रः ॥१२२॥

वीति—तर्हि यदि गृहं न गतस्ततः जवेन त्वरया वेगेन च गत्वा विलोक्यताम्, किमित्याह—इयं स्वरविशेषानुमेया स्त्री नव्योऽपूर्वः शोको यस्याः सा, तत्काल प्राप्तशोका वा का स्त्री परिदिव्यति विलपति इतीत्थं क्षितीशस्य निदेशमाज्ञामाप्य नम्रः विनयी श्रीधारिणेयो वत्सराजः प्रचाल प्रस्थितवान् ॥१२२॥

करे कृपाणं कलयन् स विद्युदुक्षिप्तनाम्ना करणेन शालम् ।
जवादतिक्रम्य पुरो जगाम शब्दानुसारेण विसारिसारः ॥१२३॥

करे इति—स वत्सराजः विद्युदुक्षिप्तनाम्ना विद्युदिवोत्क्षेपणरूपेण करणेन-क्रियया शालम् शोभमानम् उत्क्षिप्तं-'विद्युता—विद्युत्प्रकाशेन उत्क्षिप्तं लक्षणया ज्ञायमानं नाम एतन्नाम कमिदमित्येवं अङ्गुलिनिर्देशलक्षणेन करणेन-" विद्युदिव भासमानम् इत्यर्थः कृपाणं करे हस्ते कलयन् धारयन् जवात् अतिक्रम्य गत्वा यद्वा, विद्युदुक्षिप्तनामकेन साधनविशेषेण शालं वृक्षं गृहादिकं च जवात् अतिक्रम्योल्लङ्घ्येत्यर्थः विसारीदृढः—विसारी वृद्धिंगतस्सारो बलं यस्य स तादृशो महाबलः—सारो यस्य स महाबलः स वत्सराजः करे कृपाणं कलयन् शब्दानुसारेण शब्दानुसन्धानेन पुरः नगरादग्रतो वा जगाम ॥१२३॥

चिताज्वलज्ज्वालकृशानुजालवित्रासितोदग्रमहान्धकारम् ।
प्रलम्बवेतालभयानकं स प्राप श्मशानं भवनं यमस्य ॥१२४॥

चितेति—स वत्सराजः यमस्यान्तकस्य भूतादेश्च भवनमास्पदम् प्रलम्बैः दीर्घैर्महद्भिर्बहुभिश्च वेतालैः उपलक्षत्वादभूताद्यैः भयानकं भयजनकम् चितासु शवदाहपात्रेषु ज्वलज्ज्वालेन ज्वलज्ज्वाला यस्य तेन जाज्ज्वल्यमानेन कृशानुनाऽग्निना सन्त्रासितः दूरीकृतः उदग्रः अतिघनः महान् अन्धकारः यत्र तादृशं चिताग्नि प्रकाशितं श्मशानं शवदहनभूमिं प्राप ॥१२४॥

विलोक्य चोल्लम्बितमर्त्यपार्श्वे तत्र स्त्रियं काञ्चिदसौ रुदन्तीम् ।
अपृच्छदेतां महताऽऽग्रहेण चार्वङ्गि ! किं रोदिषि सम्प्रति त्वम् ? ॥१२५॥

विलोक्येति—तत्र श्मशाने उलम्बि तस्य उदूर्ध्वं लम्बितस्य मर्त्यस्य शवस्य पार्श्वे समीपे असौ वत्सराजः काञ्चित् स्त्रियं रुदन्तीम् रुदतीम्, रुदन्तीमिति प्रयोगः प्रामादिकः,

नागमस्यात्राप्राप्तेरिति ध्येयम् । विलोक्य, एतां स्त्रियं महताऽऽग्रहेण आदरेण अपृच्छत्, किमित्याह—चार्वङ्गि ! सुन्दरि ! सम्प्रति त्वं किं कुतो हेतो रोदिषि ! ॥१२५॥

उवाच सा मे प्रवरो वरोऽयमेतादृशीं दुर्विषहामवस्थाम् ।
अवापितो भूमिभुजा खलोक्त्या वाच्यं परं दुष्कृतमस्य यद्वा ॥१२६॥

उवाचेति—सा उवाच, किमित्याह—अमुद्रः मे प्रवर, श्रेष्ठः वरः पतिः खलस्य दुर्जनस्योक्त्या वाचा हेतुना भूमिभुजा ईदृशीं दृश्यमानां दुर्विषहामसह्यामवस्थामवापितोऽस्ति, यद्वा, न अन्यो दूषणीयः, अस्य मम पत्युः दुष्कृतं दुर्भाग्यमेव परमतिशयेन वाच्यं निन्दनीयम्, भाग्यवशात एव शुभाशुभं फलं भुज्यते ततः कस्यापि दोषदानं नोचितमिति भावः ॥१२६॥

तदेनमुद्बद्धमसिद्धपुण्यं निर्माय भुक्त्यै घृतपूरपूरम् ।
समाहृतं भोजयितुं न शक्ताऽऽक्रन्दामि तेनैव विलीनभाग्या ॥१२७॥

तदिति—ततः असिद्धपुण्यं अकृतपुण्यमुद्बद्धमेनं स्वं पतिं, भुक्त्यै भोजनाय घृतपूरपूरं भोज्यविशेषं निर्माय समाहृतमानीतं भोजयितुं न शक्ता समर्था जाता, तेनैव हेतुना विलीनभाग्या मन्दभागिनी आक्रन्दामि रोदिमि ॥१२७॥

विबुध्य तस्या रुदिते निमित्तं प्रोचे स यद्येवमिदं यथार्थम् ।
स्वय समारुह्य मदीयमंसं संपादय स्वाभिमतं तदाऽऽशु ॥१२८॥

विबुध्येति—तस्याः स्त्रियाः रुदिते रोदने निमित्तं हेतुं—"हेतुर्नाकारणं बीजं निमित्तमित्यमरः। विबुध्य ज्ञात्वा स वत्सराजः प्रोचे, किमित्याह—तदा आशु शीघ्रमेव मदीयम् अंसं स्कन्धं समारुह्य स्वयम् स्वाभिमतं—निजेष्टं सम्पादय साधय ॥१२८॥

इतीरणानन्तरमेव तेनाऽऽध्यारोपिता स्वांसतले मृताङ्गात् ।
निशातया कर्तिकया चकर्त सा मांसखण्डानि विमत्य खण्डा ॥१२९॥

इतीति—इत्युक्तप्रकारेण ईरणानन्तरमेव कथनानन्तरमेव तेन वत्सराजेन स्वांसतले स्वस्कन्धोपरि 'अध्यारोपिता' समारोहिता, विमतिषु दुर्बुद्धिषु अखण्डा सम्पूर्णा पूर्णदुर्बुद्धिः सा स्त्री मृतस्य शवस्य अङ्गाच्छरीरात् निशातया तीक्ष्णया कर्तिकया च्छुरिकया मांसखण्डानि चकर्त चिच्छेद ॥१२९॥

प्रकुर्वती सा च तथा कथञ्चित् तत्स्कन्धदेशोपरि मांसखण्डम् ।
तदैककं पातयति स्म दुष्टा कस्तादृशीनां यदि वा विवेकः ? ॥१३०॥

प्रकुर्वतीति—दुष्टा सा स्त्री तथोक्तप्रकारेण प्रकुर्वती च तदा एककमेकं मांसखण्डं तस्य वत्सराजस्य स्कन्ध एव देशः तस्योपरि पातयतिस्म, ननु अविवेकपराकाष्ठैतदिति

चेत्तत्राह—यदिवा यतः तादृशीनां मृतपतिशरीरमांसकर्तनाश्चर्यकार्यकारिकाणां कः विवेकः कार्या-कार्य भेदज्ञानम्, न कोऽपीत्यर्थः । कथमन्यथा स्वपतेरेव मांसं कृन्तेदिति भावः ॥१३०॥

तदीय दुर्वृत्तमिदं विलोक्य यावत् स खड्गं सहसा चकर्ष ।
खमुत्पपात प्रति तावदेषा तामञ्चले सोऽपि चलां दधार ॥१३१॥

तदीयेति—इदमुक्तप्रकारं तदीयं स्त्रिया दुर्वृत्तं विलोक्य यावत् स वत्सराजः सहसा झटिति खड्गं चकर्ष कौशाद्बहिर्निःसारितवान् तावत् स वत्सराजोऽपि चलां चपलां तामञ्चले वस्त्रप्रान्ते दधार जग्राह ॥१३१॥

घनादिपर्यन्तरथाभिधानमत्रान्तरे कोऽपि पुमानपृच्छत् ।
जिनाधिनाथं भगवंश्च केयं दुष्कर्म किं वा विदधाति चेदृक् ॥१३२॥

घनादीति—अत्रान्तरे अस्मिन्नवसरे कोऽपि पुमान् जनः जिनाधिनाथं घनः घनशब्दः आदिपर्यन्ते रथः रथशब्दः यस्मिन् तादृशमभिधानं नाम यस्य तं घनरथम् अपृच्छत्. किमि-त्याह—भगवन् ! का इयं प्रस्तुता स्त्री, किंवा दुष्कर्म दुरदृष्ट तस्या एवेत्यर्थबलाल्लभ्यते येन ईदृग्विदधाति च, यद्वा, किंवा ईदृग् दुष्कर्म शवमांसकर्त्तनादिरूपं विदधाति ? ॥१३२॥

ततः स तीर्थप्रभुराख्यदेषा क्षुद्राशया व्यन्तरवामनेत्रा ।
अनार्यलोकोचितमादधाति दुष्कर्म पुंसां छलनापराऽत्र ॥१३३॥

ततइति—ततः प्रश्नानन्तरम् स तीर्थप्रभुः घनरथः आख्यत् कथितवान्, किमित्याह एषा प्रस्तुता क्षुद्राशयमलिनमतिः पुंसां छलना परा व्यन्तरस्य वामनेत्रा स्त्री अनार्या म्लेच्छाः एव लोकाः तदुचितं दुष्कर्म आदधाति करोति ॥१३३॥

सुराङ्गना अप्यमृतैकभोज्याः किं मांसमास्वादयितुं यतन्ते ? ।
यदीदृशं कर्म समाचरन्तीत्युक्तः पुनस्तेन जगौ जिनेन्द्रः ॥१३४॥

सुरेति—सुराङ्गनाः व्यन्तरीप्रभृतयः अमृतमेवैकं केवलं भोज्यं यासां तादृशः सत्यो-ऽपि मांसमास्वादयितुं यतन्ते प्रवर्त्तन्ते किमु इति प्रश्ने । ननु कुत एष तव प्रश्न इति चेत्तत्राह—यद्यतः ईदृशं शवमांसकर्त्तनादिकं कर्म क्रियां समाचरन्ति इतीत्थं तेन पूर्वोक्तेन पुंसा उक्तः दृष्टः सन् पुनः जिनेन्द्रः श्रीघनरथः जगौ ॥१३४॥

अथ घनरथोक्तिमेवाह—

न जायते कावलिकः सुराणामाहार ईदृक् क कदाचनाऽपि ।
इदं परिक्रीडनमेव चास्या यज्जङ्गलोत्कर्तनमुख्यकर्म ॥१३५॥

नेति-सुराणां देवानाम् ईदृक् कावलिकः कवलमयः आहारः क्वापि कदाचन न जायते, ननु तर्हि सा कथं मांसं कृन्ततीति चेत्तत्राह-अस्याः प्रस्तुताया व्यन्तर्या इदं परिक्रीडनं क्रीडामात्रमेव, इदमिति किमित्याह—यद् यत्र जङ्गलस्य मांसस्य शवस्य उत्कर्त्तनं मांसच्छेदनं मुख्यं प्रधानं कर्म क्रिया, तु भक्षणार्थं तथा करोतीति भावः ॥१३५॥

धृताञ्चलं तत्परिधानवस्त्रं श्रीवत्सराजेन विहायसाऽगात् ।
विहाय सा मङ्क्षु ततः प्रभाते राज्ञे स तत्प्राभृतकं व्यधत्त ॥१३६॥

धृतेति—श्रीवत्सराजेन धृताञ्चलं गृहीतप्रान्तं तस्या व्यन्तर्याः परिधानवस्त्रं विहाय त्यक्त्वा सा व्यन्तरी मङ्क्षु शीघ्रमेव विहाय सा आकाशमार्गेण अगात् ययौ, ततोऽनन्तरं प्रभाते स वत्सराजः राज्ञे तद्वस्त्रं ते प्राभृतकमुपायनं व्यधत्त ॥१३६॥

महीभुजा पृष्टवरः स नत्वा, वृत्तं निशाया निजगाद वत्सः ।
स पट्टदेव्यै मुदितो नृदेव-स्तद् दिव्यवासः प्रददौ सवासम् ॥१३७॥

महीति—स वत्सः वत्सराजः नत्वा निशायाः रात्रिजातम् वृत्तं वृत्तान्तं निजगाद । स नृदेवः नृपः मुदितः प्रसन्नः सन् सवासम् गन्धद्रव्यवासितं तद् दिव्यवासः अलौकिकं वस्त्रं पट्टदेव्यै महिष्यै प्रददौ ॥१३७॥

तदैव देवी परिधाय देवीवासः प्रवासप्रदमाधिभङ्ग्या ।
न मानसे निर्वृतिमाततान तद्योगसत्कञ्चुकवस्त्वभावात् ॥१३८॥

तदैवेति—तदा दानानन्तरमेव देवी राज्ञी प्रकृष्टस्य वासस्यामोदस्य प्रदं देव्याः व्यन्तर्याः वासः वस्त्रं परिधाय तस्य वस्त्रस्य योगस्य सम्बन्धस्य सत् चारु तस्य तद्वस्त्रयोग्यस्येत्यर्थः, कञ्चुकाख्यस्य वस्तुनः अभावाद्धेतोः आधेः मनोव्यथायाः भङ्ग्या रचनया कृत्वा "वस्त्रयोग्यं कञ्चुकं नास्तीत्येवं मनसः अप्रीत्या मानसे चित्ते निर्वृत्तिं शान्तिं न आततान जगाम, तादृश-कञ्चुकाभावात् खिन्नचित्ता जातेत्यर्थः ॥१३८॥

स धारिणेयोऽप्यधृतां निरीक्ष्य देवीं च विद्याधरवल्लभायाः ।
उपानयत् काञ्चुकमेव दिव्यं तं भूभुजे यद् न सतामदेयम् ॥१३९॥

सेति—स धारिणेय. वत्सराजोऽपि देवीं राज्ञीम् अधृतां धैर्यरहितां निरीक्ष्य विद्याधर-वल्लभायाः कं निचोलमेव भूभुजे उपानयत् उपढौकितवान् ननु किमिति तादृशं दुर्लभं वस्तु ददाविति चेत्तत्राह—यद्यतः सतामुदाराशयानामदेयं न भवति-इति शेषः, "परोपकाराय सतां विभूतयः" इति भावः ॥१३९॥

नृदेवदत्तं परिधाय देवी तं कञ्चुकं चाधिकमेव दुःखम् ।
बभार तद्रूपमहोत्तरी या भावाद संतोषवतां न यच्छम् ॥१४०॥

नृदेवेति—नृदेवेन राज्ञा दत्तं तं वत्सराजेनोपदीकृतं कञ्चुकं परिधाय च देवी राज्ञी तस्य कञ्चुकस्य रूपस्य योग्यस्य महतः उत्तरी बृहतिकायाः अभावात् अधिकमेव दुःखं बभाराकरोत् नन्विष्टवस्तुलाभात्किमिति न प्रासीददिति चेत्तत्राह—यद्यतः असन्तोषवताम् अविरामेच्छानां शं सुखं न भवतीति शेषः, अपरापरवस्तुतृष्णायाः सुखस्य तिरोधानादिति भावः ॥१४०॥

समाध्यभावं महिषी दधाना नैवाऽपरेद्युर्बुभुजे कथञ्चित् ।
अमात्यधुर्यैरपि बोध्यमाना स्त्रीणां बलीयान् परमाग्रहो हि ॥१४१॥

समेति—समाधेः मनस्तोषस्य अभावं खेदं दधाना एषा प्रस्तुता महिषी राज्ञी अपरेद्युः अमात्येषु धुर्यैः प्रधानैरपि बोध्यमानाऽपि कथञ्चित् प्रयत्ने कृतेऽपि न बुभुजे, ननु किमिति सा न बुभुजे इति चेतत्राह—हि यतः स्त्रीणां परमः आग्राह्यअभान्तत्वादसमाधेयः आग्रहः अतएव बलवान् भवतीति शेषः ॥ यद्वा स्त्रीणामाग्रहः परं बलवान् भवतीत्येवमन्वयः ॥१४१॥

भृशं तदालोकनतो नरेन्द्रं चिन्तापरिक्लान्तहृदं विचिन्त्य ।
कृताञ्जलिर्विज्ञपयाम्बभूव युक्त्योपयुक्तं स च धारिणेयः ॥१४२॥

भृशमिति—तस्य राज्ञीदुराग्रहस्य आलोकनतः दर्शनेन, नरेन्द्रं नृपं भृशमत्यर्थं चिन्तया परिक्लान्तं खिन्नं हृद् यस्य तं तादृशं चिन्ताऽऽचान्तचेता अयमित्येवं विचिन्त्य स च धारिणेयः वत्सराजः कृताञ्जलिरञ्जलिं बद्ध्वेत्यर्थः । राज्ञीं प्रतीतिशेषः युक्त्या तर्केण उपयुक्तं सङ्गतम् विज्ञपयाम्बभूव व्यजिज्ञपत् ॥१४२॥

तस्य विज्ञापनामेवाह—

न युज्यते मातरयं विधातुं संकल्पमात्रेण कदाग्रहस्ते ।
प्रमाणपूर्वव्यवहारिस्तं यस्माद् बुधा दूषणमुद्गिरन्ति ॥१४३॥

नेति—मातः । संकल्पमात्रेण इच्छामात्रेण ते तवायं कुत्सितः असमाधेयत्वान्निन्दितः आग्रहः कदाग्रहः दृढः न युज्यते यस्माद् प्रमाणपूर्वं व्यवहरन्ति तादृशाः प्रामाणिका बुधाः धीमन्तः तं कदाग्रहं दूषणम् उद्गिरन्ति कथयन्ति ॥१४३॥

न शक्यते कारयितुं न कर्तुं यच्छक्तिशैलैरपि नाऽत्र खेदः ।
मनुष्यलोके सुकृतोद्भवेऽपि स्वर्वासिवासांसि न संभवन्ति ॥१४४॥

नेति—यद्वस्तु शक्तिशैलैः सामर्थ्येन कृत्वा पर्वततुल्यैरपि, यद्वा शक्तेः शैलैः पर्वततुल्यपुञ्जैरपि कर्तुं न, तथा कारयितुं न शक्यते, अत्र ईदृशे विषये खेदः अप्राप्तिकृतः मनोमालिन्यं न

युक्तमिति शेषः, अशक्यत्वमेव विवृणोति-मनुष्यलोके मर्त्यलोके सुकृतोद्भवे पुण्यजन्मन्यपि स्वर्वासिनः देवस्य वासांसि न सम्भवन्ति, पुण्यतो हि स्वक्षेत्रीयं वस्तु लभ्यते न त्वन्यदितिभावः ॥१४४॥

भवेदथैवं यदि मर्त्यलोकस्वर्लोकयोः केन कृतो विशेषः ।
परिश्रमं कः सुकृताय कुर्यात् को वा निवर्तेत तथा च पापात्? ॥१४५॥

भवेदिति—असम्भवे एव हेतुमाह—यदि एवम् मनुष्यलोके स्वर्लोकवस्तुसौलभ्यं भवेत्तर्हि मर्त्यलोकस्वर्लोकयोः केन वस्तुना विशेष्यो भेदः न्यूनाधिक्यं वा कृतः, स्यादितिशेषः, उभयलोकपदार्थानामुभयत्र लभ्यत्वे द्वयोः साम्यमेव, मर्त्यलोकस्थनगरद्वयवदिति भावः। ननु भवतु साम्यं तेन किमिति—यत्र विधिनिषेधयोरनवस्थापत्तेरित्याह—सुकृताय पुण्याय कः परिश्रमं तपोऽनुष्ठानादिक्लेशं कुर्यात्? न कोऽपीत्यर्थः। तथा अन्यश्च पापाद्वा को निवर्तेत? न कोऽपीत्यर्थः। सुकृतं स्वर्लोकाय, पापं च नरकाय, इहैव स्वर्लोकवस्तुप्राप्तौ सुकृते प्रवृत्तेः—दुष्कृते चाप्रवृत्तेः प्रयोजकमेव किमपि न स्यादिति विधिनिषेधयोरनवस्थेति भावः ॥१४५॥

घुणाक्षरन्यायवशाद्द्वयं तत् सम्प्राप्तमेवात्र विना प्रयत्नम् ।
भविष्यते तत्तव भाग्यभङ्ग्या तस्मादमुं मुञ्च मनोविषादम् ॥१४६॥

घुणेति—अत्र मर्त्यलोके घुणाक्षरन्यायवशात् घुणो हि यथा काष्ठं छिन्दन् विना प्रयत्नमेव कमपि ककाराद्यक्षरमपि उत्कीर्णयति तद्वत् विना प्रयत्नमेव तत् शाटी कञ्चुकद्वयं सम्प्राप्तम् तत् उत्तरीयं तत्तेन प्राप्तेन नवभाग्यस्य भङ्ग्या विशेषेण कृत्वा भविष्यते सम्पत्स्यते, तस्माद्भाग्यायत्तत्वादमुं दिव्योत्तरीयविषयकं मनोविषादं मुञ्च त्यज, भाग्यायत्ते विषादेनाऽलमित्यर्थः ॥१४६॥

एतदेव समर्थयति—

अपेक्षितं कैश्चन किञ्चनाऽपि बुद्ध्याऽपि शक्त्याऽपि न साधितं यत् ।
विधिः परापेक्षितभङ्गनिष्ठः स्वापेक्षितं केवलमादधाति ॥१४७॥

अपेक्षितमिति—यद्यतः कैश्चन किञ्चनापि अपेक्षितमिष्टं बुद्ध्याऽपि शक्त्याऽपि न साधितं सम्पादितम्, तर्हीष्टं कथं सिद्ध्यतीति चेद्भाग्यवशादेवेत्याह—परेण अपेक्षितो यो भङ्गः वस्तुविशेषः तन्निष्ठः तद्विषयको विधिः भाग्यं केवलं स्वापेक्षितं स्वेष्टमेव आदधाति करोति, भाग्याधीनं भवति स्वेष्टक्रियाफलं ननु भाग्यं परेष्टमनुरुणद्धीति भावः ॥१४७॥

कदाग्रहेऽनुपपत्त्यन्तरमाह—

नृपो न भुङ्क्ते म्रियतापरस्ते तद्भक्तिकृद् नो सचिवादिलोकः ।
प्रजाऽपि ते ग्रास्यति दुर्यशस्तच्चन्द्रे कलङ्को यदयं ग्रहस्ते ॥१४८॥

नृप इति—ते तव प्रियतापरः प्रेमाधीनः तदा भुक्तेः नृपोऽपि न भुङ्क्तेः तद्भक्तिकृत् सचिवादिलोकोऽपि नो भुङ्क्ते प्रजाऽपि ते तव दुर्यशः हठाग्रहजन्यदोषं गास्यति कीर्तयिष्यति, तत्तः योऽयं यदयं ते ग्रहः कदाग्रहः तच्चन्द्रे कलङ्क इव, इतरथा तव शुचिशीलत्वादिति भावः ॥१४८॥

इतीदृशैरस्य च वाक्यजातैर्यावद् ग्रहं नैव मुमोच राज्ञी ।
स देवराजानुज एव ताव-च्चक्रे प्रतिज्ञामविचार्य कार्यम् ॥१४९॥

इतीति—इत्युक्तप्रकारैः अस्य वत्सराजस्य वाक्यजातैः वाक्यैश्च राज्ञी यावद्ग्रहं हठं नैव मुमोच, तावद् देवराजानुजो वत्सराजः कार्यमविचार्य एव प्रतिज्ञतार्थः सेत्स्यति नवेत्यविमृश्यैव प्रतिज्ञां चक्र ॥१४९॥

तत्प्रतिज्ञामेवाह—

मनोरथं ते यदि नैव मातः षण्मासमध्ये परिपूरयामि ।
अहं तदा दारुणदारुभारै-र्जाज्वल्यमाने ज्वलने विशामि ॥१५०॥

मनोरथमिति–मातः ! यदि षण्णां मासानां मध्ये तव मनोरथं दिव्योत्तरीयेच्छां नैव पूरयामि तदा अहं दारुणानां विशालानां दारुणां काष्ठानां भारैः जाज्वल्य माने ज्वलनेऽग्नौ विशामि प्रविशामीति ॥१५०॥

इदं प्रतिश्रुत्य सदः समक्षं राजानमानम्य जगद्विनम्यम् ।
प्रसूं सजामिं च चचाल वत्सः प्राप्याऽऽशिषं दुर्लभकार्यसिद्ध्यै ॥१५१॥

इदमिति—सदसः सभायाः समक्षमग्रतः इदमुक्तप्रकारं प्रतिश्रुत्य प्रतिज्ञाय जगद्भिः सर्वैः विनम्यं प्रणम्यं राजानम् सजामिं सभगिनीं प्रसूं, मातरञ्च आनम्य प्रणम्य आशिषं प्राप्य वत्सः वत्सराजः दुर्लभस्य दुःसाध्यस्य कार्यस्य सिद्ध्यै चचाल प्रस्थितवान् ॥१५२॥

शुभैः प्रणुन्नः शकुनैरनेकैर्जातां ब्रुवाणैरिव कार्यसिद्धिम् ।
भ्रमन् पुरग्राममहाकरेषु वीरो महाऽरण्यमसौ विवेश ॥१५२॥

शुभैरिति—कार्यसिद्धिजातां सम्पन्नामिव ब्रुवाणैः सूचयद्भिः अनेकैः शकुनैः निमित्तैः प्रणुन्नः प्रेरितः वर्धितोत्साहः पुरेषु ग्रामेषु महत्सु आकरेषु च भ्रमन्नसौ वीरः दृढोत्साहो वत्सराजः महारण्यं विवेश ॥१५२॥

विशंस्तदन्तः स ददर्श चैकं क्षुद्रं पुरं क्षुद्रतया विमुक्तः ।
स चिन्तयामास समाधिहेतोः किं वेधसा निर्विजनेऽरचीदम् ? ॥१५३॥

विशन्निति—तस्य वनस्यान्तर्मध्ये विशन् क्षुद्रतया नीचसत्त्वतया विमुक्तो रहितः महासत्त्व इत्यर्थः । स वत्सराजः एकं क्षुद्रं लघु पुरं ददर्श च स चिन्तयामास, किमित्याह–वेधसा

ब्रह्मणा-निर्विजने नितरां जनसम्पर्कशून्ये वने इदं पुरं समाधिहेतोः समाध्यर्थम्, ध्यानयोगार्थम्, तस्यैकान्ते विहितत्वादिति भावः अरचि निर्मितं किमिति वितर्के। अत्र श्लोके स इति तच्छब्दस्य द्विः प्रयोगोऽनर्थकः एकेनैवेष्टान्वयसिद्धेरिति बोध्यम् ॥१५३॥

तदुच्चवप्रान्तरयं प्रविश्य क्षिप्रं दधद् विस्मयमस्मयं सः ।
लघिष्ठधामद्वितयोपलक्ष्यं प्रासादमभ्रङ्कषमाससाद ॥१५४॥

तदुच्चेति—अयं स अस्मयो निरभिमानो वत्सराजः विस्मयमाश्चर्यं दधत् निर्जने पुरस्य सत्त्वं निष्कारणमित्याश्चर्यमिति भावः। क्षिप्रं शीघ्रमेव तस्याः पुर्याः उच्चस्य वप्रस्य प्राकारस्यान्तर्मध्ये प्रविश्य लघिष्ठेन लघुतरेण धाम्नोर्द्वितयेन समीपस्थेन प्रकोष्ठद्वयेनोपलक्ष्यम् अभ्रङ्कषं गगनचुम्बिनं प्रासादमाससाद ॥१५४॥

तदन्तरध्याससभानिविष्टं प्रैक्षिष्ट चैकं पुरुषं स :शिष्टम् ।
अहो ! पुमान् कोऽयमिति प्रकृष्टः पृष्टः पुमांस्तेन च कोऽप्युवाच ?॥१५५॥

तदिति—स वत्सराजः तस्य प्रासादस्यान्तः अध्यायस्य प्रविश्य सभायां निविष्टमुपविष्टमेकं शिष्टं रूपानुमेयसच्चरित्रं पुरुषं प्रैक्षिष्ट दृष्टवान्, अहो इति सम्बोधने, अयं शिष्टः पुमान् कः ! इति इत्थम् प्रकृष्टः उत्तमः सन्निहितो वा कोऽपि तेन वत्सराजेन पृष्टः पुमानुवाच ॥१५५॥

तदुक्तिमेवाह—

इतोऽस्त्यदूरे नगरं गरीयः सत्याभिधं भूतिलकाभिधानम् ।
विभूषणं यद् दधती धरित्री वैधव्यतां नो भजते कदाऽपि ॥१५६॥

त इतिः—इतः स्थानाददूरे समीपे एव गरीयः श्रेष्ठतरम्, सत्या अन्वर्था अभिधानाभयस्य तादृशं नामानुगुणगुणयुक्तम् भुवस्तिलकमिवेत्यतः भूतिलकाभिधानम् नगरमस्ति, यन्नगररूपं विभूषणं दधती धरित्री पृथ्वी कदाऽपि वैधव्यतां मृतपतिकभावम्, तच्चिह्न तिलकराहित्यादि नो भजते याति, सर्वदैव तेन नगरेण तिलकवत्या पृथ्व्या सधवात्वमेव ह्याप्यते इत्यर्थः विधवा हि सौभाग्यचिन्हं तिलकादि न दधातीति व्यवहार इति भावः ॥१५६॥

अशेषभूवल्लभमौलिसिंहश्रीवीरसिंहस्तदधीश्वरोऽभूत् ।
यदोजसा तर्जित एव सिंहः शङ्के त्रपावान् वनमध्युवास ॥१५७॥

अशेषेति—अशेषाणां सकलानां भूवल्लभानां राज्ञाम् मौलिषु मुकुटेषु सिंह इव सिंहाकृतिरिव प्रणामादौ प्रतिबिम्बद्वारा स्थितः श्रीवीरसिंहः तस्य नगरस्य अधीश्वरः राजा अभूत्। शङ्के उत्प्रेक्षे, यस्य श्रीवीरसिंहस्य ओजसा बलेन तर्जितः पराजित एव, ननु हेलन्तरेण

त्रपावान् लज्जितः सिंहः वनमध्युवास, वने तिष्ठति" सतां माने म्लाने मरणमथवा दूरगमन-मित्युक्तेरिति भावः ॥१५७॥

विशुद्धबुद्धिर्वसुधेशमान्यो दत्ताभिधस्तत्र महेभ्यकोऽस्ति ।
तदङ्गजा श्रीपदपूर्वदत्ता, श्रीदेवकी कुक्षिभवा समस्ति ॥१५८॥

विशुद्धेति—तत्र भूतिलके नगरे विशुद्धबुद्धिः निर्मलबुद्धिः वसुधेशस्य नृपस्य मान्यः इष्टः दत्ताभिधः महेभ्योऽस्ति, श्रीदेवक्याः कुक्षिभवा उदरजाता श्रीपदपूर्वदत्ता श्रीदत्तानाम्नी तस्य दत्तस्याङ्गजा पुत्री समस्ति ॥१५८॥

मुदा पितृभ्यामुपलाल्यमाना साऽध्यापकाध्यापितसर्वविद्या ।
क्रमादसौ यौवनमाप बाला दृप्यन्मनो भूनृपरङ्गशाला ॥१५९॥

मुदेति—मुदा सहर्षम् पितृभ्यां मातरपितराभ्याम् उपलाल्यमाना, तथा अध्यापकेन शिक्षकेण अध्यापिता सर्वा विद्या यस्याः सा तादृशी सकलकलाकुशला सा बाला श्रीदत्ता क्रमात् दृप्यतः मनोभूरूपस्य कामदेवरूपस्य नृपस्य उद्धतस्य रङ्गशालेव विलासभूमिः सती यौवनमाप प्राप ॥१५९॥

तदैव तद्दुष्कृत साहचर्याद् दोषोऽयमुन्मेषमवाप तस्याः ।
स पञ्चतां पञ्चजनः प्रयाति यो यामिकस्तां परिपाति तस्याम् ॥१६०॥

तदैवेति — तदैव यौवनप्राप्तिसमकालमेव तस्याः श्रीदत्तायाः दुष्कृतस्य दुष्कर्मणः साहचर्यात् बलात् व्याप्तेः तस्याः श्रीदत्तायाः अयं दोषः उन्मेषम् उद्बोधमवाप दोषः समुदपद्यतेत्यर्थः । अयमिति किमित्याह यः यामिकः प्राहरिकः तस्यां रजन्याम् "रजनी यामिनी तमी" त्यमरः । तां श्रीदत्तां परिपाति रक्षति स पञ्चजनः पुरुषः पञ्चतां मरणं प्रयाति प्राप्नोति—'स्युः पुमांसः पञ्चजनाः पुरुषा इत्यमरः" ॥१६०॥

न रक्ष्यतेऽसौ यदि वा कथञ्चित् तत् पञ्चतां यान्ति जनाः प्रभूताः ।
किमायुषः सङ्क्षय एव मृत्युः किंवाऽन्यथा वेति जिनो विवेद ? ॥१६१॥

नेति—ननु तर्हि सा यामिकेन किमिति रक्ष्यते इति चेत्तत्राह—नेति—यदि वा कथञ्चिन्मृत्युभिया असौ श्रीदत्ता न रक्ष्यते, तत्तर्हि प्रभूताः बहवो जनाः पञ्चतां यान्ति, बहूनां मृत्युर्माभूदित्यर्थः सा रक्ष्यते इति भावः ॥ अत एव—किमिति वितर्के, आयुष्यः जीवितस्य संक्षये नाशे एव किंवा अन्यथा पूर्वकाल एव श्वासोच्छ्वासपरिपूर्त्तौ मृत्युः इति जिनो विवेद ज्ञातवान्॥१६१॥

अवेत्य वृत्तान्तमिदं जनोक्त्या राज्ञा स दत्तोऽभिहितः सुता ते ।
पुरक्षये हेतुरभूत् प्रयाहि त्यक्त्वा पुरं मे विषयान्तरं तत् ॥१६२॥

अवेत्येति—जनोक्त्या किं वदन्त्या इदमुक्तप्रकारं वृत्तान्तमवेत्य ज्ञात्वा राज्ञा स दत्तः अभिहितः कथितः तत्कथनमेवाह–ते तव सुता पुरस्य क्षये नाशे हेतुरभूत् तत्ततः मे मम पुरं त्यक्त्वा विषयान्तरं देशान्तरं प्रयाहि ॥१६२॥

इति क्षितीशस्य निदेशतोऽसौ तत्कालमागत्य वनेऽत्र तस्थौ ।
विधाय वप्राऽऽवृतमात्मसौधं पार्श्वे परीवारगृहद्वयं च ॥१६३॥

इतीति—इत्युक्तप्रकारात् क्षितीशस्य नृपस्य निदेशत आदेशात् असौ दत्तः तत्कालम् आगत्य अत्रास्मिन् वने वप्रेण प्राकारेण आवृतं परिवेष्टितम् आत्मनः स्वस्य सौधम् प्रासादम् पार्श्वे उभयतः परिवारस्य गृहद्वयं च विधाय निर्माय तस्थौ अध्युवास ॥१६३॥

तदीयनाम्ना सुतरां निवेशः ख्यातिं गतो दत्तपुराह्वयोऽयम् ।
न कोऽपि शेतेऽत्र परः क्षपाया मे तत्परीवारकमन्तरेण ॥१६४॥

तदीयेति—अयं निवेशः पुरदेशः सुतरामञ्जसैव तेन निर्मितत्वात् तदीयेन नाम्ना दत्तपुराह्वय इत्येवं ख्यातिं प्रसिद्धिं यतः एतस्य दत्तस्य परीवारकं परीवारमन्तरेण विहाय, अत्र नगरे क्षपायां रात्रौ परोऽन्यः कोऽपि न शेते मृत्युभियेति भावः ॥१६४॥

अथ स्वोक्तिमुपसंहरन् हितमुपदिशति -

विपद्यते चैकक एव मर्त्यः साधोः परीवारगतोऽस्य नित्यम् ।
अनामयं स्वस्य समीहसे चेत् तत्तूर्णमन्यत्र सखे ! प्रयाहि ॥१६५॥

अस्य साधोः श्रेष्ठिनः परीवारगतः परीवारस्थितः एककः एकः एकः मर्त्यः पुमान् नित्यमेव विपद्यते म्रियते, तत्ततः स्वस्य अनामयम् कुशलं समीहसे इच्छति चेत्तर्हि, सखे ! तूर्णं शीघ्रमेवान्यत्र प्रयाहि गच्छ अन्यथाऽत्र कुशलं नास्तीति भावः ॥१६५॥

ततः कुमारोऽपि विहस्य किञ्चिद् दत्तेभ्यपार्श्वं दितभीर्जगाम ।
न सज्जनाः क्वापि भयं भजन्ते कर्मानुरूपं फलमामनन्तः ॥१६६॥

ततइति—ततः तदुक्तिश्रवणानन्तरम् कुमारः वत्सराजः अपि किञ्चिद् दितभीः निर्भयः सन् दत्ताख्यस्य इभ्यस्य पार्श्वं जगाम । ननु किमिति तस्य न भयमिति चेत्तत्राह—कर्मणोऽनुरूपमनुसारि फलम् न तु कर्मविरुद्धमित्येवमामनन्तः मन्यमानाः सज्जनाः क्वापि भयं न भजन्ते प्राप्नुवन्ति, सत्यपि भयहेताविति भावः ॥१६६॥

अमुं समायान्तमवेक्ष्य सोऽपि पीठादुदस्थात् सह संभ्रमेण ।
असङ्गतानामपि दैवयोगाद् नैवौचिती भ्रश्यति सज्जनानाम् ॥१६७॥

अमुमिति—अमुं वत्सराजं समायान्तमवेक्ष्य स दत्तोऽपि सम्भ्रमेण सह सद्भावम् पीठादासनात्—"विष्टरः पीठमासनमि—त्यमरः उदस्थात् । ननु किमित्यपरिचिते तस्य तादृशः सम्भ्रम इत्याह—दैवयोगात् असङ्गतानामपि प्रागमिलितानामपि अपरिचितानामित्यर्थः सज्जनानाम् औचिती अभ्युत्थानादिरूपा- नैव भ्रश्यति हीयते ॥१६७॥

अगोपिताकारनिवेद्यशौर्यं वर्यासने तं विनिवेश्य पार्श्वे ।
महेभ्यदत्तोऽभ्यधित त्वमागाः कस्मात् पुराद् वत्स! कुमार सार ! ॥१६८॥

अगोपितेति - अगोपितेन भास्वरेणाऽऽकारेण निवेद्यमनुमेयं शौर्यं यस्य तं तादृशं आकारानुमितशूरभावं तं वत्सराजं वर्ये उत्तमे आसने पार्श्वे एव विनिवेश्योपवेशयित्वा महेभ्यः दत्तः अभ्यधित जगौ, किमित्याह—वत्स ! कुमारेषु—सार ! श्रेष्ठ ! त्वं कस्मात्पुरादागाः ॥१६८॥

अहं समृद्धोज्जयिनीनगर्या अभ्यागमं कार्यवशादिहापि ।
परिभ्रमन् ग्रामपुराकरेषु तातेति तं प्रत्यवदत् स धीमान् ॥१६९॥

अहमिति—स धीमान् वत्सराजः इतीत्थं तं दत्तं प्रति प्रत्यवदत्, इतीति किमित्याह—तात अहं समृद्धायाः उज्जयिनीनगर्याः कार्यवशात् ग्रामपुराकरेषु भ्रमन् इहाप्यभ्यागमम् ॥१६९॥

तनुश्रियाऽङ्गार इवाविकार,—प्रस्कारश्रृङ्गारधरोऽपि कृष्णः ।
पुमान् परिम्लानमुखस्तदैकस्तत्सन्निधौ मन्दपदः समागात् ॥१७०॥

तन्विति—तदा वत्सराजकथनानन्तरम् एकः कश्चित् अविकारस्य सुश्लिष्टस्य प्रस्फारस्य स्फुरायमानस्य श्रृङ्गारस्य वेषभूषायाः धरः अपि तनुश्रिया शरीरकान्त्या अङ्गारः शान्ताऽग्निरिव कृष्णः कृष्णवर्णः परिम्लानमुखः विवर्णवदनः पुमान् तस्य दत्तस्य सन्निधौ मन्दपदः शनैर्गतिः सन् समागात् ॥१७०॥

स तं समीक्ष्योन्मनसं समेतमेतद् महेभ्यं स्फुटमभ्यधत्त ।
किमेष श्रृङ्गार विभासमानोऽप्यालम्बते तात ! सुदुर्मनस्त्वम् ! ॥१७१॥

स इति—समेतं समागतं तं पुरुषं समीक्ष्य महेभ्यं श्रेष्ठिं स वत्सराजः स्फुटमभ्यधत्त, एतदिति किमित्याह—तात ! एष समागतः पुरुषः श्रृङ्गारेण विभासमानोऽपि किं कुतो हेतोः सुदुर्मनस्त्वमप्रीतिमालम्बते खिन्नो लक्ष्यते ? ॥१७१॥

विमुच्य निःश्वासततिं स दीर्घां वृत्तं सुतायास्तमवोचदिभ्यः ।
अमुष्य च प्राहरिकस्य चाद्य मत्पुत्रिका रक्षणवारकोऽस्ति ॥१७२॥

विमुच्येति—स दत्तेभ्यः दीर्घां निःश्वासततिम् शोकोच्छ्वासमित्यर्थः । विमुच्य तं वत्सराजं सुतायाः वृत्तमवोचत् । च पुनः अमुष्य सम(दृश्यमानस्यास्य)-क्षस्य प्राहरिकस्य अद्य मत्पुत्रिकाया रक्षणे वारकः पर्यायोऽस्ति चेत्यवोचत् ॥१७२॥

बिभर्ति तच्छ्यामलमेष वक्त्रं पञ्चत्वभीतेर्विजितान्यभीतेः ।
स्वभावकारुण्यरसाम्बुराशिः श्रुत्वेति तं व्याहरति स्म वत्सः ॥१७३॥

बिभर्त्तीति—तत्ततः पञ्चत्वभीतेः मृत्युभयात् विजिता अन्या अन्यादृशी भीतिर्येन स तथा मरणातिरिक्तभयरहितः विजितान्यभीतेरिति पाठे तु अयमुक्ताया: पञ्चत्वभीतेरित्यन्वयो बोध्यः एष पुरुषः श्यामलं म्लानं वक्त्रं मुखं बिभर्त्ति, मरणभीतिर्हि दुःसहेति भावः । इत्युक्तप्रकारं श्रुत्वा स्वभावादेव कारुण्यरसस्य अम्बुराशिः सागर इव वत्सः तं दत्तं व्याहरति कथयति स्म ॥१७३॥

व्रजामि तां रक्षितुमद्य तात ! तिष्ठत्वयं कातरवर्गतातः ।
विहस्य दत्तोऽप्यवदत् स एष चौरस्य घातः स्वसरेण किं न ! ॥१७४॥

व्रजामीति—तात ! अद्य तां त्वत्सुतां रक्षितुं व्रजामि, अहमेवेत्यर्थल्लभ्यते । कातराणां भीरूणां वर्गस्य समाजस्य तातः मुख्य तमोऽयं पुरुषः तिष्ठतु, न गच्छत्विति यावत् । दत्तोऽपि विहस्य अवदत्, किमित्याह-स एष त्वदमनम् स्वसरेण स्वबाणेन चौरस्य घातः किं न ! अपि तु तथैवेत्यर्थः ॥१७४॥

अयं तु मत्तन्त्रतमो मदीय-ग्रासाधिवासप्रवणः सदैव ।
प्रयातु तां पातुमयं ततस्त्वं निश्चिन्तचित्तः स्वपिहि स्वतन्त्रः ॥१७५॥

अयं पुरुषस्तु मत्तन्त्रतमः ममातिशये नाधीनः यतः सदैव, मदीयस्य ग्रासस्याहारस्याधिवासस्य च प्रवणः उन्मुखः भोजनार्थमावासार्थञ्चायं मामेवाश्रयतीत्यर्थः । ततः ग्रासादिवा सदानानृण्याय अयं पुरुषः तां मत्सुतां पातुं प्रयातु त्वं स्वतन्त्रः, न तु मत्परन्तन्त्रः अतः निश्चिन्तचित्तः सन् स्वपिहि ॥१७५॥

इति ब्रुवन्त स महेभ्यदत्तं सद्वृत्तमापृच्छ्य महाऽऽग्रहेण ।
अगाच्छदेतत्तनयाऽवनाय कीर्तिप्रियाकर्षणसाधनाय ॥१७६॥

इतीति—इत्युक्तप्रकारेण ब्रुवन्तं सद्वृत्तं सदाचारिणं महेभ्यं दत्तं महता आग्रहेण आपृच्छ्य, अनुकूलयित्वा कीर्तिरूपायाः प्रियायाः आकर्षणस्य साधनाय कीर्तिलाभायेत्यर्थः, तद-

क्षणे हि कीर्तिलाभसम्भवादिति भावः । एतस्य दत्तस्य तनयायाः श्रीदत्तायाः अवनाय रक्षणाय आगच्छत्, नहि महासत्त्वः समये मुह्यतीति भावः ॥१७६॥

परोपकारिणो दुर्लभत्वमाह—

स्वकर्मनिर्माणविधौ प्रयत्नं कुर्वन्ति ये सन्ति गृहे गृहे ते ।
परार्थनिर्मापणनैपुणा ये सन्तः कियन्तः किल तेऽत्र सन्ति ? ॥१७७॥

स्वेति—ये पुरुषाः स्वकर्मणः स्वकार्यस्य निर्माणविधौ साधने प्रयत्नं कुर्वन्ति, ये स्वार्थ-मात्रसाधका इत्यर्थः । ते तादृशाः पुरुषाः गृहे गृहे सन्ति, ये परार्थस्य निर्मापणे साधने नैपुणाः कुशलाः अतएव सन्तः सज्जनाः अत्र लोके ते तादृशाः सन्तः कियन्तः कति सन्ति किल ? तादृशा विरला एवेत्यर्थः ॥१७७॥

अथापतन्तं तमवेक्ष्य धीरं शाणाविनिर्धूतकृपाणपाणिम् ।
महेभ्यदत्तस्य सुता सुरूपं दध्यौ स्वचित्ते धृतविस्मया सा ॥१७८॥

अथेति—अथानन्तरम् धीरं शाणेन तीक्ष्णतासाधनेन अविनिर्धूतः अरहितः शाणेन निशातः कृपाणः पाणौ यस्य तं तीक्ष्णासिपाणिं सुरूपं तं वत्सराजमापतन्तं वेगादागच्छन्तमवेक्ष्य धृत-विस्मया विस्मिता सती सा महेभ्यदत्तस्य सुता श्रीदत्ता स्वचित्ते दध्यौ ॥१७८॥

किं दध्यावित्याह—

महः समादाय दिनाधिनाथाद् रूपं पुनः शम्बरवैरिणोऽपि ।
मृगेश्वराच्छौर्यमहो ! विधात्रा सृष्टोऽयमेकोऽत्र महाद्भुताय ॥१७९॥

अहो इत्याश्चर्ये, विधात्रा ब्रह्मणा दिनाधिनाथात्सूर्यान्महः तेजः पुनः शम्बरवैरिणोऽपि कामदेवाश्च रूपं सौन्दर्यम् मृगेश्वरात्सिंहात् शौर्यं समादाय अत्रेहलोके महाद्भुताय महाश्च-र्यार्थमयमागच्छन् पुरुषः एकः सृष्टः निर्मितः सूर्यतेजकामरूपसिंहशौर्याणामयं समाहार इति महाश्चर्यमन्यत्रादृष्टत्वादिति भावः ॥१७९॥

अहं समग्रास्वपि सुन्दरीषु पापीयसी केवलमस्मि यस्याः ।
कृते नृरत्नं तु विनङ्क्ष्यतीदं ज्ञानं यथाऽस्या अविनीततायाः ॥१८०॥

अहमिति—केवलमहं समग्रास्वपि सुन्दरीषु स्त्रीषु पापीयसी पापाधिका अस्मि, यतः यस्याः कृते मम कृते निमित्तम् तु अस्याः अविनीततायाः अस्या विनयस्य ज्ञानं यथा ज्ञानमिव, इदं पुरोवर्त्ति नृरत्नं पुरुषोत्तमः विनङ्क्ष्यति मरिष्यति, अविनयो हि ज्ञानं नाशयति, तथाऽहमस्य नाशे निमित्तमितिभावः ॥१८०॥

अहं पुरस्योद्विजनाय जज्ञे कण्डूरिव प्राक् प्रसरं श्रयन्ती ।
ततः परेषामपि, हा! कुतो मेऽपुण्योदयादेव न तत्क्षयाशा ? ॥१८१॥

अहमिति—अहं श्रीदत्ता प्राक् पुरा पुरस्य नगरस्य उद्विजनायोद्वेगाय जज्ञे जाता कण्डूरिव पामेव प्रसरं श्रयन्ती वर्धमाना ततः पुरानन्तरं परेषामन्येषामपि, उद्विजनाय जज्ञे इति सम्बध्यते, यथा हि कण्डूरोगः प्राक् स्वाश्रयं क्लिश्यति, ततः वर्धमाना संक्रमनेनान्यानपि तथाऽहमित्यर्थः। हा इति शोके, मे मम कुतः कस्मात् अपुण्यस्योदयादेव तस्य दोषस्य क्षयस्य आशा न! केन दुष्कृतेन मम दोषो न नश्यतीति निर्वेद इति भावः ॥१८१॥

विचिन्तयन्तीमिति दत्तकन्यामभ्येत्य स प्राहरिकस्थितिस्थः ।
मनोहरालापविशेषसृष्ट्या तां रञ्जयामास कलाविदग्धः ॥१८२॥

विचीति—इत्युक्तप्रकारेण विचिन्तयन्तीं दत्तकन्याम् अभ्येत्य श्रीदत्तासमीपमागत्य प्राहरिकस्य स्थितिस्थः प्राहरिकवत्सन् कलासु विदग्धः निपुणः स वत्सराजः मनोहरस्य आलापविशेषस्य वार्ताविशेषस्य सृष्ट्या करणेन तां श्रीदत्तां रञ्जयामासाप्रीणयत् ॥१८२॥

गते रजन्याः प्रथमेऽथ यामे सुष्वाप सा दत्तमहेभ्यकन्या ।
विमुच्य शय्यां स गवाक्षसृत्या सृत्वाऽऽनयत् पुम्मितकाष्ठखण्डम् ॥१८३॥

गते इति—अथानन्तरम् रजन्याः रात्रेः प्रथमे यामे प्रहरे गते सति सा दत्तमहेभ्यकन्या सुष्वाप, स वत्सराजश्च शय्यां विमुच्य त्यक्त्वा शय्यातनुत्थायेत्यर्थः। गवाक्षरूपया सृत्या मार्गेण "अयनं वर्त्म मार्गाऽध्व पन्थानः पदवी सृतिः" रित्यमरः। सृत्वा बहिर्निःसृत्य पुम्मितं पुरुषप्रमाणं काष्ठस्य खण्डमानयदानीतवान् ॥१८३॥

विमुक्तमाच्छाद्य तदात्मतल्पे तेन प्रसर्पद्धिषणाधनेन ।
स्वयं समाकृष्य स मण्डलाग्रं छायां प्रदीपस्य विभीर्बभाज ॥॥१८४॥

विमुक्तमिति—प्रसर्पत् यथाऽवसरं प्रसरत् धिषणैव धनं यस्य स तेन प्रत्युत्पन्नमतिना तेन वत्सराजेन आत्मतल्पे स्वशय्यायां विमुक्तं निक्षिप्तं तत्काष्ठखण्डमाच्छाद्य वस्त्रैस्तिरोधाय स वत्सराजः स्वयं मण्डलाग्रं कृपाणं समाकृष्य कोशादुद्धृत्य विभीः निर्भयः सन् प्रदीपस्य छायामप्रकाशप्रदेशं बभाज शिश्राय प्रदीपाप्रकाशिते तमस्विनि प्रदेशे तस्थौ इत्यर्थः ॥१८४॥

क्षणाद् गवाक्षेण मुखं सुधांशु संचूर्ण्य पूर्णं विधिनेव सृष्टम् ।
शनैः शनैः स प्रविशद् विलोक्य कृत्वाऽवधानं सविशेषमस्थात् ॥१८५॥

क्षणादिति—क्षणात्क्षणानन्तरं गवाक्षेण गवाक्षमार्गेण विविना पूर्णं सुधांशुं चन्द्रं संचूर्ण्य भित्त्वा सृष्टं निर्मितमिव मुखं मुखमात्रं शनैः शनैः प्रविशद् विलोक्य स वत्सराजः सविशेषम् नितरामवधानं मनः स्वास्थ्यं कृत्वाऽस्थात् तस्थौ ॥१८५॥

इतस्ततो वीक्ष्य गृहान्तरं तत्तेनापसर्ते वदनेन तूर्णम् ।
अथाविशत् पाणिरुपेतलज्जान् पद्मान् स्वरुच्या रचयन्निवाऽरम् ॥१८६॥

इत इति—तेन वदनेन गवाक्षमार्गप्रविष्टेन मुखेन इतस्ततः तद् गृहान्तरं गृहमध्यं वीक्ष्य अथानन्तरं स्वरुच्या स्वकान्त्या पद्मान् कमलानि अरमर्थमुपेतलज्जान् लज्जितानिव रचयन् कुर्वन् कमलादप्युत्कृष्टः पाणिः करः अविशत्, गृहे इति अर्थबलाल्लभ्यते ॥१८६॥

महौषधीयुग्ममुरुप्रभावं हस्तेऽस्ति तस्मिन् वलयाकृतिभ्राट् ।
विनिस्सरेदेकत एव धूमो घातव्यथाया विलयो द्वितीयात् ॥१८७॥

महौषधीति—तस्मिन् गृहे प्रविष्टे हस्ते उरुप्रभावम् विलक्षणशक्तिवलयस्य कटस्य आकृत्य वर्तुलाकारादिरूपया भ्राजते इत्येवं शीलम् वलयाकृतिशोभमानम् महौषध्योः युग्मं द्वयमस्त्यासीत् तयोर्द्वयोर्महौषध्योरेकतः एकस्याः महौषध्याः धूमः निःस्सरेत् धूमो शक्तिरासीत् द्वितीयात् औषधीवस्तुनः घातव्यथायाः आघातपीडायाः विलयः विनाशः द्वितीयौषधीप्रभावेण घातजन्या पीडा न भवेदित्यर्थः ॥१८७॥

विनिर्ययौ फूत्कृतिमात्रतोऽपि धूमस्य राशिः प्रथमादुदग्रः ।
प्रसारिणाऽपूर्यत् तेन तस्य पस्त्यं जलौघैरिव वारिराशिः ॥१८८॥

विनिर्ययाविति —फूत्कृतिमात्रतः फूत्कारादेव प्रथमात् एकस्मात्तादृशशक्तिमतः महौषधी–वस्तुनः उदग्र उत्कटो धूमस्य राशिः विनिर्ययौ बहिर्भूतः । प्रसारिणा प्रसरणशीलेन तेन धूमराशिना जलौघैः जलप्रवाहैः वारिराशिः तडागादिरिव तस्य वत्सराजस्य पस्त्यं गृहमपूर्यत ॥१८८॥

सविस्मयस्तत् समवेक्ष्य वत्सराजोऽपि तस्थौ सगवाक्षपार्श्वे ।
प्रविश्य च प्राहरिकी स शय्यां पाणिः परामृक्षदितस्ततोऽपि ॥१८९॥

सवीति—तद् धूमराशिना गृहपूरणं समवेक्ष्याद्भुतदर्शनात्सविस्मयः साश्चर्यः अपि वत्सराजः गवाक्षपार्श्वे तस्थौ, नतु क्षोभात्पलायितवानित्यर्थः । स पाणिश्च प्रविश्य गृहमध्यमेत्य प्राहरिकीं-प्राहरिकसम्बन्धिनीं शय्यामितस्ततः सर्वतोऽपि परामृक्षद् स्पृष्टवान् ॥१८९॥

स्वचिन्तितं किञ्चन च प्रपञ्चं पाणिः स यावत् कुरुते पुरावत् ।
जवात् कुमारस्तरवारिणा तं क्रोधारुणस्तावदयं जघान ॥१९०॥

स्वेति— स पाणिः पुरावत् पूर्वदिनवत् स्वचिन्तितं किञ्चन प्रपञ्चं क्रियाविशेषं यावत् कुरुते तावदेव क्रोधारुणः अयं कुमारः वत्सराजः तरवारिणा खड्गेन जवाद्वेगात्तं पाणिं जघान ॥१९०॥

महाप्रहारव्यथितोऽपि तस्या दिव्योऽयमित्यत्रुटदेष नैव ।
अमानवानामिव मानवानां यस्माच्छरीराणि न पार्थिवानि ॥१९१॥

महेति— तस्याः दृश्यमुखहस्तमात्रायाः स्त्रियाः महता बलवता प्रहारेणासिघातेन व्यथितः कृतव्रणोऽपि एष पाणिदिव्यदेवसम्बन्धी अयं पाणिरित्यतः नैव अत्रुटत् छिद्यते स्म । ननु शरीरस्य पार्थिवत्वात् तस्य च खड्गेन छेदे को विवेक इति चेत्तत्राह—यस्मात् मानवानामिव-अमानवानाम् देवादीनां शरीराणि पार्थिवानि न किन्तु वैक्रियाणीति खड्गेन न चिच्छिदे इत्यर्थः ॥१९१॥

विनिर्गते तत्र करे बहिष्टाद्धा वञ्चिता केनचिदस्मि बाढम् ।
आकर्ण्य तस्या इति वाक्यमुच्चैः पृष्ठे गवाक्षेण दधाव वीरः ॥१९२॥

विनीति—तत्र तस्मिन् करे पाणौ बहिष्टात् गृहाद्बहिः विनिर्गते सति हा ! शोके केन-चिद्बाढमत्यर्थं वञ्चिता छलिताऽस्मि इतीत्थं तस्याः अलक्ष्यशरीरायाः स्त्रियाः उच्चैर्वाक्यमाकर्ण्य पृष्ठे तस्याः पश्चात् गवाक्षेण तद्द्वारा निःसृत्य वीरः वत्सराजः दधावगाधयौ ॥१९२॥

पलायमानस्य जनस्य पृष्ठे धावेल्लघीयानिति सन्निवृत्तः ।
तदौषधीयुग्ममवैक्षताऽयं पाणेः प्रहारात् पतितं तदीयात् ॥१९३॥

पलेति—पलायमानस्य जीवरक्षणार्थं नश्यमानस्य जनस्य पृष्ठे लघीयान् क्षुद्रप्रकृतिरेव ननु वीरः धावेदिति हेतोः सन्निवृतः परावृतः अयं वत्सराज. प्रहाराद्धेतोः तदीयात् स्त्रीसम्बन्धिनः पाणेः पतितं तदौषधीयुग्ममवैक्षत ॥१९३॥

द्वयं तदादाय स जाग्रदेव यावत् पुनस्तिष्ठति तावदेषा ।
महेभ्यकन्या रजनीविरामे मीलत्प्रमीला समभूत् सहेला ॥१९४॥

द्वयमिति—स वत्सराजः तद् द्वयं महौषधीयुग्ममादाय पुनः यावज्जाग्रदेव न तु शयानः, पुनरपि उपद्रवान्तरशङ्कयेति भावः । तिष्ठति, तावत् एषा महेभ्यकन्या श्रीदत्ता रजनीविरामे रात्रि-शेषे महेला लीलया मीलन्ती विकसमाना प्रमीला निद्रा यस्याः सा तादृशी विनिद्रा समभूत् ॥१९४॥

अमुं समीक्ष्याऽक्षतकान्तिगात्रं हृष्टा भृशं चिन्तयति स्म सैवम् ।
अहो ! अयं नाऽपि महाप्रभावो व्यालोक्यते लोकविविक्तसत्त्वः ॥१९५॥

अमुमिति—अमुं वत्सराजमक्षताकान्तिर्गात्रं शरीरं च यस्य तादृशं स्वस्थं समीक्ष्य भृशं हृष्टा सा श्रीदत्ता एवं चिन्तयन्ति स्म, एवमिति किमित्याह–अहो, इति सविस्मय हर्षे, अयं प्राहरिकः महाप्रभावः विशिष्टशक्तिः ना पुरुषः मनुष्योऽपि सन् लोकान्मर्त्यलोकात् विविक्तं भिन्नं सत्त्वं सारो यस्य तादृशः अलौकिकसत्त्वः व्यालोक्यते उत्प्रेक्ष्यते, कथमन्यथाऽद्यापि जीवन्नेव तिष्ठतीति भावः ॥१९५॥

तादृशसत्त्वे हेतुमाह—

अरक्षदेवं स्वमनन्तशक्तिर्यो यामिकत्वं प्रतिपद्य हृद्यम् ।
नृरत्नविध्वंससमुद्भवाद् मां यो वा महापातकतः कृपालुः ॥१९६॥

यः अनन्तशक्ति अपरिमेयसामर्थ्यः हृद्यं परोपकारार्थत्वात्प्रियं यामिकत्वं प्रहरिकत्वं प्रतिपद्य स्वीकृत्य स्वमात्मानमेवमविकलमरक्षत् यो वा यश्च कृपालुः स्वार्थाभावदयामात्रसारत्वात्तत्प्रवृत्तेरिति भावः । मां च नृरत्नस्य तादृशपुरुषश्रेष्ठस्य विध्वंससमुद्भवात्मरणजन्यान्महापातकतः अरक्षदित्रि सम्बध्यते तथा चायमवश्यमलौकिकसत्त्व इति भावः ॥१९६॥

पराक्रमेणाऽर्जुन एष एव नित्यं यशोभिश्च समुन्नमद्भिः ।
पितुर्मदीयस्य गतां कलङ्काद् व्यावर्त्तयद् कीर्तिगवीं य एवम् ॥१९७॥

परेति—पराक्रमेण नित्यं समुन्नमद्भिः वर्धमानैर्यशोभिश्च एष प्रस्तुतः पुरुषः अर्जुनः अन्यतमपाण्डवः धवलश्च, यशसोधावल्यस्य कविसमयप्रसिद्धत्वादितिभावः एष क इत्याह–यः एवम् उक्तप्रकारेण कृत्वा, मदीयस्य मम पितुः कलङ्काद् अस्य दुहितृरक्षिता म्रियते इत्येवंरूपादपवादाद्गताम् अपसृतां कीर्तिगौरिव तां व्यावर्त्तयत् पुनः वालयित्वाऽऽनीतवान् दुरपवादाद्ररक्षेत्यर्थः ॥१९७॥

विवक्ष्यते चेदयमेव मां तद् मंस्ये सुखं वैषयिकं स्वतोऽपि ।
भवान्तरे चापरथाऽनुरूपं कान्तं विना किं सुखमस्ति यद्वा ? ॥१९८॥

विवेति—अयं प्राहरिक एव स्वतोऽपि स्वतएव ननु परप्रेरणादिना मां श्रीदत्तां विवक्ष्यते परिणेष्यति चेत्तत्तदा वैषयिकं सुखं मंस्ये भोक्ष्ये अपरथा च अन्यथा तु भवान्तरे, अन्यजन्मनि, नत्विह जन्मनि कुतोऽयमवग्रह इति चेत्तत्राह–यद्वतः अनुरूपं अभिमतं कान्तं प्रियं विना सुखं किंवा अस्ति ? अननुरूपसङ्गमः प्रत्युत दुःखायैवेति भावः ॥१९८॥

तथाऽनुयुक्तः स च वत्सराजः स्माह स्वरक्षाचरितं यथावत् ।
विवर्णनीयं वरवर्णिनी यमाकर्ण्य तत् संमदमाससाद ॥१९९॥

तथेति—तथा पुनः—अनुयुक्तः तया पृष्टः स वत्सराजश्च यथावत् यथाजातम् विवर्णनीयम् प्रशंसनीयं स्वरक्षाचरितं स्वकीयरक्षणवृत्तान्तमाह स्म । इयं वरवर्णिनी श्रीदत्ता तद्वृत्तमाकर्ण्य संमदं हर्षमाससाद प्राप ॥१९९॥

तदा जलाऽमत्रकरा भुजिष्या तत्राऽऽगमत् तत्करणीयनिष्ठा ।
तयाऽर्पितं साऽपि च दन्तकाष्ठं कृत्वा मुखं क्षालयति स्म तुष्टा ॥२००॥

तदेति—तदा तस्याः श्रीदत्तायाः करणीये परिचरणे चर्यायां निष्ठा निपुणा भुजिष्या दासी तत्र श्रीदत्तासमीपे जलस्यामत्रं पात्रं करे यस्याः सा जलपात्रहस्ता सती आगमदागता पात्रामत्रे च भाजनमि" त्यमरः । तया भुजिष्यया अर्पितं दत्तं दन्तधावनं कृत्वा सा श्रीदत्ताऽपि च तुष्टा प्रसन्ना सती, न तु दिनान्तरवत्पुरुषमरणखिन्नेति भावः । मुखं क्षालयति प्रमार्जयति स्म ॥२००॥

निशम्य जीवन्तममुं महेभ्यो दासीमुखाद्विस्मित एत्य मङ्क्षु ।
निषद्य पीठे तनयावितीर्णे पप्रच्छ वत्सं तमुषाप्रबन्धम् ॥२०१॥

निशम्येति—दासीमुखात् अमुं वत्सराजं जीवन्तं निशम्य महेभ्यः दत्तः विस्मितः आश्चर्यितः सन् मङ्क्षु सपदि एत्याऽऽगत्य तनयया पुत्र्या श्रीदत्तया वितीर्णे दत्ते पीठे आसने निषद्योपविश्य तं वत्सराजम् उषालक्षणया रात्रिः तस्याः प्रबन्धं वृत्तान्तं पप्रच्छ ॥२०१॥

स धारिणेयोऽपि यथास्थितार्थां रात्रिप्रवृत्तिं निजगाद तस्य ।
गिरं विसंवादपदप्रयोज्यां प्राणात्ययेऽपि प्रवदन्ति न ज्ञाः ॥२०२॥

सेति—स धारिणेयः वत्सराजोऽपि यथास्थितः न तु आत्मप्रशंसाद्यर्थमतथ्याभिनिवेशेनातिशायितोऽर्थो यस्यां तां सत्यां रात्रिप्रवृत्तिं तस्य दत्तस्य निजगाद, शेषे षष्ठी नन्वात्मोत्कर्षाय मिथ्याऽप्यवसरे वक्तव्येति चेत्तत्राह–ज्ञाः धीमन्तः प्राणात्ययेऽपि प्राणनाशेऽपि प्राप्ते विसंवादपदानि मृषार्थतयाऽनिष्फलानि अयथार्थानि वा प्रयोज्यानि कथनीयानि यस्यां ता तादृशीं मृषार्थां गिरं वाणीं न प्रवदन्ति, आत्मोत्कर्षाद्यर्थं तु का चर्चा ? इति भावः ॥२०२

तमभ्यधाद् दत्त उदारचित्तः पुत्रीप्रबन्धेन विवर्धमानः ।
मदन्ववायस्य कलङ्कपङ्कस्त्वच्छौर्यगाङ्गेयजलेन मृष्टः ॥२०३॥

तमिति—पुत्र्याः प्रबन्धेन वृत्तान्तेन विवर्धमानः हर्षोत्फुल्लः उदारचित्तः कृतज्ञः दत्तः तं वत्सराजमभ्यधात्, किमित्याह ममान्ववायस्य कुलस्य कलङ्कः पङ्कः इव त्वत् तव शौर्यमेव गाङ्गेयजलं गाङ्गं वारितेन मृष्टः क्षालितः जलेन पङ्कक्षालनमुचितमेवेति भावः ॥२०३॥

इमां ततस्त्वं स्वगुणार्थशक्तिक्रीतां समादत्स्व महानुभाव ! ।
निमित्तमात्रेण मया प्रदाने संबन्धवृत्त्यैव भविष्यतेऽस्याः ॥२०४॥

इमामिति—ततः तस्मान्महोपकाराद्धेतोः महानुभाव ! स्वस्य गुणा एव अर्थशक्तिः धनबलम् तया क्रीतां स्वायत्तीकृतामिमां मत्पुत्रीं श्रीदत्तां समादत्स्व गृहाण । ननु तव पुत्री त्वया दत्तैव ग्राह्येति चेत्तत्राह—अस्याः मम पुत्र्याः प्रदाने तुभ्यं समर्पणे संबन्धवृत्त्या जन्यजनकभावसम्बन्धवत्त्वेन हेतुना मया दत्तेन निमित्तमात्रेण भविष्यते, कन्यादाने सम्बन्धवानहं निमित्तमात्रं परमार्थतस्तु त्वया गुणक्रीतैवेयमिति यावत् ॥२०४॥

अवोचदेषोऽपि कथं कुलाद्य विज्ञाय मे तात ! ददासि कन्याम् ।
उपेक्षणीयाऽपि न चापरीक्ष्य देया तथा साऽपयशस्तनोति ॥२०५॥

अवोचेति—एष वत्सराजोऽप्यवोचत्, किमित्याह—तात ! कुलादि अविज्ञाय अज्ञात्वैव मे मह्यं कन्यां कथं ददासि ? दातुं नोचितमिति, ययोरेव समं कुलमित्युक्तेरिति भावः । पक्षान्तरेऽनुपपत्तिमाह—उपेक्षणीया दोषादिसद्भावाद्धेतोः अनभिमताऽपि पुत्रीत्यर्थाल्लभ्यते, अपरिक्ष्य कुलाद्यपर्यालोच्य नच नैव देया, तथा अपरीक्ष्य दत्ता सा पुत्री अपयशः तनोति दुष्कीर्तिमुत्पादयतीत्यर्थः ॥२०५॥

भवादृशा नापयशःपदं स्युः पुण्याशया वृत्तविदां पुरोगाः ।
विना नयस्य प्रतिपत्तिमत्र केषां न केषामयशःप्रवृत्तम् ? ॥२०६॥

भवेति—वृत्तविदां व्यवहारिणां पुरोगा अग्रेसराः पुण्यायाः धर्मनिष्ठावन्तः भवादृशाः सुजनाः अपयशसः पदमास्पदं न स्युः भवादृशानां कुतोऽपि हेतोरपकीर्तिं युज्यते इत्यर्थः ॥ अपयशसः सम्भवं दर्शयति—अत्र लोके नयस्य नीतिशास्त्रस्य प्रतिपत्तिं विना नीतिमनालम्ब्येत्यर्थः । केषां केषां, वीप्सायां द्विर्भावः । अयशः न प्रवृत्तम्, अपितु सर्वेषामेवानपानुसारिणामयशो जातमेवेति भावः ॥२०६॥

अथाऽभिलाषस्तव सत्क्रियायां सा किं न शक्याऽप्यपरोपचारैः ? ।
विधीयते तत्किल कर्म साधो ! सम्पादितं यच्च करोति सातम् ॥२०७॥

अथेति—अथ पक्षान्तरे तव सत्क्रियायाम् मम सत्कारे अभिलाष इच्छा चेत्तर्हि—सा सत्क्रिया अपरैः उपचारैः प्रकारैरपि किं शक्या न ? अपि तु शक्यैवेत्यर्थः । किल तस्माद्धेतोः साधोः तत्तादृशं कर्म क्रिया विधीयते । यत्कर्मसम्पादितं कृतं सत् सातं कल्याणं करोति तत्त्वयश इत्यर्थः ॥२०७॥

इतीरितं तस्य निशम्य हर्म्यो प्रोवाच वाचस्पतिवद् विदग्धः ।
कुलादिकं व्याहृतमेव वत्स ! युष्मद्गुणैः शौर्यविवेकमुख्यैः ॥२०८॥

इतीति—इत्युक्तप्रकारं तस्य वत्सराजस्येरितं कथितं निशम्य वाचस्पतिवद् देवगुरुवद् विदग्धः धीमान् हर्म्यः सप्तभूमः प्रासादोऽस्यास्तीति स महेभ्यः दत्तः प्रोवाच किमित्याह—वत्स ! शौर्यं विवेकश्च मुख्यं येषां तैः युष्मद्गुणैः कुलादिकम् व्याहृतं सूचितमेव, नह्यकुलीने तादृशगुणानां सम्भव इति नाज्ञातकुलशीलादिर्भवानित्यर्थः ॥२०८॥

उपेक्ष्यते चेत्तनया किमर्थं स्वां जन्मभूमिं स्वपुरं विहाय ? ।
पुरं क्रियेताऽत्र सदेकमर्त्यं संहारमप्याऽऽद्रियतां क एतम् ? ॥२०९॥

अपेक्ष्यते—यदप्ययुक्तमुपेक्षणीयाऽपीत्यादिना, तत्रैयमुपेक्ष्येत्याह-तनया स्वपुत्री उपेक्ष्यते अवमानिता चेत्स्यात्तदा, किमर्थं कस्मै प्रयोजनाय स्वां जन्मभूमिं स्वपुरं निजनगरं विहाय-त्यक्त्वा अत्र निर्जने वने पुरं नगरं क्रियेत रच्येत ? किञ्च कः जनः सदा—एवं प्रस्तुतम् एकस्य मर्त्यस्य मनुष्यस्य संहारं नाशं पुत्रीरक्षणार्थमिति प्रकरणाल्लभ्यते आद्रियताम् करोतु ? नकोऽपीत्यर्थः । उपेक्ष्या चेत्स्यात्तस्या एकस्या एव त्यागेनेष्टोपपत्तिरिति तदकृत्वा एतादृशव्यवसाय एव तस्या अनुपेक्षणीयत्वे प्रमाणमिति भावः ॥२०९॥

विलोकनेनैव मणिप्रभाणां ये कुर्वते निर्णयमेकदृष्ट्या ।
नृरत्नमालोक्य विनिर्णयं ते कर्तुं जडाः किं किमुताथ मूकाः ? ॥२१०॥

विलोकेति—नच त्वयि कुलीनत्वादिबुद्धिरयथार्थेत्याह—ये मादृशाः रत्नव्यवहारिणः एकदृष्ट्या सकृदेव विलोकनेनैव, नतु योग्यपरीक्षान्तरद्वाराऽपीत्येवकारेण स्वस्य वस्तुयाथात्म्यज्ञानपुण्यं सूचितम्, मणिप्रभाणां मणिकान्तीनां निर्णयम् एतादृशस्य मणेरीदृक्कान्तिरित्येवं निश्चयं कुर्वते, प्रभां दृष्ट्वैव मणिशुद्धतादि याथातथ्येन विदन्ति, ते तादृशा मादृशाः नृरत्नं पुरुषश्रेष्ठमवलोक्य विनिर्णयं कर्तुम् अयं कीदृशः ? इति निश्चेतुं जडाः मन्दबुद्धयः किम् ? नैवेत्यर्थः । उताथ अथवा मूकाः किम् ? नैवेत्यर्थः । मादृशा रत्नपरीक्षकाः रत्नं दृष्ट्वा नैव मुह्यन्ति इति भावः ॥२१०॥

स्वनिर्णये हेतुमाह—

परोपकारप्रवणाशयत्वं लोकोत्तरं ते कुलमब्रवीद् मे ।
प्रभाकृतो यादृशमस्ति तेजः खद्योतपोते हि न तादृशं स्यात् ॥२११॥

परोपेति—मे मम ते तव लोकोत्तरमसाधारणं परोपकारे प्रवणतत्पर आशयोऽभिप्रायो यस्य तद्भाव एव परोपकारबुद्धिरेव कुलम् तवेत्यर्थत्वाल्लभ्यते, अब्रवीत् ननु नैष नियमो यत्कुलीन एव परोपकारी इति चेद्भवतु तावदेवम्, तथापि उभयोर्वैलक्षण्यमेवेत्याह-हि यतः

प्रभाकृतः सूर्यस्य यादृशं तेजः अस्ति तादृशं तेजः खद्योतस्य पोते शिशौ, खद्योते इति यावत्, न स्यात् । अत्र वैधर्म्येण दृष्टान्तालङ्कारः ॥२११॥

त्वयैव संयोगमवाप्य पुत्री पुण्यैरमीभिर्न कथं यशांसि ।
कुलस्य मालिन्यविलोपनेन सम्प्रापयिष्यत्यचिरेण मे मा ॥२१२॥

त्वयैवेति—एषोपस्थिता पुत्री मम कन्या त्वया एव नत्वन्येन संयोगं सम्बन्धमवाप्य कुलस्य मालिन्यस्य अद्यावधि पुरुषध्वंसजन्यदुरपवादस्य विलोपनेन दूरीकरणेन हेतुना अमीभिः स्वेतरक्षणजन्यैः पुण्यैः मा माम् अचिरेण शीघ्रमेव यशांसि कथं कुतो न सम्प्रापयिष्यति ? अपि तु त्वया सम्बन्धमेत्य मम यशोलाभोऽवश्यं भवितेति भावः ॥२१२॥

दुराग्रहं तस्य विबुध्य वत्सो व्याचष्ट चैवमहो ! पुरस्तात् ।
विधाय कार्यं समुपैमि पश्चात्तातस्य निर्देशमहं विधास्ये ॥२१३॥

दुरेति—तस्य दत्तस्य दुराग्रहमत्याग्रहम् नतु दुष्टम् कन्यास्वीकारप्रार्थनस्य दुष्टत्वाभावादिति बोध्यम् । विबुध्य ज्ञात्वा वत्सः वत्सराजः प्रोवाच, किमित्याह—पुरस्तात् प्राथमिकम् कार्यं स्वप्रतिज्ञातं विधाय अहं समुपैमि, पश्चात् तातस्य तव दत्तस्य निर्देशमाज्ञां विधास्ये ? ॥२१३॥

इति ब्रुवन्तं स महेभ्यदत्तस्तं गाढमभ्यर्थ्य निजां तनूजाम् ॥
विवाहयामास महोत्सवेन पद्मालयां विष्णुमिवाम्बुराशिः ॥२१४॥

इतीति—इत्युक्तप्रकारेण ब्रुवन्तं तं वत्सराजम् गाढमतिशयमभ्यर्थ्य प्रार्थ्य स महेभ्यः दत्तः महोत्सवेन निजां तनुजां पुत्रीम् अम्बुराशिः समुद्रः पद्मालयां स्वपुत्रीं लक्ष्मीम्—"लक्ष्मीः पद्मालया पद्मे" इत्यमरः । विष्णुमिव विवाहयामास ॥२१४॥

तमस्विनीं तामतिवाह्य तत्र वृत्तं प्रतिज्ञाप्रतिपत्तिपूर्वम् ।
निजं समाख्याय महेभ्यपुत्र्यै प्रातः प्रतस्थे स्थितिमान् स वत्सः ॥२१५॥

तमेति—तत्र दत्तगृहे तां विवाहसम्बन्धिनीं तमस्विनीं रात्रिमतिवाह्य व्यतीत्य प्रतिज्ञाप्रतिपत्तिपूर्वम् प्रतिज्ञाकरणादारभ्य निजं वृतं महेभ्यपुत्र्यै श्रीदत्तायै समाख्याय स्थितिमान् मर्यादापालकः स वत्सः प्रातः प्रतस्थे चलितवान् ॥२१५॥

महाटवीं श्वापदसंकुलां तामेतां समन्तादपि पर्यटन् सः ।
विशालशालैः कलितं पुरस्ता-देकं पुरं प्रैक्षत निस्तरङ्गः ॥२१६॥

महेति—निस्तरङ्गोऽचञ्चलः स्थिरबुद्धिरिति यावत् । स वत्सराजः तामेतां प्रस्तुतां समन्तादपि सर्वतोऽपि श्वापदैः व्याघ्रादिभिः संकुलां व्याप्तां महाटवीं पर्यटन् पुरस्तादग्रतः विशालैः वृक्षैः प्राकारैर्वा कलितं समन्वितम् एकं पुरं प्रैक्षत ददर्श ॥२१६॥

अचिन्तयच्चाद्भुतरत्नक्लृप्तप्राकारविभ्राजि पुरं किमेतत् ?।
न दृश्यते यत्र चतुष्पदानां बौद्धे मते जातिरपि प्रवृत्ता ॥२१७॥

अचीति—अचिन्तयच्च, किमित्याह–अद्भुतैः रत्नैः क्लृप्तेन निर्मितेन प्राकारेण कोट्टेन विभ्राजते इत्येवं शीलमेतद् दृश्यमानं पुरं किम् ? कीदृशं किं नामधेयं वा। यत्र पुरे बौद्धे मते बौद्धदर्शने इव चतुष्पदानां गवादीनां जातिः सामान्यमपि, एकाऽपि गौर्महिषीप्रभृतिर्वा प्रवृत्ता सञ्चरमाणा न दृश्यते ?। बौद्धानां मते जातिः गोत्वादिका न स्वीकृता, तन्मते सर्वपदार्थानां क्षणिकत्वादिति बोध्यम् ॥२१७॥

विचिन्त्य चैवं घनपद्मजाति पद्माकरे क्षालितविग्रहोऽयम्।
श्रमापनोदाय स पालिशालच्छायां समालम्ब्य मनाग् निषण्णः ॥२१८॥

विचीति—एवमुक्तप्रकारेण विचिन्त्य च घना निरन्तरा पद्मजातिः कमलसमूहः यस्मिन् तादृशे पद्माकरे तडागे–"पद्माकरस्तडागोऽस्त्री"त्यमरः। क्षालितविग्रहः स्नातः स अयं स वत्सराजः श्रमस्याध्वखेदस्यापनोदाय दूरीकरणाय पाल्यां तटे शालस्य वृक्षस्य च्छायां समालम्ब्याऽऽश्रित्य मनाक् किञ्चित्कालं निषण्ण उपविष्टवान् ॥२१८॥

निरीक्ष्य नारीजनमेव तत्र नीरं घटैरेव समाहरन्तम्।
पुनः पुनः पुण्यमतिः स चैकां रामां बभाषे रमणीयमूर्तिम् ॥२१९॥

निरीति—तत्र तडागे नारीजनमेव न तु नरमपि घटैरेव न तु पात्रान्तरैः पुनः पुनः समाहरन्तम् नयन्तं निरीक्ष्य पुण्यमतिः निश्चलबुद्धिः स वत्सराजः एकां कश्चिद्रमणीयमूर्तिम् सुन्दराकारां रामां स्त्रियं बभाषे पृष्टवान् ॥२१९॥

तत्प्रश्नमेवाह—

इयं पुरी का सुतनु ! प्रशास्ता को वाऽत्र गोत्राधिपतिर्द्विधापि।
म्रदीयसीभिर्भवतीभिरेतद् भूयस्तमां वारि किमुह्यते वा ? ॥२२०॥

इयमिति–सुतनु ! शोभनाङ्गि ! इयं पुरो दृश्यमाना पुरी का किमाख्या ? वा तथा अत्र पुर्याम् द्विधा गोत्रस्य कुलस्य गोत्रायाः पृथिव्याश्चेति–प्रकारद्वयेनाऽपि अधिपतिः कः कुलीनो महीपतिः प्रशास्ता शासकः ? वा तथा म्रदीयसीभिः अत्यन्तं कोमलाङ्गीभिः भवतीभिः भूयस्तमां पुनः पुनः एतद्वारि जलं किं किमर्थमुह्यते नीयते ? ॥२२०॥

तदुक्तवाणीश्रवणोपलम्भरोमाञ्चिताङ्ग्या स तयाऽप्यभाणि।
इमां पुरीं व्यन्तरपञ्च एव भद्र ! व्यधुः स्वैरविहारहेतोः ॥२२१॥

तदुक्तेति—तेन वत्सराजेनोक्तायाः वाण्याः श्रवणोपलम्भेन श्रावणप्रत्यक्षेन रोमाञ्चिताङ्गा तया नार्याऽपि स वत्सराजः अभाणि कथितः, किमित्याह-भद्र ! स्वैरं-यथेष्टं यो विहारस्तद्धेतोः व्यन्तरवध्वः एव इमां दृश्यमानां पुरीं व्यधुः रचयमासुः ॥२२१॥

एवं पुरीवृत्तमुक्त्वा तत्पतिं जलाहरणकारणं च आह—

इदं पुरी स्वामिपदं बभार या व्यन्तरीणां च तथा समासाम् ।
क्वचिद् गता सा व्यथिता सुतीक्ष्णखड्गप्रहारेण करारविन्दे ॥२२२॥

इदमिति—या व्यन्तरी अस्या पुर्याः स्वामिपदं स्वामित्वम् तथा समासां सर्वासां व्यन्तरीणां च स्वामिपदमिति सम्बध्यते, विशेषस्य सापेक्षत्वेऽपि समास इति बोध्यम् सा व्यन्तरी, क्वचिद् गता सती करारविन्दे सुतीक्ष्णस्य खड्गस्य प्रहारेण व्यथिता सम्प्रतीति भावः ॥२२२॥

तस्या वृत्तान्तरमप्याह—

प्रसेदुषा व्यन्तरनायकेन तस्या वितीर्णं वलयाकृतीऽयम् ।
यदौषधीद्वन्द्वमवाप्तबाध हस्तात् तदा तत् पतितं विहस्तात् ॥२२३॥

प्रेति--प्रसेदुषा प्रसन्नेन व्यन्तरनायकेन तस्याः व्यन्तर्याः कृते ईऽयम् उत्कृष्टगुणयुक्तत्वात्प्रशस्यम् वलयस्याकृतिरिवाकृतिर्यस्य तादृशं यद् औषधीद्वन्द्वं वितीर्णम्, तदौषधद्वन्द्वं तदा खड्गप्रहारानन्तरम् विहस्ताद्भयात्, हेतुगर्भं विशेषणमाह—अवाप्ता बाधा पीडा येन तादृशात्तस्या एव हस्तात्करात्पतितम् ॥२२३॥

औषधीद्वन्द्वमाहात्म्यमाह—

समस्तशास्त्रोपनिपातघाततीव्रव्यथासंहरणाय चैका ।
प्रकुर्वती त्वा घनधूमपूरं सम्पद्यते लोकविमोहनाय ॥२२४॥

समस्तेति—एका तयोः ऐकाच समस्तानां शास्त्राणामुपनिपातेन प्रहारेण घातस्यतीव्रव्यथायाः संहरणायापनयनाय, सम्पद्यते, त्वा अन्या घनानां गाढानां धूमानां पूरमोघं प्रकुर्वती सती लोकानां विमोहनाय आन्ध्याय सम्पद्यते ॥२२४॥

न तत्प्रयोगेण विना तदीयपाणेर्व्यथाः शान्तिमधिश्रयन्ते ।
जलाभिषेकेण च किञ्चनापि तेनैव वारीणि वहामहेऽरम् ॥२२५॥

नेति—तेन औषधीरूपेण प्रयोगेण विना तदीयपाणेः व्यथाः शान्तिं न अधिश्रयन्ते व्यथा न शाम्यन्तीति भावः । जलस्याभिषेकेण सिञ्चनेन च किञ्चनापि मनागेव, शान्तिमधिश्रयन्ते इति सम्बध्यते, तेनैव हेतुना वारीणि जलानि अरं शीघ्रं वहामहे ॥२२५॥

अथ वत्सराजोक्तिमाह—

नरागदङ्कारविचारसारप्राप्तप्रतिष्ठोऽस्मि मदौषधेन।
करव्यथायाः प्रशमो यदि स्यात् तस्या निगाद्यं तदिदं भवत्या ॥२२६॥

नरेति–नराणामगदङ्कारेषु वैद्येषु विचारसारेणानुभवविशेषेण प्राप्तप्रतिष्ठः पूजितः अस्मि, अहमितिलभ्यते। मदौषधेन करव्यथायाः तव स्वामिन्याः पाणिपीडायाः प्रशमः शान्तिः यदि स्यात् सम्भाव्यते इत्यर्थः ततः इदं मदुक्तं भवत्या तस्याः त्वत्स्वामिन्या व्यन्तर्या निगाद्यं कथनीयम् ॥२२६॥

तदीरितं चेतसि सा निधाय देव्याः पुरस्तात् त्वरितं बभाषे।
विलम्बमालम्ब्य न हि प्रवृत्तिः स्व स्वामिकार्याहितमानसानाम् ॥२२७॥

तदीति—सा व्यन्तरी तस्य वत्सराजस्य ईरितं कथितं चेतसि निधाय धारयित्वा त्वरितं शीघ्रमेव देव्याः स्वामिन्याः पुरस्ताद्बभाषे। तस्याः शीघ्रोक्तिं समर्थयति-स्वेति–स्वस्य स्वामिनः कार्ये आहितं–भग्नं मानसं येषां तेषाम् स्वामिभक्तानाम् हि यतः विलम्बमालम्ब्य प्रवृत्तिः–व्यापारः न। स्वामिभक्ता, स्वामिहिताय शीघ्रमेव प्रवर्तन्ते न तु समया कुर्वन्तीति भावः ॥२२७॥

तमाह्वयामास तदैव देवी हर्षप्रकर्षाञ्चितनेत्रपद्मा।
पुरा भिषग्विस्तरमाततान मायामधिष्ठाय स तन्निदेशात् ॥२२८॥

तमिति—तदा कथनानन्तरमेव देवी व्यन्तरी नायिका पीडोपशमसम्भावनया हर्षप्रकर्षेण अञ्चितनेत्रपद्मा प्रफुल्लनेत्रा सती तं वत्सराजमाह्वयामास, स भिषग्वैद्यः तस्या व्यन्तर्या निदेशादाज्ञातः मायामाडम्बरमधिष्ठायाश्रित्य पुरा आदौ विस्तरं चिकित्सावाहुल्यम् आततानानुतस्थौ ॥२२८॥

सुरी परेद्युर्जलहारिणी साऽवदीत् कुमारं रहसि प्रसन्ना।
करव्यथायाः शमनाद् ममैषा चेत् स्वामिनी तुष्यति भद्र! तुभ्यम् ॥२२९॥
तदैव सौधोपरि वर्तमानं कन्यायुगं मन्मथरूप! नायेः।
तयाऽभ्यल्पा प्रतिरूपयत्नं पल्यंककं कामितदानदक्षम् ॥२३०॥ युग्मम् ॥

सुरीति—परेद्युः अन्यस्मिन् दिने प्रसन्ना कुतोऽपि सौभाग्यादिहेतोरनुरागवती जलहारिणी सा सुरी व्यन्तरी कुमारं वत्सराजं रहसि एकान्ते अवादीत्, किमित्याह–भद्र! करव्यथायाः शमनात् शान्तेर्हेतोश्चेन्मम एषा स्वामिनी तुभ्यं त्वयि तुष्यति प्रसीदति, तदा एव, नत्वन्यथा, मन्मथरूप! कामाकृते! सौधोपरि वर्तमानं कन्यायुगं कन्याद्वयं तथा प्रतिरूपम्

अप्रतिरूपमसाधारणं यक्षम्, तथा, कामितस्येष्टस्य दाने लक्ष्यम् समर्थम् पल्यङ्कं पर्यङ्कं नाथेः याचेथाः ॥युग्मम् ॥२२९॥२३०॥

व्यथाऽपनोदाय ततश्च तस्या निर्माय निर्माय सविस्तरं तम् ।
तदौषधीयुग्ममपि प्रयुज्य तद्यातनां तां स निराचकार ॥२३१॥

व्यथेति—ततोऽनन्तरम् च तस्या व्यन्तर्या व्यथाया अपनोदाय प्रशमाय तं सविस्तर-माडम्बरं निर्माय निर्माय, भृशार्थे द्विरुक्तिः । तत्प्रागुक्तामौषधीयुग्ममपि प्रयुज्य स वत्सराजः तां खड्गप्रहारजनितां तस्या व्यन्तर्याः यातनां तीव्रवेदनाम् "यातना तीव्रवेदने"त्यमरः ॥ निरा-चकार चिकित्साञ्चक्रे ॥२३१॥

सुरीश्वरी व्यन्तरनायिका सा तोषाद् बभाषे तमपेतबाधा ।
इमं ममानर्थमजीजनस्त्वमामेति तेनाऽभिहिते त्ववादीत् ॥२३२॥

सुरीति— सा व्यन्तरनायिका सुरीश्वरी देवीश्रेष्ठा अपेतबाधा शान्तपीडा सति तोषा-त्प्रसादपूर्वकम् तं वत्सराजं बभाषे पप्रच्छ, किमित्याह, ममेमं प्रस्तुतमनर्थं करपीडारूपं त्वम् अजीजनः ? व्यधाः ? आम इत्येवं स्वीकृतिवचनं तेन वत्सराजेन अभिहिते कथिते सति तु पुनः अवादीत्, सा व्यन्तरीत्यर्थाल्लभ्यते ॥२३२॥

किमवादीदित्याह—

त्वदाहितात् साहसतोऽस्मि तुष्टा किंचित्तदिष्टं मनसो वृणीष्व ।
इतीरितः सोऽपि तथैव धन्यः कन्यादिकं तत् प्रथमं ययाचे ॥२३३॥

त्वेति—त्वया आहितात्कृतात् साहसतः तुष्टा—अस्मि, तत्ततः मनसः इष्टमभिलषितं—किञ्चिद्वृणीष्व, इतीत्थमीरितः कथितः सन् स धन्यः वत्सराजोऽपि प्रथममादौ तथैव जल—हारिणी दर्शितदिशैव, तत्कथितं कन्यादिकं ययाचे ॥२३३॥

तमाह माहात्म्यनिधिः पुनः सा पुत्र ! ध्रुवं गेहभिदाऽत्र जज्ञे ।
सकर्ण ! कन्यादिजनिं ततस्त्वं मत्तः समाकर्णय चाप्रमत्तः ॥२३४॥

तमाहेति—सा माहात्म्यनिधिः महाप्रभावा, पुनः व्यन्तरी तं वत्सराजमाह—किमित्याह पुत्र ! अत्र गेहभिदा गृहमर्मप्रकाशकेन जज्ञे जातम्. ध्रुवं निश्चितमेतम्, कथमन्यथा ते गृह-रहस्यज्ञानाद्धेतोः अप्रमत्तः सावधानः सन् त्वम् मत्तः, मत्सकाशात् कन्यादीनां जनिमुत्पत्तिं समाकर्णय ॥२३४॥

इहास्ति वर्षे कृतलोकहर्षे वैताढ्यभूमीधरभूषणं पूः ।
अभिख्यया या चमरादिचञ्चा चञ्चन्महाखेचरवेश्मरम्या ॥२३५॥

इहेति—कृतः लोकाना हर्षः येन तादृशे लोकमनोहरे इह भारतेवर्षे वैताढ्यभूमीधरस्य विभूषणं तद्रूपम् चञ्चद्भिः स्फुरद्भिः महाखेचराणां वेश्मभिः भवनैः रम्या पूर्नगरी अस्ति, या नगरी अभिख्यया नाम्ना चमरादि चञ्चा चमरचञ्चानाम्नी ॥२३५॥

प्रशास्ति तां शत्रुतृणौघगन्ध-वाहः क्षितीशः खलु गन्धवाहः ।
वधूद्वयं तस्य सुवेगिकाऽऽद्या जज्ञे द्वितीया मदनादि वेगा ॥२३६॥

प्रशेति— तां चमरचञ्चापुरीम् शत्रुरूपे तृणौघे उत्सादकत्वाद् गन्धवाहः पवन इव क्षितीशः गन्धवाहः तदाख्यः प्रशास्ति खलु । तस्य गन्धवाहस्य वधूद्वयम्, तयोराद्या प्रथमा सुवेगिका तदाख्या, द्वितीया मदनादिवेगा मदनवेगाख्येत्यर्थः ॥२३६॥

तयोः सुते द्वे क्रमशोऽप्यभूतां श्रीरत्नचूला रमणीषु रत्नम् ।
परा प्रतीता कनकादि चूला रम्भाप्रतिद्वन्द्वितयेव सृष्टा ॥२३७॥

तयोरिति—तयोः सुवेगिकामदनवेगयोः क्रमशः द्वे सुते कन्ये अपि अभूताम् । तत्रैका रमणीषु रत्नमुत्तमा श्रीरत्नचूला तदाख्या, परा द्वितीया रम्भायाः प्रसिद्धाप्सरसः प्रतिद्वन्द्वितया प्रतिस्पर्धयेन सृष्टा विधिना निर्मिता कनकादिचूला कनकचूला नाम्नीत्यर्थः ॥२३७॥

सरस्वति वार्धिसुते इव द्वे विद्याधराधीश्वरपुण्ययोगात् ।
गृहेऽवतीर्णे समवेक्ष्य कस्ते न प्राप्त्यभावादभवद् विलक्षः ॥२३८॥

सरेति—विद्याधराधीश्वरस्य गन्धवाहस्य पुण्ययोगात् एव तादृशसुतोत्पत्तिः सम्भव इति भावः । गृहे अवतीर्णे उत्पन्ने सरस्वति च वार्धिसुता लक्ष्मीश्च ते इव ते . श्रीरत्नचूलाकनकचूले ते द्वे समवेक्ष्य दृष्ट्वा कः प्राप्त्यभावादप्राप्ते विलक्षः खिन्नः न अभवत् अपि तु सर्व एव तादृशकन्याद्वयाऽप्राप्तेः खिद्यतिस्मेत्यर्थः ॥५३८॥

पितुः समालोकयताऽपरेद्युस्ते यौवनोद्भेदविशेषरम्ये ।
वरैकचिन्ताप्रसितस्य कोऽपि नैमित्तिकः संसदमाससाद ॥२३९॥

पितुरिति—अपरेद्युरेकदा यौवनस्योद्भेदेन प्रकटनेन विशेषेण रम्ये ते द्वे कन्ये समालोकयतः अतएव वरस्यैका बलवती या कोऽनयोवरो भावीत्येवं चिन्ता तस्यां प्रसितस्य मग्नस्य पितुः गन्धवाहस्य स्वत एव कोऽपि नैमित्तकः दैवज्ञः संसदं सभामाससाद प्राप ॥२३९॥

इमां ततस्त्वं स्वगुणार्थशक्तिक्रीतां समादत्स्व महानुभाव ! ।
निमित्तमात्रेण मया प्रदाने संबन्धवृत्त्यैव भविष्यतेऽस्याः ॥२०४॥

इमामिति—ततः तस्मान्महोपकाराद्धेतोः महानुभाव ! स्वस्य गुणा एव अर्थशक्तिः धनबलम् तया क्रीतां स्वायत्तीकृतामिमां मत्पुत्रीं श्रीदत्तां समादत्स्व गृहाण । ननु तव पुत्री त्वया दत्तैव ग्राह्येति चेत्तत्राह–अस्याः मम पुत्र्याः प्रदाने तुभ्यं समर्पणे संबन्धवृत्त्या जन्यजनकभावसम्बन्धवत्त्वेन हेतुना मया दत्तेन निमित्तमात्रेण भविष्यते, कन्यादाने सम्बन्धवानहं निमित्तमात्रं परमार्थतस्तु त्वया गुणक्रीतैवेयमिति यावत् ॥२०४॥

अवोचदेषोऽपि कथं कुलाद्य विज्ञाय मे तात ! ददासि कन्याम् ।
उपेक्षणीयाऽपि न चापरीक्ष्य देया तथा साऽपयशस्तनोति ॥२०५॥

अवोचेति—एष वत्सराजोऽप्यवोचत्, किमित्याह–तात ! कुलादि अविज्ञाय अज्ञात्वैव मे मह्यं कन्यां कथं ददासि ? दातुं नोचितमिति, ययोरेव समं कुलमित्युक्तेरिति भावः । पक्षान्तरेऽनुपपत्तिमाह–उपेक्षणीया दोषादिसद्भावाद्धेतोः अनभिमताऽपि पुत्रीत्यर्थाल्लभ्यते, अपरिक्ष्य कुलाद्यपर्यालोच्य नच नैव देया, तथा अपरीक्ष्य दत्ता सा पुत्री अपयशः तनोति दुष्कीर्तिमुत्पादयतीत्यर्थः ॥२०५॥

भवादृशा नापयशःपदं स्युः पुण्याशया वृत्तविदां पुरोगाः ।
विना नयस्य प्रतिपत्तिमत्र केषां न केषामयशःप्रवृत्तम् ? ॥२०६॥

भवेति—वृत्तविदां व्यवहारिणां पुरोगा अग्रेसराः पुण्याशयाः धर्मनिष्ठावन्तः भवादृशाः सुजनाः अपयशसः पदमास्पदं न स्युः भवादृशानां कुतोऽपि हेतोरपकीर्ति युज्यते इत्यर्थः ॥ अपयशसः सम्भवं दर्शयति–अत्र लोके नयस्य नीतिशास्त्रस्य प्रतिपत्तिं विना नीतिमनालम्बेत्यर्थः । केषां केषां, वीप्सायां द्विर्भावः । अयशः न प्रवृत्तम्, अपितु सर्वेषामेवानपानुसारिणामयशो जातमेवेति भावः ॥२०६॥

अथाऽभिलाषस्तव सत्क्रियायां सा किं न शक्याऽप्यपरोपचारैः ? ।
विधीयते तत्किल कर्म साधो ! सम्पादितं यच्च करोति सातम् ॥२०७॥

अथेति—अथ पक्षान्तरे तव सत्क्रियायाम् मम सत्कारे अभिलाष इच्छा चेत्तर्हि–सा सत्क्रिया अपरैः उपचारैः प्रकारैरपि किं शक्या न ? अपि तु शक्यैवेत्यर्थः । किल तस्माद्धेतोः साधोः तत्तादृशं कर्म क्रिया विधीयते । यत्कर्मसम्पादितं कृतं सत् सातं कल्याणं करोति नत्वयश इत्यर्थः ॥२०७॥

इतीरितं तस्य निशम्य हर्म्यो प्रोवाच वाचस्पतिवद् विदग्धः ।
कुलादिकं व्याहृतमेव वत्स ! युष्मद्गुणैः शौर्यविवेकमुख्यैः ॥२०८॥

इतीति—इत्युक्तप्रकारं तस्य वत्सराजस्येरितं कथितं निशम्य वाचस्पतिवद् देवगुरुवद् विदग्धः धीमान् हर्म्यः सप्तभूमः प्रासादोऽस्यास्तीति स महेभ्यः दत्तः प्रोवाच किमित्याह—वत्स ! शौर्यं विवेकश्च मुख्यं येषां तैः युष्मद्गुणैः कुलादिकम् व्याहृतं सूचितमेव, नह्यकुलीने तादृशगुणानां सम्भव इति नाज्ञातकुलशीलादिर्भवानित्यर्थः ॥२०८॥

उपेक्ष्यते चेत्तनया किमर्थं स्वां जन्मभूमिं स्वपुरं विहाय ? ।
पुरं क्रियेताऽत्र सदेकमर्त्यं संहारमप्याऽऽद्रियतां क एतम् ? ॥२०९॥

अपेक्ष्यते—यदप्ययुक्तमुपेक्षणीयाऽपीत्यादिना, तत्रेयमुपेक्ष्येत्याह-तनया स्वपुत्री उपेक्ष्यते अवमानिता चेत्स्यात्तदा, किमर्थं कस्मै प्रयोजनाय स्वां जन्मभूमिं स्वपुरं निजनगरं विहाय-त्यक्त्वा अत्र निर्जने वने पुरं नगरं क्रियेत रच्येत ? किञ्च कः जनः सदा—एवं प्रस्तुतम् एकस्य मर्त्यस्य मनुष्यस्य संहारं नाशं पुत्रीरक्षणार्थमिति प्रकरणाल्लभ्यते आद्रियताम् करोतु ? नकोऽपीत्यर्थः । उपेक्ष्या चेत्स्यात्तस्या एकस्या एव त्यागेनेष्टोपपत्तिरिति तदकृत्वा एतादृशाव्यवसाय एव तस्या अनुपेक्षणीयत्वे प्रमाणमिति भावः ॥२०९॥

विलोकनेनैव मणिप्रभाणां ये कुर्वते निर्णयमेकदृष्ट्या ।
नृरत्नमालोक्य विनिर्णयं ते कर्तुं जडाः किं किमुताथ मूकाः ? ॥२१०॥

विलोकेति—नच त्वयि कुलीनत्वादिबुद्धिरयथार्थेत्याह—ये मादृशाः रत्नव्यवहारिणः एकदृष्ट्या सकृदेव विलोकनेनैव, नतु योग्यपरीक्षान्तरद्वाराऽपीत्येवकारेण स्वस्य वस्तुयाथात्म्यज्ञान-पुण्यं सूचितम्, मणिप्रभाणां मणिकान्तीनां निर्णयम् एतादृशस्य मणेरीदृक्कान्तिरित्येवं निश्चयं कुर्वते, प्रभां दृष्ट्वैव मणिशुद्धतादि याथातथ्येन विदन्ति, ते तादृशा मादृशाः नृरत्नं पुरुषश्रेष्ठमवलोक्य विनिर्णयं कर्तुम् अयं कीदृशः ? इति निश्चेतुं जडाः मन्दबुद्धयः किम् ? नैवेत्यर्थः । उताथ अथवा मूकाः किम् ? नैवेत्यर्थः । मादृशा रत्नपरीक्षकाः रत्नं दृष्ट्वा नैव मुह्यन्ति इति भावः ॥२१०॥

स्वनिर्णये हेतुमाह—

परोपकारप्रवणाशयत्वं लोकोत्तरं ते कुलमब्रवीद् मे ।
प्रभाकृतो यादृशमस्ति तेजः खद्योतपोते हि न तादृशं स्यात् ॥२११॥

परोपेति—मे मम ते तव लोकोत्तरमसाधारणं परोपकारे प्रवणतत्पर आशयोऽभिप्रायो यस्य तद्भाव एव परोपकारबुद्धिरेव कुलम् तवेत्यर्थत्वाल्लभ्यते, अब्रवीत् ननु नैष नियमो यत्कुलीन एव परोपकारी इति चेद्भवतु तावदेवम्, तथापि उभयोर्वैलक्षण्यमेवेत्याह—हि यतः

प्रभाकृतः सूर्यस्य यादृशं तेजः अस्ति तादृशं तेजः खद्योतस्य पोते शिशौ, खद्योते इति यावत्, न स्यात् । अत्र वैधर्म्येण दृष्टान्तालङ्कारः ॥२११॥

त्वयैव संयोगमवाप्य पुत्री पुण्यैरमीभिर्न कथं यशांसि ।
कुलस्य मालिन्यविलोपनेन सम्प्रापयिष्यत्यचिरेण मैषा ॥२१२॥

त्वयैवेति—एषोपस्थिता पुत्री मम कन्या त्वया एव नत्वन्येन संयोगं सम्बन्धमवाप्य कुलस्य मालिन्यस्य अद्यावधि पुरुषध्वंसजन्यदुरपवादस्य विलोपनेन दूरीकरणेन हेतुना अमीभिः स्वेतरक्षणजन्यैः पुण्यैः मा माम् अचिरेण शीघ्रमेव यशांसि कथं कुतो न सम्प्रापयिष्यति ? अपि तु त्वया सम्बन्धमेत्य मम यशोलाभोऽवश्यं भवितेति भावः ॥२१२॥

दुराग्रहं तस्य विबुध्य वत्सो व्याचष्ट यद्येवमहो ! पुरस्तात् ।
विधाय कार्यं समुपैमि पश्चात्तातस्य निर्देशमहं विधास्ये ॥२१३॥

दुरेति—तस्य दत्तस्य दुराग्रहमत्याग्रहम् नतु दुष्टम् कन्यास्वीकारप्रार्थनस्य दुष्टत्वाभावादिति बोध्यम् । विबुध्य ज्ञात्वा वत्सः वत्सराजः प्रोवाच, किमित्याह—पुरस्तात् प्राथमिकम् कार्यं स्वप्रतिज्ञातं विधाय अहं समुपैमि, पश्चात् तातस्य तव दत्तस्य निर्देशमाज्ञां विधास्ये ? ॥२१३॥

इति ब्रुवन्तं स महेभ्यदत्तस्तं गाढमभ्यर्थ्य निजां तनूजाम् ॥
विवाहयामास महोत्सवेन पद्मालयां विष्णुमिवाम्बुराशिः ॥२१४॥

इतीति—इत्युक्तप्रकारेण ब्रुवन्तं तं वत्सराजम् गाढमतिशयमभ्यर्थ्य प्रार्थ्य स महेभ्यः दत्तः महोत्सवेन निजां तनुजां पुत्रीम् अम्बुराशिः समुद्रः पद्मालयां स्वपुत्रीं लक्ष्मीम्—"लक्ष्मीः पद्मालया पद्मे" त्यमरः । विष्णुमिव विवाहयामास ॥२१४॥

तमस्विनीं तामतिवाह्य तत्र वृत्तं प्रतिज्ञाप्रतिपत्तिपूर्वम् ।
निजं समाख्याय महेभ्यपुत्र्यै प्रातः प्रतस्थे स्थितिमान् स वत्सः ॥२१५॥

तमेति—तत्र दत्तगृहे तां विवाहसम्बन्धिनीं तमस्विनीं रात्रिमतिवाह्य व्यतीत्य प्रतिज्ञा-प्रतिपत्तिपूर्वम् प्रतिज्ञाकरणादारभ्य निजं वृतं महेभ्यपुत्र्यै श्रीदत्तायै समाख्याय स्थितिमान् मर्यादापालकः स वत्सः प्रातः प्रतस्थे चलितवान् ॥२१५॥

महाटवीं श्वापदसंकुलां तामेतां समन्तादपि पर्यटन् सः ।
विशालशालैः कलितं पुरस्ता-देकं पुरं प्रैक्षत निस्तरङ्गः ॥२१६॥

महेति—निस्तरङ्गोऽचञ्चलः स्थिरबुद्धिरिति यावत् । स वत्सराजः तामेतां प्रस्तुतां समन्तादपि सर्वतोऽपि श्वापदैः व्याघ्रादिभिः संकुलां व्याप्तां महाटवीं पर्यटन् पुरस्तादग्रतः विशालैः वृक्षैः प्राकारैर्वा कलितं समन्वितम् एकं पुरं प्रैक्षत ददर्श ॥२१६॥

अचिन्तयच्चाद्भुतरत्नक्लृप्तप्राकारविभ्राजि पुरं किमेतत् ?।
न दृश्यते यत्र चतुष्पदानां बौद्धे मते जातिरपि प्रवृत्ता ॥२१७॥

अचीति—अचिन्तयच्च, किमित्याह—अद्भुतैः रत्नैः क्लृप्तेन निर्मितेन प्राकारेण कोट्टेन विभ्राजते इत्येवं शीलमेतद् दृश्यमानं पुरं किम् ? कीदृशं किं नामधेयं वा। यत्र पुरे बौद्धे मते बौद्धदर्शने इव चतुष्पदानां गवादीनां जातिः सा मान्यमपि, एकाऽपि गौर्महिषीप्रभृतिर्वा प्रवृत्ता सञ्चरमाणा न दृश्यते ?। बौद्धानां मते जातिः गोत्वादिका न स्वीकृता, तन्मते सर्वपदार्थानां क्षणिकत्वादिति बोध्यम् ॥२१७॥

विचिन्त्य चैवं घनपद्मजाति पद्माकरे क्षालितविग्रहोऽयम्।
श्रमापनोदाय स पालिशालच्छायां समालम्ब्य मनाग् निषण्णः ॥२१८॥

विचीति—एवमुक्तप्रकारेण विचिन्त्य च घना निरन्तरा पद्मजातिः कमलसमूहः यस्मिन् तादृशे पद्माकरे तडागे—"पद्माकरस्तडागोऽस्त्री"त्यमरः। क्षालितविग्रहः स्नातः स त्वयं स वत्सराजः श्रमस्याध्वखेदस्यापनोदाय दूरीकरणाय पाल्यां तटे शालस्य वृक्षस्य च्छायां समालम्ब्याऽऽश्रित्य मनाक् किञ्चित्कालं निषण्ण उपविष्टवान् ॥२१८॥

निरीक्ष्य नारीजनमेव तत्र नीरं घटैरेव समाहरन्तम्।
पुनः पुनः पुण्यमतिः स चैकां रामां बभाषे रमणीयमूर्तिम् ॥२१९॥

निरीति—तत्र तडागे नारीजनमेव न तु नरमपि घटैरेव न तु पात्रान्तरैः पुनः पुनः समाहरन्तम् नयन्तं निरीक्ष्य पुण्यमतिः निश्चलबुद्धिः स वत्सराजः एकां कश्चिद्रमणीयमूर्तिम् सुन्दराकारां रामां स्त्रियं बभाषे पृष्टवान् ॥२१९॥

तत्प्रश्नमेवाह—

इयं पुरी का सुतनु ! प्रशास्ता को वाऽत्र गोत्राधिपतिर्द्विधापि।
म्रदीयसीभिर्भवतीभिरेतद् भूयस्तमां वारि किमुह्यते वा ? ॥२२०॥

इयमिति-सुतनु ! शोभनाङ्गि ! इयं पुरो दृश्यमाना पुरी का किमाख्या ? वा तथा अत्र पुर्याम् द्विधा गोत्रस्य कुलस्य गोत्रायाः पृथिव्याश्चेति—प्रकारद्वयेनाऽपि अधिपतिः कः कुलीनो महीपतिः प्रशास्ता शासकः ? वा तथा म्रदीयसीभिः अत्यन्तं कोमलाङ्गीभिः भवतीभिः भूयस्तमां पुनः पुनः एतद्वारि जलं किं किमर्थमुह्यते नीयते ? ॥२२०॥

तदुक्तवाणीश्रवणोपलब्धरोमाञ्चिताङ्ग्या स तयाऽप्यभाणि।
इमां पुरीं व्यन्तरवध्व एव भद्र ! व्यधुः स्वैरविहारहेतोः ॥२२१॥

तदुक्तेति—तेन वत्सराजेनोक्तायाः वाण्याः श्रवणोपलम्भेन श्रावणप्रत्यक्षेन रोमाञ्चिताङ्गा तया नार्याऽपि स वत्सराजः अभाणि कथितः, किमित्याह—भद्र ! स्वैरं—यथेष्टं यो विहारस्तद्धेतोः व्यन्तरवध्वः एव इमां दृश्यमानां पुरीं व्यधुः रचयमासुः ॥२२१॥

एवं पुरीवृत्तमुक्त्वा तत्पतिं जलाहरणकारणं च आह—

इदं पुरी स्वामिपदं बभार या व्यन्तरीणां च तथा समासाम् ।
क्वचिद् गता सा व्यथिता सुतीक्ष्णखड्गप्रहारेण करारविन्दे ॥२२२॥

इदमिति—या व्यन्तरी अस्या पुर्याः स्वामिपदं स्वामित्वम् तथा समासां सर्वासां व्यन्तरीणां च स्वामिपदमिति सम्बध्यते, विशेषस्य सापेक्षत्वेऽपि समास इति बोध्यम् सा व्यन्तरी, क्वचिद् गता सती करारविन्दे सुतीक्ष्णस्य खड्गस्य प्रहारेण व्यथिता सम्प्रतीति भावः ॥२२२॥

तस्या वृत्तान्तरमप्याह—

प्रसेदुषा व्यन्तरनायकेन तस्या वितीर्णं वलयाकृतीऽयम् ।
यदौषधीद्वन्द्वमवाप्तबाध हस्तात् तदा तत् पतितं विहस्तात् ॥२२३॥

प्रेति—प्रसेदुषा प्रसन्नेन व्यन्तरनायकेन तस्याः व्यन्तर्याः कृते ईडयम् उत्कृष्टगुणयुक्तत्वात्प्रशस्यम् वलयस्याकृतिरिवाकृतिर्यस्य तादृशं यद् औषधीद्वन्द्वं वितीर्णम्, तदौषधद्वन्द्वं तदा खड्गप्रहारानन्तरम् विहस्ताद्भयात्, हेतुगर्भं विशेषणमाह—अवाप्ता बाधा पीडा येन तादृशात्तस्या एव हस्तात्करात्पतितम् ॥२२३॥

औषधीद्वन्द्वमाहात्म्यमाह—

समस्तशास्त्रोपनिपातघाततीव्रव्यथासंहरणाय चैका ।
प्रकुर्वती त्वा घनधूमपूरं सम्पद्यते लोकविमोहनाय ॥२२४॥

समस्तेति—एका तयोः ऐक्याच समस्तानां शास्त्राणामुपनिपातेन प्रहारेण घातस्यतीव्रव्यथायाः संहरणायापनयनाय, सम्पद्यते, त्वा अन्या घनानां गाढानां धूमानां पूरमोघं प्रकुर्वती सती लोकानां विमोहनाय आन्ध्याय सम्पद्यते ॥२२४॥

न तत्प्रयोगेण विना तदीयपाणेर्व्यथाः शान्तिमधिश्रयन्ते ।
जलाभिषेकेण च किञ्चनापि तेनैव वारीणि वहामहेऽरम् ॥२२५॥

नेति—तेन औषधीरूपेण प्रयोगेण विना तदीयपाणेः व्यथाः शान्ति न अधिश्रयन्ते व्यथा न शाम्यन्तीति भावः । जलस्याभिषेकेण सिञ्चनेन च किञ्चनापि मनागेव, शान्तिमधिश्रयन्ते इति सम्बध्यते, तेनैव हेतुना वारीणि जलानि अरं शीघ्रं वहामहे ॥२२५॥

अथ वत्सराजोक्तिमाह—

नरागदङ्कारविचारसारमाप्तप्रतिष्ठोऽस्मि मदौषधेन।
करव्यथायाः प्रशमो यदि स्यात् तस्या निगाद्यं तदिदं भवत्या ॥२२६॥

नरेति—नराणामगदङ्कारेषु वैद्येषु विचारसारेणानुभवविशेषेण प्राप्तप्रतिष्ठः पूजितः अस्मि, अहमितिलभ्यते। मदौषधेन करव्यथायाः तव स्वामिन्याः पाणिपीडायाः प्रशमः शान्तिः यदि स्यात् सम्भाव्यते इत्यर्थः तत्तत: इदं मदुक्तं भवत्या तस्याः त्वत्स्वामिन्या व्यन्तर्या निगाद्यं कथनीयम् ॥२२६॥

तदीरितं चेतसि सा निधाय देव्याः पुरस्तात् त्वरितं बभाषे।
विलम्बमालम्ब्य न हि प्रवृत्तिः स्व स्वामिकार्याहितमानसानाम् ॥२२७॥

तदीति—सा व्यन्तरी तस्य वत्सराजस्य ईरितं कथितं चेतसि निधाय धारयित्वा त्वरितं शीघ्रमेव देव्याः स्वामिन्याः पुरस्ताद्बभाषे। तस्याः शीघ्रोक्तिं समर्थयति-स्वेति—स्वस्य स्वामिनः कार्ये आहितं-भग्नं मानसं येषां तेषाम् स्वामिभक्तानाम् हि यतः विलम्बमालम्ब्य प्रवृत्तिः—व्यापारः न। स्वामिभक्ता, स्वामिहिताय शीघ्रमेव प्रवर्त्तन्ते न तु समया कुर्वन्तीति भावः ॥२२७॥

तमाह्वयामास तदैव देवी हर्षप्रकर्षाञ्चितनेत्रपद्मा।
पुरा भिषग्विस्तरमाततान मायामधिष्ठाय स तन्निदेशात् ॥२२८॥

तमिति—तदा कथनानन्तरमेव देवी व्यन्तरी नायिका पीडोपशमसम्भावनया हर्षप्रकर्षेण अञ्चितनेत्रपद्मा प्रफुल्लनेत्रा सती तं वत्सराजमाह्वयामास, स भिषग्वैद्यः तस्या व्यन्तर्या निदेशादाज्ञातः मायामाडम्बरमधिष्ठायाश्रित्य पुरा आदौ विस्तरं चिकित्साबाहुल्यम् आततानानुतष्ठौ ॥२२८॥

सुरी परेद्युर्जलहारिणी साऽवदीत् कुमारं रहसि प्रसन्ना।
करव्यथायाः शमनाद् ममैषा चेत् स्वामिनी तुष्यति भद्र! तुभ्यम् ॥२२९॥
तदैव सौधोपरि वर्तमानं कन्यायुगं मन्मथरूप! नाथेः।
तथाऽश्वरूपा प्रतिरूपयक्षं पल्यंककं कामितदानलक्ष्यम् ॥२३०॥ युग्मम् ॥

सुरीति—परेद्युः अन्यस्मिन् दिने प्रसन्ना कुतोऽपि सौभाग्यादिहेतोरनुरागवती जलहारिणी सा सुरी व्यन्तरी कुमारं वत्सराजं रहसि एकान्ते अवादीत्, किमित्याह—भद्र! करव्यथायाः शमनात् शान्तेर्हेतोश्चेन्मम एषा स्वामिनी तुभ्य त्वयि तुष्यति प्रसीदति, तदा एव, नत्वन्यथा, मन्मथरूप! कामाकृते! सौधोपरि वर्त्तमानं कन्यायुगं कन्याद्वयं तथा अश्वरूपम्

अप्रतिरूपमसाधारणं यक्षम्, तथा, कामितस्येष्टस्य दाने दक्ष्यम् समर्थम् पल्यङ्ककं पर्यङ्कं नाथेः याचेथाः ॥युग्मम् ॥२२९॥२३०॥

व्यथाऽपनोदाय ततश्च तस्या निर्माय निर्माय सविस्तरं तम् ।
तदौषधीयुग्ममपि प्रयुज्य तद्यातनां तां स निराचकार ॥२३१॥

व्यथेति—ततोऽनन्तरम् च तस्या व्यन्तर्या व्यथाया अपनोदाय प्रशमाय तं सविस्तर-माडम्बरं निर्माय निर्माय, भृशार्थे द्विरुक्तिः । तत्प्रागुक्तामौषधीयुग्ममपि प्रयुज्य स वत्सराजः तां खड्गप्रहारजनितां तस्या व्यन्तर्याः यातनां तीव्रवेदनाम् 'यातना तीव्रवेदने''त्यमरः ॥ निरा-चकार चिकित्साञ्चक्रे ॥२३१॥

सुरीश्वरी व्यन्तरनायिका सा तोषाद् बभाषे तमपेतबाधा ।
इमं ममानर्थमजीजनस्त्वमामेति तेनाऽभिहिते त्ववादीत् ॥२३२॥

सुरीति—सा व्यन्तरनायिका सुरीश्वरी देवीश्रेष्ठा अपेतबाधा शान्तपीडा सति तोषा-त्प्रसादपूर्वकम् तं वत्सराजं बभाषे पप्रच्छ, किमित्याह, ममेमं प्रस्तुतमनर्थं करपीडारूपं त्वम् अजीजनः ? व्यधाः ? आम इत्येवं स्वीकृतिवचनं तेन वत्सराजेन अभिहिते कथिते सति तु पुनः अवादीत्, सा व्यन्तरीत्यर्थाल्लभ्यते ॥२३२॥

किमवादीदित्याह—

त्वदाहितात् साहसतोऽस्मि तुष्टा किंचित्तदिष्टं मनसो वृणीष्व ।
इतीरितः सोऽपि तथैव धन्यः कन्यादिकं तत् प्रथमं ययाचे ॥२३३॥

त्वेति—त्वया आहितात्कृतात् साहसतः तुष्टा—अस्मि, तत्ततः मनसः इष्टमभिलषितं—किञ्चिद्वृणीष्व, इतीत्थमीरितः कथितः सन् स धन्यः वत्सराजोऽपि प्रथममादौ तथैव जल—हारिणी दर्शितदिशैव, तत्कथितं कन्यादिकं ययाचे ॥२३३॥

तमाह माहात्म्यनिधिः पुनः सा पुत्र ! ध्रुवं गेहभिदाऽत्र जज्ञे ।
सकर्ण ! कन्यादिजनिं ततस्त्वं मत्तः समाकर्णय चाप्रमत्तः ॥२३४॥

तमाहेति—सा माहात्म्यनिधिः महाप्रभावा, पुनः व्यन्तरी तं वत्सराजमाह—किमित्याह पुत्र ! अत्र गेहभिदा गृहमर्मप्रकाशकेन जज्ञे जातम्, ध्रुवं निश्चितमेतम्, कथमन्यथा ते गृह-रहस्यज्ञानाद्धेतोः अप्रमत्तः सावधानः सन् त्वम् मत्तः, मत्सकाशात् कन्यादीनां जनिमुत्पत्तिं समाकर्णय ॥२३४॥

इहास्ति वर्षे कृतलोकहर्षे वैताढ्यभूमीधरभूषणं पूः ।
अभिख्यया या चमरादिचञ्चा चञ्चन्महाखेचरवेश्मरम्या ॥२३५॥

इहेति—कृतः लोकाना हर्षः येन तादृशे लोकमनोहरे इह भारतेवर्षे वैताढ्यभूमीधरस्य विभूषणं तद्रूपम् चञ्चद्भिः स्फुरद्भिः महाखेचराणां वेश्मभिः भवनैः रम्या पूर्नगरी अस्ति, या नगरी अभिख्यया नाम्ना चमरादि चञ्चा चमरचञ्चानाम्नी ॥२३५॥

प्रशास्ति तां शत्रुतृणौघगन्ध-वाहः क्षितीशः खलु गन्धवाहः ।
वधूद्वयं तस्य सुवेगिकाऽऽद्या जज्ञे द्वितीया मदनादि वेगा ॥२३६॥

प्रशेति— तां चमरचञ्चापुरीम् शत्रुरूपे तृणौघे उत्सादकत्वाद् गन्धवाहः पवन इव क्षितीशः गन्धवाहः तदाख्यः प्रशास्ति खलु । तस्य गन्धवाहस्य वधूद्वयम्, तयोराद्या प्रथमा सुवेगिका तदाख्या, द्वितीया मदनादिवेगा मदनवेगाख्येत्यर्थः ।२३६॥

तयोः सुते द्वे क्रमशोऽप्यभूतां श्रीरत्नचूला रमणीषु रत्नम् ।
परा प्रतीता कनकादि चूला रम्भाप्रतिद्वन्द्वितयेव सृष्टा ॥२३७॥

तयोरिति—तयोः सुवेगिकामदनवेगयोः क्रमशः द्वे सुते कन्ये अपि अभूताम् । तत्रैका रमणीषु रत्नमुत्तमा श्रीरत्नचूला तदाख्या, परा द्वितीया रम्भायाः प्रसिद्धाप्सरसः प्रतिद्वन्द्वितया प्रतिस्पर्धयेन सृष्टा विधिना निर्मिता कनकादिचूला कनकचूला नाम्नीत्यर्थः ॥२३७॥

सरस्वति वार्धिसुते इव द्वे विद्याधराधीश्वरपुण्ययोगात् ।
गृहेऽवतीर्णे समवेक्ष्य कस्ते न प्राप्त्यभावादभवद् विलक्षः ॥२३८॥

सरेति—विद्याधराधीश्वरस्य गन्धवाहस्य पुण्ययोगात् एव तादृशसुतोत्पत्तिः सम्भव इति भावः । गृहे अवतीर्णे उत्पन्ने सरस्वति च वार्धिसुता लक्ष्मीश्च ते इव ते, श्रीरत्नचूलाकनकचूले ते द्वे समवेक्ष्य दृष्ट्वा कः प्राप्त्यभावादप्राप्ते विलक्षः खिन्नः न अभवत् अपि तु सर्व एव तादृशकन्याद्वयाऽप्राप्तेः खिद्यतिस्मेत्यर्थः ॥५३८॥

पितुः समालोकयताऽपरेद्युस्ते यौवनोद्भेदविशेषरम्ये ।
वरैकचिन्ताप्रसितस्य कोऽपि नैमित्तिकः संसदमाससाद ।.२३९॥

पितुरिति—अपरेद्युरेकदा यौवनस्योद्भेदेन प्रकटनेन विशेषेण रम्ये ते द्वे कन्ये समालोकयतः अतएव वरस्यैका बलवती या कोऽनयोवरो भावीत्येवं चिन्ता तस्यां प्रसितस्य मग्नस्य पितुः गन्धवाहस्य स्वत एव कोऽपि नैमित्तकः दैवज्ञः संसदं सभामाससाद प्राप ॥२३९॥

चिराय जीवेति कृताशिषं तं पार्श्वे निविष्टं स नृपोऽप्यपृच्छत् ।
वरः कुमार्योरनयोर्ममाङ्ग ! को विज्ञ ! भावी विनिवेदयस्व ! ॥२४०॥

चिरायेति—चिराय जीवेतीत्थं कृताशिषं दत्ताशीर्वादम् पार्श्वे निविष्टमुपविष्टं तं दैवज्ञं स नृपः गन्धवाहोऽप्यपृच्छत्, किमित्याह–अङ्ग ! विज्ञः ! अनयोः पुरस्थयोः कुमार्योः कः वरो भावी इति विनिवेदयस्व कथय ॥२४०॥

निमित्तवित् तद् विगणय्य सर्वं सर्वंसहाऽधीश्वरमाललाप ।
महीपतीनां पुरतोऽविमृश्य वक्तुं न शक्यं मतिशालिनाऽपि ॥२४१॥

निमित्तेति—निमित्तविद् दैवज्ञः तत्तत सर्वं ग्रहस्थित्यादिकं विगणय्य विचार्य सर्वंसहायाः पृथिव्या अधीश्वरं गन्धवाहमाललाप कथयामास ननु किमिति विगणय्याऽऽललाप, न पुनः सद्यएवेति चेत्तत्राह, मतिशालिना विशेषज्ञेनाऽपि महीपतीनां पुरतः अविमृश्य वक्तुं न शक्यं योग्यम्, अन्यथाऽनर्थस्यापि सम्भवादिति भावः ॥२४१॥

इमे महीगोचर ! माररूप श्रीवत्सराजस्य कुमारकस्य ।
भविष्यतो द्वे अपि वल्लभे तच्चिन्तामपास्य क्षितिपालराजः ॥२४२॥

इमे इति—महीगोचर ! महीप ! इमे तव द्वे कन्येऽपि कुमारकस्य क्षितिपालेषु राजते इति तस्य नृपश्रेष्ठस्य माररूपस्य कामाकृतेः श्रीवत्सराजस्य वल्लभे प्रिये भविष्यतः । वल्लभे-दयितेऽध्यक्षे कुलीनेऽपि वल्लभः "इति विश्वः ॥ तत्तो हेतोः चिन्तां कोऽस्या वरो भावीत्येवंरूपामपास्य त्यज ॥२४२॥

ततस्तमूचे नृपतिर्मयैते क्ष्माचक्रवालस्थितिशालिनेऽस्मै ।
स्थितेन वैताढ्यमहीधरेऽस्मिन् केनाभ्युपायेन सुते प्रदेये ! ॥२४३॥

तत इति—ततस्तदनन्तरम् नृपतिः गन्धवाहः तं दैवज्ञमूचे, किमित्याह–अस्मै वभस्सूचिताय क्ष्माचक्रवाले पृथिवीमण्डले स्थितिशालिने स्थिताय नरत्वादिति भावः । अस्मिन् वैताढ्यमहीधरे स्थिते न, विद्याधरत्वादिति भावः । मया गन्धवाहेन केन अभ्युपायेन विधिना एते द्वे सुते प्रदेये ? उपायोऽत्र न दृश्यते इत्यर्थः । दाने हि दातृदानीययोः सामानाधिकरण्यस्यावश्यकत्वादिति भावः ॥२४३॥

बभाण नैमित्तिक एव भूयस्तं भूमिभर्तस्तव सन्निधाने ।
अहो ! विवाहो भविताऽनयोर्न यज्जीवितं ते किल मासमात्रम् ॥२४४॥

बभाणेति- नैमित्तिकः भूयः पुनरेव तं नृपं गन्धवाहं बभाण, किमित्याह भूमिभर्त्तः । महीप अहो इति खेदे । अनयोः कन्ययोः विवाहः तव सन्निधाने समक्षम् न भविता, तत्र हेतुमाह- यद्यतः ते तव जीवितमायुः मासमात्रं नत्वधिकं किलेत्यप्रिये ॥२४४॥

महीपते ! याऽवनिगोचरेण श्रीसूरराजेन तवैव जामिः ।
विवाहिताऽभूज्जनकेन दत्ता सुरानुकल्पेन महौजसाऽपि ॥२४५॥

महीति— महीपते ! अवनिगोचरेण पृथ्वीस्थितेन श्रीसूरराजेन तदाख्यनृपेण सह या तवजामिः स्वसा एव महौजसा महाबलेन जनकेन त्वत्पित्रा विवाहिता सती दत्ता समर्पिता, सेत्यग्रिमश्लोकेन सम्बन्ध. । अत्र विवाहिता दत्तेति पुनरुक्तिः, एकपदप्रयोगेणैवेष्टार्थलाभा- दिति चिन्तनीयम् ॥२४५॥

स भूपतिः प्राच्य भवातिहार्दात् काञ्चित् समालोक्य कनीं सुरूपाम् ।
विवाह्य चाशक्तिवशादरंस्त सस्मार तस्यास्तु न नाममात्रम् ॥२४६॥

सेति—स भूपतिः तव जामिपतिः प्राच्यभवस्य पूर्वजन्मनः अतिहार्दात् प्रेमातिशयाद्धेतोः काञ्चित्सुरूपां कनीं कन्यां समालोक्य, विवाह्य च आशक्तिवशाद्रागाधीनः अरंस्त रेमे, तस्यास्तव जामेस्तु नाममात्रं नामाऽपि न सस्मार, व्यस्मार्षीदित्यर्थः ॥२४६॥

असूयया साऽपि ततः सपत्न्याः कृत्वा चिरं बालतपो विपद्य ।
अजायत व्यन्तरदेवता स्राक् तादृक्तपोभिः किमिवाप्तमेतत् ? ॥२४७॥

असूययेति—सा तव जामिरपि सपत्न्याः असूयया ईर्ष्यया ततः चिरं बालतपः अज्ञान- तप. कृत्वा विपद्य स्राक् सद्यः व्यन्तरदेवता व्यन्तरी अजायत जाता तादृक्त् तपोभिः एतत् किमिव आप्तम् ? तादृग्भिः महद्भिः तपोभिः तदत्यल्पं निष्कृष्टं फलमाप्तमिति ॥२४७॥

पराऽपि सूरस्य महीश्वरस्य प्राणप्रिया सा निधनित्वमाप्य ।
महेभ्यदत्तस्य तनूभवा श्रीदत्ताऽभिधाना प्रथिता बभूव ॥२४८॥

परेति—परा द्वितीयाऽपि सूरस्य तदाख्यस्य महीश्वरस्य प्राणप्रिया सा निधनित्वं मृत्यु- माप्य महेभ्यदत्तस्य तनूभवा पुत्री श्रीदत्तेत्यभिधानेन नाम्ना प्रथिता ख्याता बभूव ॥२४८॥

अगण्यलावण्यनिधानभूता सा वर्तते साम्प्रतमुर्वशीव ।
विशेषतो व्यन्तरदेवता सा विद्वेषमुच्चैर्विदधाति तस्याम् ॥२४९॥

अगण्येति—सा श्रीदत्ता अधुना उर्वशी अप्सरो विशेष इव अगण्यस्यापरिमितस्य लावण्यस्य निधानभूताऽऽकररूपा वर्तते तस्यां श्रीदत्तायां विषये सा व्यन्तरदेवता व्यन्तरेश्वरी विशेषतः उच्चैः सातिशयमित्यर्थः । विद्वेषं विदधाति ॥२४९॥

विधास्यते यामिकभावमस्यां यो यामिकोऽपि प्रियतां विनाऽपि ।
अवश्यमेव प्रकृतिप्रचण्डा तं प्रापयिष्यामि यमस्य वेश्म ॥२५०॥

विधेति—योऽपि यामिकः प्राहरिकः अस्यां श्रीदत्तायां प्रियतां प्रेम विनाऽपि यामिकभावं प्राहरिकत्वं विधास्यते स्वीकरिष्यतीत्यर्थः प्रकृत्या स्वभावत एव प्रचण्डा क्रूरा कृत्रिमक्रूरायास्तु नेत्थं सम्भवतीति भावः । अहमित्यर्थबलाल्लभ्यते, तं प्राहरिकमवश्यमेव यमस्य वेश्म प्रापयिष्यामि गतासुं करिष्यामीत्यर्थः ॥२५०॥

इति स्वचित्तेऽवधि संविदा तद्विद्वेषमन्तर्दधती विमृश्य ।
नरक्षयं सा कुरुतेऽद्यकल्पे तत्पार्श्वे एते प्रहिणुष्व तत्त्वम् ॥२५१॥

इतीति—इत्युक्तप्रकारम्, अवधिसंविदाऽवधिज्ञानेन स्वचित्ते विमृश्य ज्ञात्वा तस्यां विद्वेषम् अन्तर्दधती मनसि धारयन्ती सा व्यन्तरी अद्यकल्पे अद्यत्वे नरक्षयं प्राहरिकमारणरूपं कुरुते, तत्तः त्वम् एते कन्ये तस्याः व्यन्तर्याः पार्श्वे प्रहिणुष्व प्रेषय ॥२५१॥

ननु तत्र किं भावीत्याह—

महेभ्यदत्तस्य तनूभवायाः स्वीकृत्य स प्राहरिकत्वमीशः ।
भवत्स्वसुः पाणितलं प्रहृत्य दत्तस्य कन्यां परिणीय दत्ताम् ॥२५२॥
विधाय सज्जं करमेवतस्या दासीभिरावेदितवैद्यविद्यः ।
नृमारणं तद्विनिवार्य देव्यां कन्ये विवोढा तव वत्सराजः ॥२५३॥ युग्मम्॥

स ईशः समर्थः वत्सराजः महेभ्यदत्तस्य तनूभवायाः पुत्र्याः प्राहरिकत्वं स्वीकृत्य भवत्स्वसुः तव भगिन्याः व्यन्तरेश्वर्याः पाणितलं करतलं प्रहृत्य प्रहाराधीनं कृत्वा दत्तस्य महेभ्यदत्तस्य कन्यां दत्तां श्रीदत्ताम् परिणीय दासीभिः व्यन्तरीदासीभिः आवेदिता व्यन्तरीश्वर्यै ज्ञापिता वैद्यविद्या चिकित्सकत्वं यस्य स तादृशः सन् तस्याः व्यन्तरीश्वर्याः एव करं सज्जं पीडामुक्तं विधाय देव्यां व्यन्तरेश्वर्याम् तत्तादृशं नृमारणं विनिवार्य निषिध्य नृमारणात्तां विरतां कृत्वेति यावत्, तव कन्ये विवोढा परिणेष्यति अत्र महेभ्यदत्तस्य दत्तस्येत्येकार्थशब्दस्य द्विधा निष्कारणं प्रयोगात्पुनरुक्तिदोषः ॥२५२–२५३॥युग्मम्॥

इतीदृशीं खेचरभूमिभर्ता ज्योतिर्विदो वाचमसौ निशम्य ।
मदन्तिके द्वे इमिके विमुच्य किञ्चित्तपो दुस्तपमाचचार ॥२५४॥

इतीति—इतीदृशीमुक्तप्रकाराम् ज्योतिर्विदः नैमित्तिकस्य वाचं निशम्य असौ खेचरभूमिभर्ता विद्याधरेश्वरः गन्धवाहः इमिके द्वे कन्ये मदन्तिके विमुच्य प्रेष्य किञ्चिद्दुस्तपं तपः आचचार ॥२५४॥

विपद्य स व्यन्तरनायकोऽभूद् मासावसाने विशदाशयोऽपि ।
समं विदित्वाऽवधिनैव तेन पल्यंकयक्षादि ददे मुदा मे ॥२५५॥

विपद्येति—विशदाशयः निर्मलान्तःकरणोऽपि मासावसाने माससमाप्तौ विपद्य मृत्वा स गन्धवाहः व्यन्तरनायकः व्यन्तरेश्वरोऽभूत् । तेन व्यन्तरेश्वरेणैव अवधिनाऽवधिज्ञानेन समं सर्वं विदित्वा ज्ञात्वा मे मह्यं पल्यङ्कयक्षादिमुदा सहर्षं ददे दत्तम् ॥२५५॥

तदेतदङ्गीकुरु सर्वमेव दत्तं मया तेऽपि निरामयाय ।
सुरीश्वरी सा विरराम कन्याद्युत्पत्तिमित्युक्तिपथं प्रणीय ॥२५६॥

तदेतेति—तत्तस्माद्धेतोः निरामयाय कुशलाय ते तुभ्यमपि मया दत्तमेतत्पल्यङ्कादि सर्वम् अङ्गीकुरु स्वीकुरु, इत्युक्तप्रकारेण कन्याद्युत्पत्तिम् उक्तिपथं वाङ्मार्गं प्रणीय कृत्वा, उक्त्वे-त्यर्थः । सा सुरीश्वरी व्यन्तरीश्वरी विरराम मौनमास्थत् ॥२५६॥

कनीयुगं तत्तयकाप्रदत्तं पर्याप्तऋद्ध्यैव स पर्यणैषीत् ।
ददौतरां व्यन्तरनिर्जरी सा पल्यंकवाहादि च यौतके तत् ॥२५७॥

कनीति—तत्तः तयका तया व्यन्तर्या पर्याप्तऋद्ध्या सातिशयधनेन सहैव, यद्यपि-समासे नित्यसन्धिनियमः, तथापि निरंकुशाः कवय इत्यसन्धिप्रयोगो बोध्यः । प्रदत्तं कनी-युगं कन्याद्वयं स वत्सराजः पर्यणैषीत् परिणीतवान् । तथा सा व्यन्तरनिर्जरी व्यन्तरी यौतके तत् व्यन्तरदत्तं पल्यङ्कवाहादि—पल्यङ्काश्वादि च ददौतराम् ॥२५७॥

सहाऽथताभ्यां प्रियवल्लभाभ्यां ज्योत्स्नाकलाभ्यामिव गौरधामा ।
निनाय कांश्चित् दिवसान् सकामो भुञ्जन् सुखं वैषयिकं स वत्सः ॥२५८॥

सहेति—अथ परिणयाऽनन्तरम्, ताभ्यां प्रियः वल्लभाभ्यां प्रियाभ्यामित्यर्थः । ज्योत्स्ना-कलाभ्याम् गौरधामा चन्द्रइव, स वत्सः वत्सराजः सकामः कामाधीनः सन् वैषयिकं सुखं भुञ्जन् कांश्चिद् दिवसान् निनाय यापयामास ॥२५८॥

महेभ्यदत्तस्य तनूभवां तां प्राणप्रियामस्य हृदा विचिन्त्य ।
समुज्झितप्राग्भववैरवारा पुत्रीमिवाऽमन्यत देवताऽपि ॥२५९॥

महेभ्येति—देवता व्यन्तरोयद्यपि महेभ्य दत्ततां तनूभवां श्रीदत्तामस्य वत्सराजस्य प्राणप्रियां हृदा विचिन्त्य समुज्झित. त्यक्तः प्राग्भवस्य वैरवारः विद्वेषो यया सा तादृशी त्यक्त-वैरभावा सती पुत्रीमिवाऽमन्यत ॥२५९॥

निशावसाने स निजां प्रतिज्ञां संस्मृत्य दध्यावपरेद्युरेवम् ।
अहं कथं कुञ्जरवन्निमग्नो हा ! हाऽस्मि सान्द्रे विषयोग्रपङ्के ॥२६०॥

निशेति—अपरेद्युरेकदा स वत्सराजः निशावसाने रात्रिशेषे निजां प्रतिज्ञां षण्मासाभ्यन्तरे बृहत्तिकानयनरूपां संस्मृत्य दध्यौ, किमित्याह—हाहेति खेदातिशये । अहम् कुञ्जरवद् हस्तिवद् सान्द्रेऽतिगाढे विषयरूपे उग्रे दुस्तरे पङ्के कथं निमग्नः अस्मि ? मम नैतद्योग्यमित्यर्थः ॥२६०॥

विभूषणं यत् पुरुषोत्तमानां विद्वद्भिरावेद्यत पाञ्चजन्यम् ।
यदृच्छया तद्गमितं मुधा तैर्येषां प्रतिज्ञा व्यभिचारिणी स्यात् ॥२६१॥

विभूषणमिति — विद्वद्भिः विशेषज्ञैः यद् पाञ्चजन्यं पञ्चजनानां पुरुषाणां भावः पुरुषार्थ इत्यर्थः । पुरुषोत्तमानां विभूषणमावेद्यताकथि, तत्पौरुषरूपं विभूषणम्, येषां प्रतिज्ञा व्यभिचारिणी पूर्त्यभावादसमर्था स्यात्, तैः भ्रष्टप्रतिज्ञैः मुधा निष्प्रयोजनमेव यदृच्छया स्वैरवृत्त्यागमितम् त्याजितम्, भ्रष्टप्रतिज्ञः पुरुषार्थहीनो भवतीति भावः ॥२६१॥

सचेतनश्चेतसि चिन्तयित्वेत्यर्कोदये तां विनिवेद्य सन्धाम् ।
सुरीश्वरीं मातृपदप्रणत्या आपृच्छते स्म प्रतिपत्तिसारः ॥२६२॥

सेति—सचेतनः प्रतिपत्तिसारः विशददृढबुद्धिः स वत्सराजः इत्युक्तप्रकारेण चेतसि चिन्तयित्वा अर्कोदये सूर्योदये सति तां सन्धाम् स्वाशयम् सुरेश्वरीं व्यन्तरीं विनिवेद्य मातुरिव पदप्रणत्या चरणवन्दनेन कृत्वा आपृच्छते सभाजयति स्म ॥२६२॥

तया विसृष्टः स समं प्रियाभ्यामारुह्य पल्यङ्कमपेक्ष्य यानम् ।
नभः पदव्या भुवनानि पश्यन् श्रीदत्तयाऽध्यासितमाप वेश्म ॥२६३॥

तयेति—तया व्यन्तर्या विसृष्टः अनुज्ञातः स वत्सः प्रियाभ्यां समं सह पल्यङ्कं यानम् अश्वरूपम् वाहनमित्यपेक्ष्य योजयित्वा आरुह्य नभः पदव्याः आकाशमार्गतः भुवनानि लोकान् पश्यन् श्रीदत्तया अध्यासितमाश्रितं वेश्म गृहं प्राप ॥२६३॥

स्ववासवेश्मोपरि वर्तमाना पल्यङ्कमालोक्य तुरङ्गयुक्तम् ।
अपेतनिद्रा प्रविधूततन्द्रा चित्ते चमत्कारमधारयत् सा ॥२६४॥

स्वेति—स्ववासवेश्मनः उपरि वर्तमाना सा श्रीदत्ता—तुरङ्गयुक्तम् पल्यङ्कमालोक्य, अद्भुतदर्शनात् अपेतनिद्रा निद्रारहिता, प्रविधूततन्द्रा दूरीकृततन्द्रा च सती चित्ते चमत्कारं साश्चर्यौत्सुक्यमधारयत् ॥२६४॥

मनुष्यपर्यङ्ककमुख्यभावा अत्राऽऽपतन्त्येव न चित्रमत्र ।
तुरङ्गमस्त्वेष कथं समायाद् मायां विना सप्तमभूमिभागम् ? ॥२६५॥

मनुष्येति—मनुष्याः पर्यङ्ककं च मुख्यानि येषां तादृशाः भावाः पदार्थाः अत्र लोके आपतन्त्येव शास्त्रादौ तथा श्रवणादिति भाव.। अतः अत्र मनुष्याद्यापतनविषये न चित्रमाश्चर्यम्। किन्तु एष दृश्यमानः तुरङ्गमोऽश्वः मायाम् इन्द्रजालादिरूपां विना सप्तमभूमेः हर्म्यस्य सप्तमभूमेः भागे प्रदेशे कथं केन प्रकारेण समायादागच्छत् माययैवेत्थं सम्भवति, नान्यथेति भावः ॥२६५॥

किमीदृशं विश्रुतमिन्द्रजालं दृष्टेभ्रमो वाऽथ मतिभ्रमोऽयम् ।
प्रकल्पयन्तीति मनोविकल्पान् पल्यङ्कपार्श्वं सहसा जगाम ॥२६६॥

किमीति—किमिति वितर्के. इन्द्रजालं मादृशमश्वादीनामुपरिप्रेरकं विश्रुतं प्रसिद्धम् ? स्वस्य तथाननुभवात्संशय इति भावः। अथ दृष्टेः मम दर्शनस्यैव भ्रमः शुक्तौ रजतत्वभ्रमवत् वा अथवा मतेः भ्रमः अन्यथा ज्ञानादिति भावः, अयम् दर्शनविषयः। इत्युक्तप्रकारेण मनो विकल्पान् अन्तरालापान् प्रकल्पयन्ती कुर्वती सहसा अविचार्यैव-पल्यङ्कपार्श्वे जगाम ॥२६६॥

पटीं समुत्पाट्य निजं पतिं साऽपूर्वद्वितीयाद्वितयोपगूढम् ।
स्मरं रतिप्रीतियुतं वितर्क्य दृष्ट्वा परानन्दमविन्दताऽरम् ॥२६७॥

पटीमिति—सा श्रीदत्ता पटीं पर्यङ्कावरणवस्त्रं समुत्पाद्योत्थाप्य द्वितीययोः स्वापेक्षया इतरयोः स्त्रियोः द्वितयेनोपगूढमालिङ्गितम्, अतएव अपूर्वं पूर्वावस्थाविलक्षणं निजं पतिं वत्सराजम् दृष्ट्वा रत्या प्रीत्या च युतं स्मरं स्मरस्वरूपं वितर्क्योत्प्रेक्ष्य अरं शीघ्रं परमुत्कृष्टमानन्दमविन्दत। न तु सपत्नीद्वेषादखिद्यत, उदाराशयत्वादिति भावः ॥२६७॥

मनस्यसंमान्तमिव प्रमोदं वप्तुः पुरस्तं निजगाद साऽपि ।
ससंभ्रमः सोऽपि तदैव दत्तः सौधोपरिष्टात् समुदापपात ॥२६८॥

मनस्येति—सा श्रीदत्ताऽपि पुनः तं पतिदर्शनजन्यं प्रमोदं मनसि असंमान्तमत्यधिकत्वादुच्छलन्तमिव वप्तुः पितुः पुरः निजगाद। सः दत्तोऽपि ससम्भ्रमः सरभसः सन् तदैव सौधस्य प्रासादस्योपरिष्टात्समुदापपाताजगाम ॥२६८॥

विलोक्य जामातरमागतं तं सच्चक्रपाणिं कमलाधिवासम् ।
रत्नैरनेकैः कलितः प्रभाते श्रेष्ठी स रत्नाकरवत् तुतोष ॥२६९॥

विलोक्येति— तं वत्सराजरूपम् सच्चक्रं चक्राकारशुभरेखा सुदर्शनाख्यं चक्रञ्च पाणौ यस्य तं तादृशं शुभसामुद्रिकलक्षणोपेतम्, विष्णुमिवेति ध्वनिः । अतएव कमलायाः शोभादिरूपायाश्चाधिवासमास्पदम् जामातरं पुत्रीपतिं प्रभाते आगतं विलोक्यरत्नाकरवत् समुद्रवत् अनेकैः रसैः हर्षादिभावैः, अथ च लवणादिभिः कलितः समन्वितः स श्रेष्ठी दत्तः तुतोष ॥२६९॥

समाव्रजन्तं श्वशुरं समीक्ष्य पीठात् समुत्थाय ससंभ्रमस्तम् ।
ननाम पृष्टः सकलं स्ववृत्तं पत्न्यैकया शंसयति स्म चैषः ॥ ॥२७०॥

समेति—श्वशुरं दत्तं समाव्रजन्तमागच्छन्तं समीक्ष्य ससंभ्रमः सरभसं पीठादासनादुत्थाय तं श्वशुरं ननाम । महतः सपर्यायाः शिष्टाचारानुमोदित्वादिति भावः । पृष्टश्च एष वत्सराजः एकया पत्न्या कृत्वा स्वैकपत्नीमुखेनेति यावत् सकलं स्ववृत्तं शंसयति स्म, न तु स्वयं साक्षात् स्वमुखेन स्वोत्कृष्टनार्यवर्णनस्य शिष्टैरनाचरणीयत्वादिति भावः ॥२७०॥

शुभानुभावाच्छ्रुतिवर्त्म नीत्वा जामातृवृत्तान्तमसौ महेभ्यः ।
सविस्मयः स्वं बहु मन्यते स्म यः स्वावदानात् बहु मानवान् न ? ॥२७०॥

शुभेति—असौ महेभ्यः श्रीदत्तः शुभानुभावात् पुण्यमाश्रित्य जातं जामातुर्वत्सराजस्य वृत्तान्तं श्रुतिवर्त्म कर्णगोचरं नीत्वा श्रुत्वेत्यर्थः, सविस्मयः अद्भुतवृत्तान्तत्वादाश्चर्यितः सन् स्वं बहुलोकोत्कृष्टं मन्यते स्म, धन्योऽहं, यस्यैतादृशो जामातेत्येवमिति भावः । तदेव समर्थयति—स्वस्य अवदानान्महत्त्ववृद्धेः कः बहुमानवान् ? को न स्वं बहुमन्यते ? अपि तु सर्व एवेत्यर्थः विशेषस्य सामान्येन समर्थनरुपोऽर्थान्तरन्यासोऽलङ्कारः ॥२७१॥

जनीत्रयेणैव विराजमानः शक्तित्रयेणेव स राजराजः ।
गते त्रियामा प्रथमांशयामे पल्यङ्कमारुह्य ययौ विशालाम् ॥२७२॥

जनीति—जनीनां प्रियाणां त्रयेण एव, नत्वेकयैव, शक्तीनां मन्त्रादीनां त्रयेण इव विराजमानः चंद्रराजराजः नृपेन्द्रः स वत्सराजः त्रियामाया रात्रेः प्रथमांशयामे प्रथमप्रहरे गते व्यतीते सति पल्यङ्कमारुह्य विशालां नगरीं ययौ ॥२७२॥

अदत्तदिव्यं वसनं स देव्यै स्वस्त्रे स्वमातुः कनकश्रियेऽस्यै ।
अहर्मुखे यत् परिधाय साऽपि देवीमिवात्मानममंस्त भूस्थाम् ॥२७३॥

अदत्तेति—स वत्सराजः तत्र गतः सन् दिव्यमलौकिकं वसनं स्वमातुः स्वस्रे भगिन्यै अस्यै कनकश्रिये देव्यै राज्यै अदत्त । सा कनकश्रीरपि यद्वस्त्रम् अहर्मुखे प्रभाते "प्रत्यूषोऽह-

मुखं कल्यमुख प्रत्युषसी अपि । प्रभातं च''त्यमरः। परिधाय आत्मानं स्वं मूरथा मर्त्यलोकस्थाम् देवीं सुरीमिवामन्यत, तादृशवस्त्रादिति भावः ॥२७३॥

प्रयच्छता दिव्यपटं ममेमं वत्स ! त्वया पूरयता प्रतिज्ञाम् ।
यशः पटेनेन्दु समुज्ज्वलेनै-केनाऽऽवृताः किं न दिशो दशापि ? ॥२७४॥

प्रयेति—वत्स ! मम मह्यमिमं परिहितं दिव्यपटं देववस्त्रं प्रयच्छता ददता तथा प्रतिज्ञां पूरयता त्वया एकेनासाधारणेन इन्दुवत्समुज्ज्वलेन यशोरूपेण पटेन दश अपि दिशः किं न आवृताः ? आच्छादिताः ? अपि तु आच्छादिता एव । प्रतिज्ञापूरणेन दुर्लभदिव्यवस्त्रदानेन च तव यशोदशदिग्व्यापि जातमित्यर्थः ॥२७४॥

प्रशंसतीत्थं नृपवल्लभा सा पादार-विन्दद्वितयं नमन्तम् ।
समुत् तमुत्सङ्गगतं विधाय मूर्धारविन्दं भ्रमरीव जघ्रौ ॥२७५॥

प्रशंसेति—सा नृपवल्लभा राज्ञी कनकश्रीः इत्थमुक्तप्रकारेण प्रशंसती वर्णयन्ती, अत्र प्रच्छन्तीत्यादिवत् प्रशंसन्तीति प्रयोग उचितः, तथा च प्रामादिक एव नकाररहितः प्रयोग इति बोध्यम् । पादौ अरविन्दे इव तयोः द्वितयं नमन्तं प्रणमन्तं तं वत्सराजं समुत् सहर्षमुत्सङ्गगतं विधाय क्रोडे कृत्वा भ्रमरीव मूर्धारविन्दं वत्सराजशिरः कमलं जघ्रौ आघ्रातवती ॥२७५॥

सुरीश्वरीदत्तमहोपदाभिः कान्तात्रयालङ्कृतपार्श्वपृष्ठः ।
विनम्यतां मातरमादरेण मातृष्वसारं च समानसारम् ॥२७६॥

विवाहसञ्जातमहोत्सवानां देशान्तरालोकितकौतुकानाम् ।
निवेदनेन प्रमदं वितन्वन्नेकोऽप्यनेकत्वमवाप भक्त्या ॥२७७॥युग्मम् ॥

सुरीति—कान्तानां त्रयेण क्रमशोऽलंकृतानि द्वेपार्श्वे पृष्ठं च यस्य स तादृशः पार्श्वयोः पृष्ठे च स्थितस्त्रीकः सुरीश्वर्या व्यन्तर्या दत्ताभिः महतीभिरूपदाभिः सहितः वत्सराजः तां स्वां मातरं समानसारम् मातृसमानादरणीयां मातृष्वसारञ्च भक्त्या विनम्य प्रणम्य विवाहे सञ्जातानां महोत्सवानां देशान्तरे आलोकितानां कौतुकानां च 'निवेदनेन कथनेन प्रमदं मात्रादेर्हर्षं वितन्वन् एकोऽपि अनेकत्वम् वर्णिताभिः तत्तदवस्थाभिः अनेकरूपत्वमाप प्राप अनेक इव बभाविति भावः ॥२७६-२७७॥

स वत्सराजस्तिसृभिः प्रियाभिर्मृत्युञ्जयो दृग्भिरिवाऽवभासे ।
प्रभूतभूत्याऽऽकलितः कलावल्लेखा दधानो वृषवाहनोऽपि ॥२७८॥

सेति—स वत्सराजः तिसृभिः प्रियाभिः तिसृभः दृग्भिः मृत्युञ्जयः शिव इवाभासे-शुशुभे-"मृत्युञ्जयः कृत्तिवासा पिनाकी प्रमथाऽधिपः इत्यमरः"। तथा प्रभूतया प्राज्यया भूत्या सम्पदा भस्मनाच ।। भूतिमतिङ्ग शृङ्गारे जातौ भस्मनि सम्पदी"त्यमरः। आकलितः कलावत्सु विद्वत्सु लेखाः गणनाः दधानः विद्वत्प्रणनीयः, अथ च कलावतश्चन्द्रस्य लेखाः छवीः दधानः वृषवाहनः, वृषं पुण्यं वहतीति तादृशः पुण्यशाली अथ च शिवतुल्यः अपि आबभासे इति सम्बध्यते। अत्र श्लेषाऽनुप्राणितोपमाऽलङ्कारः ॥२७८॥

नृपप्रियाऽन्येद्युरभूत् सरोगा सा राजहंसीव पदात्यरागा।
प्रियेण हंसेन च पर्यहारि चित्रं स्थिरं प्रेम न दृश्यते वा ॥२७९॥

नृपेति—अन्येद्युरेकदा नृपप्रिया कनकश्रीः राजहंसीव पदाचरणेन कृत्वा अत्यन्तं अविद्यमानो रागो यतः या तादृशी अत्युत्कृष्टचरणा सरोगा रोगिणी अभूत्। प्रियेण स्वपतिना प्रियजनेन वा हंसेनात्मनाच पर्यहारिहृता वियुक्ता मृतेति यावत्। चित्रमाश्चर्यम् वा यत् प्रेम स्थिरं न दृश्यते नावलोक्यते, प्रेमवतोर्हि साहचर्यमेव युक्तं न च तथा भवतीत्याश्चर्य-मिति ॥२७९॥

कथाऽवशेषत्वमुपागतायां तस्यां परं सुभ्रुवि भूमिपालः।
अधीरधीः शोकविसंस्थुलः संश्चक्रे विमुग्धः परिदेवितानि ॥२८०॥

कथेति—तस्यां सुभ्रुवि सुनेत्रायां स्वप्रियायां कनकश्रियां कथाएव अवशेषः न तु स्वरूपादिरपीति तस्यास्य भावस्तत्त्वमुपागतायां प्राप्तायां सत्याम्, मृतायामित्यर्थः भूमि-पालः नृपः अधीरधीः क्षुब्धबुद्धिः शोकेन विसंस्थुलः व्यग्रः सन् विमुग्धः व्यामोहं गतः परमत्यन्तं परिदेवितानि विलापान् चक्रे ॥२८०॥

परिदेवितान्येवाह—

प्रियेऽङ्ग! सप्ताङ्गमिदं मदीयं राज्यं विभाति त्वयका विनैव।
करक्रमाऽऽस्य श्रुतिलोचनेषु भास्वत्सु ना नासिकया विनेव ॥२८१॥

प्रिये इति—अङ्ग! प्रिये! त्वयका त्वयाविना मदीयमिदं सप्ताङ्गं प्रकृत्यादि सप्ताङ्ग-मिदं राज्यमेव करयोः क्रमयोः चरणयोः आस्ये मुखे श्रुतौ कर्णे लोचनयोश्च तेष्वेतेषु भास्वत्सु स्वकार्यक्षमेषु सत्स्वपि नासिकया विना ना पुरुष इव असुन्दरं विभाति। उपमा ॥२८१॥

सुधारसस्पर्धनवर्धितास्ता वाचः क्व ते काक्षिविकूणितं च?।
युवाशयानङ्ग विबोधनोत्कं सारं द्वयं किं जगृहे यमेन? ॥२८२॥

सुधेति—सुधारसस्य स्पर्धने प्रतिपक्षत्वे वर्धिताः उत्साहवत्यः सुधाधिकमधुराः ताः पूर्वमनुभूताः ते तव वाचः क्व ! इदानीं कुत्रास्ते, दुर्लभं जातमिति भावः । तथा अक्षिविङ्कि-णितं कटाक्षपरम्परा च क्व कुत्र, दुर्लभं जातमित्यर्थः । यूनां तरुणानामाशये मनसि अनङ्गस्य कामस्य विबोधने वर्धने उक्तं क्षमं द्वयं सारं श्रेष्ठवस्तु वचनं कटाक्षश्च यमेन किं जगृहे हृतम् ? नैतदुचितम्, युवोपयोगिनो हरणे तस्य लाभाभावादितिभावः ॥२८२॥

त्वदङ्गसङ्गप्रभवं मृगाक्षि ! जाने सुखं किञ्चन नापरत्र ।
अत्राप्यते पुण्यवशेन यद्वा पुंसाऽमृतं तत्समता क्व चास्तु ? ॥२८३॥

त्वदङ्गेति—मृगाक्षि ! त्वदङ्गस्य सङ्गात्प्रभवं जातं सुखम् अपरत्रान्यत्र किञ्चन स्वल्पमपि न जाने अधिगच्छामि, त्वदङ्गसङ्गप्रभवं सुखं त्वत्तोऽन्यत्र दुर्लभम्, त्वत्तुल्याया अभावादितिभावः। तत्रेह दृष्टान्तमाह—यद्वा पुंसा नरेण पुण्यवशेनामृतमवाप्यते, तस्यामृतस्य समता तुल्यता क्वान्यत्र कुत्रच अस्तु । नैवान्यत्र तत्समतेति यावत् ॥२८३॥

इति प्रकुर्वन्तमिळापतिं तं बाढं विलापान् स तु वत्सराजः ।
प्रबोधयामास सुभाषितौघैः शोकोपतापोपशमाम्बुसारैः ॥२८४॥

इतीति—इत्युक्तप्रकारेण बाढमतिशयेन विलापा न कुर्वन्त तमिळापतिं नृपं स वत्स-राजस्तु शोकरूपस्योपशमे दमने अम्बुवत्सारैः समर्थैः सुभाषितौघैः प्रबोधयामास सान्त्वयति स्म ॥२८४॥

तत्सुभाषितान्येवाह—

भवादृशश्चेद् विदधाति शोकं गाम्भीर्यसन्तर्जितसिन्धुमुद्रः ।
ततो ध्रुवं वाडवपावकेन शोषः समुद्रस्य सुखं क्रियेत ॥२८५॥

भवेति—गाम्भीर्येण अस्ताघाशयत्वेन, अक्षोभ्याशयत्वेनेति यावत्, सन्तर्जिता तिरस्कृता सिन्धोः समुद्रस्य मुद्रा स्थितिर्येन स तादृशः समुद्रापेक्षयाऽप्यतिगभीराशयः भवादृश श्चेत्शोकं विदधाति, ततस्तदा वाडवपावकेन वडवानलेन समुद्रस्य शोषः शोषणं सुखमनायासेन क्रियेत, ध्रुवं निश्चितमेतत् अक्षोभ्यश्चेत्क्षुभ्यति किमिति तर्हि समुद्रो न शोष्येतेति भावः ॥२८५॥

तडिल्लताकुञ्जरकर्णतालदम्भोलिभृत्कार्मुकसारभागैः ।
विधीयते यद् विधिनाऽतिलोलमायुः क्षये शोचति तस्य को ज्ञः? ॥२८६॥

तडिदिति—विधिना ब्रह्मणा तडिल्लतायाः विद्युतः कुञ्जरस्य हस्तिनः कर्णतालस्य दम्भोलिभृतः वज्रभृतः इन्द्रस्य कार्मुकस्येन्द्रधनुषः सारै उत्तमैः भागैः यदायुरतिलोलमतिचञ्चलं

विधीयते, तस्यायुषः क्षये को ज्ञः धीमान् शोचति शोकं करोति ? न कोऽपीत्यर्थः । विद्युदाद्यति चञ्चलवस्तुसारनिर्मितस्य ततोऽप्यतिचञ्चलत्वात्तस्य क्षयस्य सहजत्वात्तत्र शोकोऽनुचित इति भावः । दैवाधीनं न शोच्यते इति यावत् ॥२८६॥

न यौवनं स्वं स्थिरतां तनोति संवेदनं नापि न चापि सारम् ।
न जीवितं तद् नृपते ! किमर्थं क्षुद्रस्य शोकस्य वशंवदाः स्थ ? ॥२८७॥

नेति—स्वं स्वकीयं यौवनं स्थिरतां न तनोति विस्तारयति आदत्ते, नाऽपि संवेदनं ज्ञानम्, न चाऽपि सारं शक्तिः, स्थिरतां तनोतीति सम्बध्यते, तथैव जीवितं न, स्थिरतां तनोति तत्तत: निश्चितेऽर्थे किमर्थं क्षुद्रस्य पामरयोग्यस्य शोकस्य वशंवदास्थः भवथः ? नैतद्योग्यमित्यर्थः ॥२८७॥

इतीदृशैस्तस्य वचः प्रपञ्चैः शोकं मुमोच क्षितिपालसिंहः ।
बलाहके वर्षति वा समन्तात् तापं महीध्रा अपि किं दधन्ताम् ॥२८८॥

इतीति—इतीदृशैः उक्तप्रकारैः तस्य वत्सराजस्य वचसां प्रपञ्चैः विस्तरैः क्षितिपालेषु सिंहइव स नृपश्रेष्ठः शोकं प्रियामरणजन्यदुःखरूपम् मुमोच, तत्र दृष्टान्तमाह—वा यतः बलाहके मेघे समन्ताद्वर्षति सति महीध्राः पर्वता अपि तापं दधन्ताम् किम् ? नैवेत्यर्थः । मेघवर्षणेन यथा महान्तोऽपि सन्तः पर्वतादयः तापं मुञ्चन्ति तथा वत्सराजकृतवचोविस्तरेण नृपेन्द्रः शोकं जहाविति भावः ॥२८८॥

स चैकदा स्वाभिमतं कुमार आलोचयामास समं प्रियाभिः ।
प्रियाः ! स्वयं वोऽनुमतेर्निमन्त्र्य क्ष्मापं गृहे भोजयितुं समीहे ॥२८९॥

सेति--एकदा च स कुमारो वत्सराजः प्रियाभिः सममालोचयामास विचारयामास, किमित्याह—प्रियाः । वो युष्माकमनुमतेरनुमतिं प्राप्य स्वयं, न तु भृत्यादिद्वारा क्ष्मापं राजानं निमन्त्र्य गृहे भोजयितुं समीहे इच्छामि ॥२८९॥

अवादिषुस्ताः प्रियः ! भूप्रियो नाऽऽनेतुं गृहे युज्यत उत्सवेऽपि ।
अथासि भूमिपति सच्चिकीश्चेत् तत्रैव तत्स्वौचितमाचर त्वम् ॥२९०॥

अवेति— ताः प्रियाः तिस्रः अवादिषुः जगदुः किमित्याह—प्रिय ! उत्सवेऽपि सति, किम्पुनः सामान्यतः ? भूप्रियः महीपः गृहे आनेतुं, भोजनाद्यर्थमित्यर्थः । न युज्यते, अथ चेत् त्वं भूमीपतेः सच्चिकीः सत्कारं चिकीर्षुरसि ? तर्हि तत्र भूपसदने एव स्वोचितं स्वयोग्यमाचर ॥२९०॥

जगौ स नो गौरवगौरता स्यादेवं प्रियास्तन्नृपतिं निमन्त्र्य ।
गृहे समाकार्य विकार्यवर्जं सत्कृत्य च स्वं चरितार्थयामः ॥२९१॥

जगाविति—स वत्सराजः जगौ, किमित्याह-मामन्त्र्य स्वगृहानयने एवमुक्तप्रकारे कृते सति नोऽस्माकम् गौरवेण गौरवोत्कृष्टतास्यात्, अस्य गृहे तादृशो भूपोऽप्यागच्छतीत्येवं महागौरवशालिनः स्यामलोकेषु इति भावः। यद्वा एवं भूपसदने स्वोचितं कृते सति नो इत्यस्य निषेधं वाचित्वान्न गौरवेण गौरतोत्कृष्टता स्यात्, प्रियाः ततः नृपतिं निमन्त्र्य गृहे विकार्यवर्जं-निष्कपटं समाकार्याहूय सत्कृत्य च स्वमात्मानं चरितार्थयामः कृतार्थं कुर्मः। तादृशोत्तमनिमन्त्रणादिभिः कृतकृत्यो भवति लोक इति भावः ॥२९१॥

इदं यदि स्वान्तगतं तवेश तद् दर्शनीया वयमेव नाऽस्मै ।
इति प्रपद्योपनृपं गतस्तं स प्रार्थयामास निमन्त्रणेन ॥२९२॥

इदमिति—ईश ! स्वामिन् ! यदि तवेदं पूर्वोक्तम् स्वान्तगतं निश्चितम्, तर्हि वयमस्मै नृपतये नैव दर्शनीयाः इत्युक्तप्रकारं प्रियाभिरुक्तम् प्रपद्य स्वीकृत्य उपनृपं नृपस्य समीपं गतः स वत्सराजः निमन्त्रणेन कृत्वा तं नृपं प्रार्थयामास ॥२९२॥

महीमहेन्द्रस्तमुदाजहार वत्साऽऽहितं चैतदुपक्षयाय ।
कृतं प्रवृत्त्याऽप्यनयाऽथ मानप्रख्यापनं ते भविताऽन्यथाऽपि ॥२९३॥

महीति—महीमहेन्द्रः नृपः तं वत्सराजमुदाजहार कथयामास, किमित्याह—एतन्मनिमन्त्रणञ्च उपक्षयायानिष्टाय आहितम् विहितम् एतेन कर्मणा तवानिष्टः सम्भाव्यते इतियावत्। अथापि अनया मन्त्रिमन्त्रणरूपया प्रवृत्त्या कार्येण कृतम्, न करणीयमित्यर्थः। ते तव मानप्रस्थापनं गौरवप्रसिद्धिः अन्यथा प्रकारान्तरेणाऽपि भविता भविष्यति ॥२९३॥

न मानसम्भावनमन्यथाऽहं जाने जनाधीश ! विनाऽऽगमेन ।
उपक्षयं ते गणयन्ति येषां स्वामिप्रसादो न मनागपीह ॥२९४॥

नेति—जनाधीश ! नृप ! आगमेन मद्गेहगमनेन विना अन्यथा प्रकारान्तरेण मानसम्भावनम् गौरवाशाम्, अहम् वत्सराजः न जाने मन्ये, यच्चोक्तमुपक्षयायेति, तत्राह, ते जना उपक्षयं स्वानिष्टं गणयन्ति विचारयन्ति येषामिह स्वामिप्रसादः मनागपि न, मयि तु सर्वथा स्वामिप्रसाद इति नाहमुपक्षयाद्बिभेमीत्यर्थः ॥२९४॥

विलोकनं ते वदनस्य राजन् ! साक्षाद् महापद्ममवैमि सारम् ।
विकाशने स्वस्य न यद्वचापेक्षा सूरोदयस्यापि कदाचनापि ॥२९५॥

विलोकेति—राजन् ! ते तव वदनस्य मुखस्य विलोकनं सारमत्युत्कृष्टं साक्षान्नत्वा- रोपादिना, महापद्मं विलक्षणकमलमवैमि मन्ये, विलक्षणत्वे हेतुमाह—यस्य त्वद्वदनकमलस्य स्वस्य विकाशने कदाचनापि सूरोदयस्य सूर्योदयस्यापि व्यपेक्षाऽऽकाङ्क्षता न अन्यस्य विका- शनं तु सूरोदयापेक्षमित्यतः त्वद्वदनं सारं महापद्ममितिभावः अत्र वाक्यार्थहेतुकं काव्यलिङ्ग- मलङ्कारः ॥२९५॥

विलोचने ते जयतः स्म पद्मं जाते यदेते भुवनोदयाय ।
व्यजेष्ट शङ्खं तव देव ! कण्ठो रेखात्रयं प्राप जगत्त्रयाद् यत् ॥२९६॥

विलोचेति—ते तव विलोचने नेत्रे पद्मं कमलं जयतोऽभिभवतः स्म, तत्र हेतुमाह- यद्यतः एते तव नेत्रे भुवनानामुदयायोन्नत्यै जाते, पद्मं तु स्वोदयेऽप्यन्यमपेक्षते इति भावः। तथा, देव ! राजन् तव कण्ठः शङ्खं व्यजेष्ट जितवान्, तत्र हेतुमाह यद्यतः जगत्त्रयात् जगत्त्रयाधिपतित्वाद्धेतोः रेखात्रयं प्राप, शङ्खे तु रेखात्रयं स्वाभाविकं न तु किञ्चि- त्करमपीति भावः। अत्रोपमेयस्योपमानाधिक्यवर्णनाद्व्यतिरेकालङ्कारः ॥२९६॥

त्वयाऽवधूतो मकरध्वजोऽयं यद् देहकान्त्या मकरोऽजितस्तत् ? ।
क्षमाभरं धारयताऽनपेक्षं व्यक्तं जितः किं न स कच्छपोऽपि ? ॥२९७॥

त्वयेति—त्वया यद्यतः अयं प्रसिद्धः मकरध्वजः कामोऽवधूतः जितः तत्ततो हेतोः देहकान्त्या मकरः कृष्णवर्णो जलचरविशेषः अजितः नावधूतः कृष्णो हि कृष्णतमेन जीयते,न तु गौरेण कामजेतृणेति भङ्ग्या कामादप्यधिककान्तिर्गौरवर्णो भवानिति सूचितमिति भावः। नहि मकरध्वजजयेन मकरजयः भिन्नत्वादिति साभिप्रायोक्तिरिति भावः। किञ्च अनपेक्षं स्वभावत एव क्षमायाः पृथिव्याः भरं भारं पालनादिरूपं धारयता त्वया स क्षमाधर्त्ता कच्छपोऽपि व्यक्तं स्पष्टतरं न जितः किम् ? अपि तु जित एव यतः स नानपेक्षं क्षमां भरं दधाति इति भावः। अत्र मकरध्वजजयेऽपि मकरस्याजय इति विषमम् नहि मकरध्वजजये मकरजयः इति साभिप्रायो- क्त्या परिकरः कच्छपजयोत्थितश्च व्यतिरेकः तत्राद्ययोर्द्वयोः सङ्करः त्रयाणां च संसृष्टिः ॥२९७॥

श्रिया मुकुन्दादुपगत्य यत्त्वं स्वैरं श्रितस्तद् विधुतो मुकुन्दः ।
द्विजैरमीभिस्तव कुन्दकान्तिर्यत्तर्जिता कुन्दजयस्ततस्ते ॥२९८॥

श्रियेति—मुकुन्दात्कृष्णं विहाय -"जलशायी विधरूपो मुकुन्दो मुरमर्दन" इत्यमरः ॥ श्रिया लक्ष्म्या यद्यतस्त्वमुपगत्यान्तिकमेत्य स्वैरं यथेच्छचारितया श्रितः तत्ततः मुकुन्दः कृष्णः विधुतः जितः, अन्यथा श्रीस्तत्रैव किमिति नास्थादिति भावः,। तथा, तव अमीभिः दृश्यमानै

द्विजैः दन्तैः यथतः कुन्दस्य तदाख्य पुष्पस्य कान्तिः तर्जिता तिरस्कृता ततो हेतोस्ते कुन्द-जयः अत्रापि पूर्वोक्तयुक्त्या व्यतिरेकालङ्कारः ॥२९८॥

यशश्चयैर्विश्वविसृत्वरैस्ते नीलः पराभावि नितान्तगौरैः ।
नयागमे ते रसनाऽग्र एव चर्चा श्रिता तेन जितः सचर्चः ॥२९९॥

यश इति—विश्वेषु जगत्त्रयेषु विसृत्वरैः व्यापिभिः नितान्तगौरैः अतिधवलैः ते तव यशश्च यैः यशोराशिभिः नीलः वर्णविशेषः पराभावितिरोहितः तथा नयागमे शास्त्रज्ञाने ते तव रसना जिह्वा अग्रे अग्रभाग एव चर्चा विचारणां श्रिता, तेन हेतुना स प्रसिद्धः चर्चः चर्चाकुशलः विपश्चिद् जितः नीचैः कृतः त्वं सर्वाधिकनीतिचर्चा जानासीति भावः । अत्रापि पूर्ववदलङ्कारः ॥२९९॥

ततो निधीनां परमो नवानां त्वं राजराजत्वपदं दधानः ।
उपक्षयान्नाथ ! कथं बिभेषि मन्मन्दिरान्तः पदमादधानः ? ॥३००॥

तत इति—ततस्तादृशगुणोत्कर्षद्धेतोः नाथ ! देव ! नवानां शङ्खादीनां निधीनां राजराजत्वपदं दधानः निधिपतिः परमः उत्कृष्टतमः त्वं मम मन्दिरस्य गृहस्य अन्तर्मध्ये पदं स्वचरणमादधानं स्थापयन् उपक्षयान्नाशात्कथं कुतोहेतोः बिभेषि, उपक्षयेऽपि तत्पूरणशक्तिर्भवान्नित्यतो न भेतव्यमिति ॥३००॥

इति प्रवल्लक्षाग्रहतो निमन्त्र्य क्षोणीपतिं वेश्मनि वत्सराजः ।
उपागतः स प्रियवल्लभाभिः प्राक्रंस्त ताभिः सह सारिखेलाम् ॥३०१॥

इतीति—इत्युक्तप्रकारात् प्रक्लृप्ताद्वर्णितादाग्रहतः क्षोणीपतिं नृपं निमन्त्र्य वेश्मनि स्वगृहे उपागतः समागतः स वत्सराजः ताभिः तिसृभिः प्रियाभिर्वल्लभाभिः सह सारिभिः पाशकैः कृत्वा खेला क्रीडा ताम् उपाक्रंस्त प्रारब्धवान् ॥३०१॥

कियान् कृतः पाक उदात्तबुद्धेः श्रीवत्सराजस्य गृहेऽस्ति गत्वा ।
निभालयेति क्षितिपालधुर्यो दौवारिकाधीश्वरमादिदेश ? ॥३०२॥

कियानिति - क्षितिपालेषु महीपेषु धुर्योऽग्रेसरः स नृपः उदात्तबुद्धेः उदारमतेः श्रीवत्सराजस्य गृहे गत्वा कियान् कियन्मात्रं पाकः कृतोऽस्तीति निभाल्य पश्येतीत्थं दौवारिकाधीश्वरं प्रधानद्वारपालमादिदेश ॥३०२॥

समङ्क्षु तद्वेश्म गतः कुमारस्याऽम्बां विनम्येति समन्वयुङ्क्त ।
कुमारनागः क्व, जगाद साऽपि वातायने खेलति खेलनीभिः ? ॥३०३॥

सेति—स द्वारपालः मङ्क्षु शीघ्रमेव तस्य वत्सराजस्य वेश्म गृहं गतः सन् कुमारस्य वत्सराजस्य अम्बां मातरं विनम्य प्रणम्येति समन्वयुङ्क्त पृष्टवान्, इतीति किमित्याह कुमारेषु नागः कुञ्जरइव कुमार श्रेष्ठः वचकुत्रवर्तते ? सा वत्सराजमाताऽपि जगाद, किमित्याह—वातायने गवाक्षे खेलनीभिः सारिकाभिः सारिभिः कृत्वा खेलति ॥३०३॥

समन्ततो वीक्ष्य गृहं समस्तं पृष्ट्वेति तत्कालमयं निवृत्त ।
व्यजिज्ञपद् भूमिपतिं विनम्य धूमोऽपि तत्राऽस्ति न पाकचिह्नम् ॥३०४॥

समन्तत इति—इत्युक्तप्रकारेण पृष्ट्वा समस्तंगृहं समन्ततः वीक्ष्य तत्कालं सद्य एव निवृत्तोऽयं इतः भूमिपतिं विनम्य व्यजिज्ञपत्, किमित्याह—पाकस्य चिन्ह सूचकं धूमोऽपि तत्र नास्ति तर्हि पाकस्य का चर्चेति भावः ॥३०४॥

विलोकयस्व प्रतिवेशिसद्मान्येतस्य गत्वा किल तेषु पाकः ।
विधापितः स्यादिति भूमिभर्ता भूयस्तमादिक्षददृष्टदोषः ॥३०५॥

विलोकेति—अदृष्टदोषः निष्कपटबुद्धिः भूमिभर्त्ता भूयः पुनः द्वारपालम् एतस्य वत्सराजस्य प्रतिवेशिनां प्रत्यासनगृहिणां सद्मानि गृहाणि गत्वा विलोकयस्व, किल यतःतेषु प्रतिवेशिगृहेषु पाकः विधापितः कारितःस्यादितीत्थमादिक्षदादिष्टवान् ॥३०५॥

अदर्शि पाकः प्रतिवेशिनीभि-र्विधीयमानो न मनागपीति ।
पुनर्निरीक्ष्याऽऽगत एष भूपं दौवारिको विज्ञपयाम्बभूव ॥३०६॥

अदर्शीति—दौवारिकः द्वारपालः पुनः प्रतिवेशिनीभिः मनागीषदपि पाकः विधीयमानः न अदर्शि दृष्टो मयेतीत्थं निरीक्ष्य पुनरागतः एष दौवारिकः भूपं विज्ञपयाम्बभूव ॥३०६॥

मयाऽपि साकं कुरुते कुमारः किं नाम हास्यं मनसाऽविमृश्यम् ।
महोपरोधेन निमन्त्र्य यन्मां पाकोऽपि नाऽकारि गृहेऽपि तेन ॥३०७॥

मयेति—कुमार वत्सराजः मया नृपेणाऽपि अन्येन तु कथैव केति भावः, साकं सह मनसाऽप्यविमृश्यमचिन्त्यं हास्यं नाम कुरुते किमिति वितर्के, येन सह मनसाऽप्यचिन्त्यं हास्यं तेनाऽपि सह तथा कुरुते किमिति महदविवेकित्वमस्य सूच्यते । ननु कुत इत्थं ज्ञायते भवतेति चेत्तत्राह—यधतः माम् नृपं महता उपरोधेनाग्रहेण निमन्त्र्य तेन गृहेऽपि पाकोऽपि न अकारि कारितः, अतः स हास्यं करोतीति तर्क्यते, कथमन्यथा पाको न कारित इति भावः ॥३०७॥

एवं वितन्वन्निति चेतसाऽयं यावद् नृपस्तिष्ठति तावदागात् ।
ब्रुवन् कुमारोऽयमिति प्रसीद मन्मन्दिरं पावय पादपद्मैः ॥३०८॥

रुषमिति—इत्युक्तप्रकारेण चेतसा रुषं-तदविवेकद्वेषं वितन्वन् विस्तारयन् यावदयं नृपस्तिष्ठति तावदयं कुमारो वत्सराजः इति ब्रुवन्नागात्, इतीति किमित्याह-प्रसीद मम मन्दिरं पादपद्मैः स्वचरण कमलैः पावय पुनीहि ॥३०८॥

दधल्ललाटे भ्रकुटिं ललामः क्षोणीभुजामेष तमेवमाह ।
न युज्यतेऽस्माभिरमा तवाऽपि शिष्यस्य विद्यागुरुणेव हास्यम् ॥३०९॥

दधदिति—क्षोणीभुजां ललामः तिलकरूपः एष नृपः ललाटे भ्रकुटिं भ्रुवोः कौटिल्यं, रोषादिति भावः, दधत्, तं वत्सराजमेवाह-एवमिति किमित्याह-तव अस्माभिरमा सह शिष्यस्य विद्यागुरुणा समेव हास्यं न युज्यते ॥३०९॥

प्रगे यदस्मान् विनिषेधतोऽपि शक्त्या निमन्त्र्योपगतेन सद्म ।
पराऽस्तु भोजस्य विशेषभङ्गी नैवाऽन्नपाको जनितस्त्वयाऽपि ॥३१०॥

प्रगे इति—हास्यप्रकारमेवाह-यद्यतः प्रगे प्रभाते विनिषेधतः निषेधं कुर्वतोऽपि अस्मान् शक्त्या साग्रहं निमन्त्र्य सद्म स्वगृहमुपगतेन त्वया भोज्यस्य परा उत्कृष्टा अन्यावा विशेषभङ्गी विशेष रचना अस्तु, भवतु तावत्, किन्तु, अन्नपाकोऽपि नैव जनितः कारितः, तदेतद्धास्यं विहायापरं किमिति भावः ॥३१०॥

वितन्वते केऽपि परेऽपि भृत्या न स्वामिपादैः सह देव ! हास्यम् ।
अहं महाराज पदोपजीवी तत्किं विनिर्मातुमपि क्षमाऽस्मि? ॥३११॥

वितेति—वत्सराजकृतोत्तरमाह-देव ! केऽपि-परे मदन्येऽपि भृत्याः स्वामिपादैः स्वामिश्रेष्ठैः सह हास्यं न वितन्यते कुर्वते, तत्तः महाराजस्य पादाभ्यामुपजीवतीति स तादृशः अहं वत्सराजः तद् विनिर्मातुमपि किं क्षमः शक्तोऽस्मि ? नैवेत्यर्थः ॥३११॥

कदापि वाचि व्यभिचारिता मे निर्धारिता नास्ति यदि त्वयेश ।
तदा समागत्य गृहं पुनीहि देवोऽपि विज्ञास्यति तत्र सर्वम् ॥३१२॥

कदापीति—ईश ! स्वामिन् ! यदि मे मम वाचि वचने कदापि व्यभिचारिता अयथार्थता निर्धारिताऽनुभूता नास्ति तदा गृहं समागत्य पुनीहि, तत्र देवोऽपि सर्वं विज्ञास्यति, अत्र कथनेनालम्, प्रत्यक्षमेव पश्येति भावः ॥३१२॥

विधेयता दर्शयताऽतितुच्छं विज्ञप्त इत्येष कुमारकेण ।
गजेन्द्रमारुह्य नरेन्द्रवर्यः सामन्तभृत्यैः सहितश्चचाल ॥३१३॥

विधेयतामिति—इत्युक्तप्रकारेण विधेयतां वशवर्त्तित्वं दर्शयता प्रकटयता कुमारकेण वत्सराजेन अतितुच्छमत्यल्पं विज्ञप्तः प्रार्थित एष नरेन्द्रवर्यः गजेन्द्रमारुह्य सामन्तैः भृत्यैश्च सहितः समन्वितः सन् चचाल ॥३१३॥

अमात्यवर्येण वितीर्णबाहुस्तन्मन्दिरद्वारि जनाधिनाथः ।
सुवर्णरत्नाभरणावभासि स्तम्बेरमादुत्तरति स्म तूर्णम् ॥३१४॥

अमात्येति—जनाधिनाथः नृपः तस्य वत्सराजस्य मन्दिरस्य द्वारि अमात्यवर्येण वितीर्ण-बाहु दत्तहस्तावलम्बः सन् सुवर्णरत्नाभरणैः अवभासिताच्छोभमानात्स्तम्बेरमाद्गजात् तूर्णमुत्तर-तिस्म—"इभः स्तम्बेरमः" इत्यमरः ॥३१४॥

पुरस्सरीभूय ससंभ्रमोऽथ, श्रीवत्सराजः करकं गृहीत्वा ।
हिरण्मयं द्वारविभूषणाय क्षोणीभुजेऽभ्युक्षणमाशुऽदत्त ॥३१५॥

पुरेति—अथानन्तरम्, सम्भ्रमः सत्वरः श्रीवत्सराजः पुरस्सरीभूयाग्रे भूत्वा हिरण्मयं करकं कमण्डलं—'कमण्डलौ च करकः' इत्यमरः गृहीत्वा द्वारस्य विभूषणतुल्याय क्षोणीभुजे नृपाय आशु अभ्युक्षणं पादप्रक्षालनार्थजलमदत्त ॥३१५॥

भुजिष्यसज्जीक्रियमाणनागवल्लीदलाग्रेसरवीटिकौघम् ।
क्वचित् क्वचित् स्थापितपीठकोटि कोटिस्खलल्लोकपदप्रपातम् ॥३१६॥
क्वचित् कृतालेपनसिद्धधान्य स्थालीशताकीर्णमवाप्तशोभम् ।
गृहान्तरं चास्य विशन् नरेशो व्यालोकयामास सविस्मयः सन् ॥३१७॥
॥ युग्मम् ॥

भुजिष्येति—नरेशः नृपः अस्य वत्सराजस्य गृहान्तरं गृहमध्यं विशंश्च क्वचित् भुजिष्यैः भृत्यैः सज्जीक्रियमाणा रच्यमाणा नागवल्लीदलाग्रेसराः ताम्बूलपत्रप्रधानाः विटिकानां ताम्बूलाना-मोघा यस्मिन् तादृशम् क्वचित् च स्थापितानां पीठकोटीनामसङ्ख्यातासनानां कोटिषु तटेषु स्खलन्तः लोकानां पदप्रपाताः पादविन्यासाः यस्मिन् तादृशम्, गृहे भोजनार्थं सर्वत्र पीठे स्थापिते तत्र गच्छतां पादाः तस्मिन् स्वभावत एव स्खलन्ति इति भावः. तथा क्वचित्, कृते आलेपने सिद्धानां राद्धानां धान्यस्थालीनां शतैराकीर्णं व्याप्तम्, अतएव अवाप्तशोभम् शोभमानम् गृहं सविस्मयः विलक्षणवस्तु विन्यासदर्शनादाश्चर्यितः सन् व्यालोकयामास ॥३१७॥
॥ युग्मम् ॥

मुहुर्मुहुर्वाचमिमामुदीर्णां पदोऽवधानं रचयेति जल्पन् ।
स्वयं भुजालम्बमयं प्रदाय सौधोपरिष्टाद् नृपतिं निनाय ॥३१८॥

मुहुरिति—पदः चरणस्य अवधानं स्थिरन्यासतां रचयेतीत्थमिमामुदीर्णां व्यक्तां वाचं मुहुर्मुहुर्जल्पन् अयं वत्सराजः स्वयं भुजालम्बं प्रदाय नृपतिं सौधस्योपरिष्टादुपरि निनाय नीतवान् ॥३१८॥

मसूरकैः सप्तभिरावृतं तत्क्षौमांशुकीयैस्तलिनैर्विचित्रैः ।
अलंचकार क्षितिपालसिंहः सिंहासनं तत्र चतुष्कभूमौ ॥३१९॥

मसूरकैरिति—तत्र सौधोपरि क्षितिपालसिंहः नृपश्रेष्ठः चतुष्कभूमौ चतुरस्रस्थाने क्षौमांशुकीयैः क्षौमवस्त्रनिर्मितैः विचित्रैः विलक्षणैः मसूरकैः सप्तभिः तलिनैः शय्याभिरावृतमाच्छादितं तत्सिंहासनमलञ्चकार सिंहासने उपविवेशेत्यर्थः ॥३१९॥

ममाद्य तन्मौक्तिकमेव वृत्तं विश्वम्भराऽधीशघनागमेन ।
शुभार्जनस्वातिकतारयोगादित्यन्तरुद्भावयितुं प्रवृत्तः ॥३२०॥

कराम्बुरुट्शुक्तिपुटं दधानः सामुद्रिकक्षेत्रकलक्षणोत्थम् ।
महीमघोनः पुरतो निविष्टः श्रीवत्सराजो गिरमुज्जगार ॥३२१॥ युग्मम् ॥

अथ वत्सराजस्यौचितीमाह—मम वत्सराजस्याद्यविश्वम्भरायाः पृथिव्या अधीशरूपस्य घनस्यागमेन आगमनरूपेण वर्षेण शुभार्जनरूपस्य पुण्यार्जनरूपस्य स्वातिकतारस्य स्वाति नाम नक्षत्रस्य योगात्सम्बन्धात् तत्प्रसिद्धं मौक्तिकं वृत्तं जातमेव, स्वात्यां मेघजलेन शुक्तिकासु मौक्तिकानि जायन्ते इति प्रसिद्धेरिति भावः, । इतीत्थमन्तरन्तःस्थं भावमुद्भावयितु प्रकटयितुं प्रवृत्त इव सामुद्रिकक्षेत्रकलक्षणोत्थम् सामुद्रिकशास्त्रलक्षणयुक्तम् समुद्रोत्पन्नञ्च कराम्बुरुहोः करकमलयोः शुक्तिपुटं दधानः, विहिताञ्जलिः सन्निति यावत्, महीमघोनः महीन्द्रस्य पुरतः निविष्ट उपविष्टः श्रीवत्सराजः गिरमुज्जगारोज्जहार ॥ रूपकम् ॥३२०॥ ३२१ ॥ युग्मम् ॥

कां गिरमित्यत आह—

भवादृशाः सद्मनि मादृशानां पुण्योत्तमाः पुण्यविवर्जितानाम् ।
कदापि नैवोपनमन्ति गौरा यद्राजहंसा न मरौ रसेच्छाः ॥३२२॥

भवादृशाः पुण्योत्तमाः पुण्यप्रकर्षा पुण्यविवर्जितानां मादृशानां सद्मनि रसेच्छाः जलेच्छाः अथच गुणेच्छवः गौराः श्वेताः, अथचोत्कृष्टाः राजहंसाः पक्षिविशेषाः, अथ च राजानो हंसा इव ते मरौ निर्जलप्रदेशे इव कदापि नैवोपनमन्त्या गच्छन्ति, ॥३२२॥

समागतं यत् किल राजहंसै-र्विस्फूर्जितं यत् कमलाकरैश्च ।
प्रसन्नमाशाभिरलं यदाभिः किं नो स मे पुण्यशरत्प्रकर्षः ? ॥३२३॥

नन्वहं तु आगतवानस्मीति चेत्तत्राह—यद्यतः किल राजसु हंसैरिव तैः, अथ च राजहंसैः; समागतम्, यद्यतश्च कमलानां लक्ष्मीनामथ च पद्मानामाकरैः भवद्भिः तडागैरिव विस्फूर्जितं विकसितम्, अथ च प्रभावप्रकाशनं कृतम्, यद्यतश्च आभिः दृश्यमानाभिराशाभिः दिग्भिः अथ च शुभेच्छाभिः प्रसन्नं अतिनिर्मलत्वमाप्तमथच—पूर्णम्, स मे मम पुण्यमेव शरत्तस्याः प्रकर्षः अतिशयः किं नो, अपित्ववश्यमेवास्ति, शरदि हि राजहंसाः, आयान्ति, कमलाकराणि-विकसन्ति दिशश्च निर्मलायन्ते इति भावः । श्लेषानुप्राणितरूपकालङ्कारः ॥३२३॥

इतीदृशोक्तीरभिधाय हेमस्थालं महीयः स च मण्डयित्वा ।
अबूभुजत् तं परमान्नभोज्यं स्वाद प्रतिध्वस्तसुधारसौधम् ॥३२४॥

इतीति—इतीदृशा उक्तप्रकारा उक्तीरभिधाय स वत्सराजः महीयो महत्तरं हेमस्थालं मण्डयित्वा परिवेषणेन भूषयित्वा च स्वादेन रसेन प्रतिध्वस्तः तिरस्कृतः सुधारसौघो येन—तादृश—ममृतादप्यधिकत्वात् परमान्नरूपं भोज्यं तं नृपमबूभुजद्भोजयामास ॥३२४॥

बहुप्रकारं विनिवारितेन कान्तेन तेनैव नियोजितास्ताः ।
पतिव्रता अश्नति भूपतौ स्म दध्यादि सर्वं परिवेषयन्ति ॥३२५॥

बह्विति—बहुप्रकारं नैकशोऽपि विनिवारितेन नाहं परिवेषयामीत्येवं निवारितेनापि तेन कान्तेनैव वत्सराजेन विनियोजिताः प्रेरिताः ताः प्रतिव्रताः पत्याज्ञापालिन्यः एव भूपतौ अश्नाति भुञ्जति सति दध्यादि सर्वं सर्वप्रकारवस्तु परिवेषयन्ति स्म ॥३२५॥

मनोवचः काय विचेष्टितानि विद्धानि राज्ञः समवेव ताभिः ।
प्रदर्शयन्तीभिरलं स्वरूपं चित्रं नु भल्लीभिरिव स्मरस्य ॥३२६॥

मन इति—स्मरस्य कामस्य भल्लीभिः अस्त्रविशेषैरिव नु निश्चयेन चित्रमाश्चर्यकारि-स्वरूपं स्वसौन्दर्यमलमत्यर्थं प्रदर्शयन्तीभिः ताभिः वत्सराजस्त्रीभिः समं युगपदेव मनोवचः कायानां विचेष्टितानि व्यापाराः राज्ञः नृपे सम्बन्धसामान्ये षष्ठी । विद्धानि निचखनिरे । नृपः तासां—चेष्टायां मनो दत्तवानित्यर्थः । ३२६।

तदैककेयं किमुतैकके द्वे तिस्रोऽथ निर्णेतुमयं न शक्तः ।
विचित्रनेपथ्यविभूषणानां पश्यन् विशेषं क्षणिकं स तासाम् ॥३२७॥

तदैकेति—तदा भोजनसमये तासां स्त्रीणाम् विचित्राणां विलक्षणानां नेपथ्यानां वेश-रचनानां विभूषणानां च क्षणिकं विशेषमतिशयं पश्यन् सोऽयं नृपः इयमेकिका एकाएव किमुत द्वे एकके एका एव द्वे जाते, अथ तिस्रः इति निर्णेतुं न शक्तः। समानशीलनेपथ्यविभूषणत्वा-दतिशयसौन्दर्याञ्च हतबुद्धिरिवाभूदिति भावः ॥३२७॥

अहो ! स्मरव्याधपतेरिहापि-कौशल्यमालोक्यत एव लोकैः ।
अवीक्षितं विध्यति हन्त ! पौष्पैर्बाणैर्मनोमत्तमतङ्गजं यः ॥३२८॥

अहो इति ! अहो इत्याश्चर्ये, इह लोकेऽपि लोकैः स्मर एव घातकत्वाद् व्याधपतिस्तस्य कौशल्यं स्वकर्मनैपुण्यं आलोक्यत एव, किन्तदित्याह—यः अवीक्षितम् अदृष्टमपि मन एव मत्त-मत्तङ्गजस्तं पौष्पैः पुष्पनिर्मितैः बाणैः विध्यति हन्त ! इति खदे । बलशालिनो मतङ्गजस्य पौष्पै-र्बाणैर्हननं न साधारणं कौशलमिति भावः ॥३२८॥

किमेतदास्ते कटुकं किमेतत् तिक्तं किमेतत् मधुरं किमम्लम् ।
कषायभाक् किं लवणं किमेतदित्यादिवेद स्म तदा न साऽपि ? ॥३२९॥

किमिति—तदा भोजनसमये वत्सराजस्त्री विमुग्धः स नृपः किम् एतद्व्यञ्जनादि कटुकमास्ते किम्, तिक्तमेतत्, किं मधुरमेतत् किमम्लम् ? किं कषायभाक् कषायं किं लवणं लवणरसवदेतदित्याद्यपि न वेदस्म । अन्यमनस्को हि उपस्थितं न किमपि वेत्तीति भावः । एतेन तस्य स्त्रीषु मनस एकताननता सूचिता, कामिनी जिज्ञासा च ज्ञानमात्रप्रतिबन्धिकेति च ॥३२९॥

स्वकुक्षिसात् सर्वमिवापि कुर्वन् साक्षात् पिशाचा बुबुधे स ताभिः ।
अयं नरत्वेऽपि सुपर्वभावं तन्वन् मनोभूः कथमस्तु वाच्यः ॥३३०॥

स्वेति—सर्वं परिवेषितान्नादि अपि स्वकुक्षिसात् स्वोदरस्थं कुर्वन् स नृपः ताभिः साक्षात् प्रत्यक्षं पिशाचो बुबुधे ज्ञातः, सर्वभक्षणं मनुष्यस्य नोपपद्यते इति भावः । नरत्वेऽपि सुपर्वभावं देवत्वं तन्वन् कुर्वन् पिशाचस्य देवयोनिविशेषत्वादिति भावः। अयं प्रस्तुतो मनोभूः कामः कथं वाच्यः—निन्दनीयः अस्तु ? नैवेत्यर्थः नरदेवत्वादनरूपोत्कृष्टकर्मा न निन्दापात्रमिति भावः । कामासक्ततया कियद्भुजानीति नृपेण न ज्ञातमिति यावत् ॥द३०॥

नृपं कृताचामविधिं विधिज्ञः कोटीरहारादि विभूषणौघैः ।
अमात्यसामन्तभुजिष्यभृत्यैः प्रीतः स सर्वैः सह सच्चकार ॥३३१॥

नृपमिति—विधिज्ञः व्यवहारकुशल. प्रीतः स वत्सराजः अमात्यैः सामन्तैः भुजिष्यैः दासैः भृत्यैः कर्मकरैः सर्वैरेव सह कृताचामविधिः भोजनानन्तरं प्रक्षालितमुखं नृपम् कोटीरं मुकुटं हारश्च तदादि विभूषणानामौघैः सच्चकार ॥३३१॥

धराधवः सौधमगात्तदैव पञ्चेषु पञ्चेषुभिराहतोऽयम् ।
विनाकृतस्तत्क्षणमेव रत्याऽमात्यानिति स्माऽऽह रहः स्ववृत्तम् ॥३३२॥

धरेति— अयं प्रस्तुतः धराधवः नृपः पञ्चेषो. कामस्य तदा एव सौधं स्वप्रासादमगाद् तत्क्षणमेव एतेन राज्ञस्त्वरा सूचिता । रत्या रतीच्छया विना कृतः समाकुलः सन् रहः एकान्ते अमात्यान् स्ववृत्तमिति वक्ष्यमाणप्रकारेण आह स्म जगाद ॥३३२॥

यदैववत्सप्रियकामिनीनां लावण्यमेतद् मयका निपीतम् ।
तदा प्रभृत्येव विबाधते मां बंहीयसी तद्विषयेषु तृष्णा ॥३३३॥

किं तद्वृत्तमित्याह—यदैवेति–यदा एव वत्सस्य वत्सराजस्य प्रियाणां कामिनीनामेतदनुभूतं लावण्यं मया निपीतमादराद् दृष्टम्, तदा प्रभृत्येव तद्विषयेषु बंहीयसी भूयसी तृष्णा भोगेच्छा–मां विबाधते पीडयति ॥३३३॥

तदत्र कश्चित् कुरुताऽभ्युपायं तासां यथा सङ्गमहं लभेय ।
विहाय युष्मान् न परेहि पृच्छ्याः सन्देहदोलायितमानसानाम् ॥३३४॥

तदत्रेति—तत्ततोहेतोरविषये कश्चिदभ्युपायम् दृढमुपायं कुरुत, यथा अहं तासां-वत्सराजस्त्रीणां सङ्गं सङ्गमं लभेय हि यतः सन्देहेन दोलायितमस्थिरं मानसं येषां तादृशानामदृढबुद्धीनाम् कृते युष्मान् धीधनान् विहाय परे अन्ये पृच्छ्याः उपायदर्शकतया जिज्ञासनीया न भवन्तः कृतबुद्धय इति भवद्दर्शित उपायोऽवश्यं सफलः स्यादन्तमेव स्यादिति भवत एव पृच्छामीति भावः ॥३३४॥

अमात्य एको निजगादतत्त्वमस्मिन्नये जीवति वीरवर्ये ।
क्षमेत का नाम नरो ग्रहीतुं प्राणप्रियाः सिंहसटाच्छटा वा ॥३३५॥

अमात्य इति—एकः कश्चिदमात्यः तत्त्वं रहस्यं निजगाद, किन्तदित्याह–अये ! अस्मिन् मयि वीरवर्ये वीरश्रेष्ठे जीवति सति को नाम मदन्यो नरः सिंहस्य सटानां छटाः समूह वा इव, प्राणप्रियाः वत्सराजस्त्रियः ग्रहीतुं क्षमेत ? न कोऽपीत्यर्थः । अहमेव वत्सराजस्त्रियः ग्रहीतुं शक्नोमि, नान्यः, यतः सिंहजटानाम् इव तासां ग्रहणं मादृशवीरादन्यस्य न सम्भवतीत्यर्थः ॥३३५॥

कया युक्त्या तद्ग्रहणमित्याह—

सदः समेतः स ततः कुमारः श्रीसिंहभूमीपतिपीठ एव ।
निपात्यते त्यक्तविपादभारस्तेनाऽऽप्यते मृत्युमुखं यथाऽयम् ॥३३६॥

सद इति । ततो हेतोः सदसि सभायां समेतः समागतः कुमारः वत्सराजः श्रीसिंहाख्यस्यास्य भूमीपतेः पीठे आसने एव निषावते उपवेशयिष्यते, यथा येन विधिना त्यक्तविषादभारः प्रसन्नः अयं कुमारः तेन हेतुना मृत्युमुखं मृत्युमित्यर्थः । आप्यते, सिंहासनोपवेशनरूपापराधेन हेतुना मृत्युदण्डं प्राप्स्यति वत्सराजः, ततश्च तत्स्त्रीग्रहणं सुकरमिति भावः ॥३३६॥

इति प्रबन्धे विहितेऽपवादोऽप्यार्यस्य कश्चिन्न भवेज्जगत्याम् ।
परैरमात्यैरपि मन्त्र एष प्राशंसि मूर्ध्नः परिधूनयद्भिः ॥३३७॥

एवमनुष्ठाने फलान्तरमप्याह—इत्युक्तप्रकारे प्रबन्धे उपाये विहिते सति आर्यस्य तत्र भवतो—नृपस्य जगत्यां लोके कश्चिदपवादः अपराधं विना स्वसेवको दण्डित इत्येवं रूपः, न भवेत्, अपराधेन दण्डित्वादिति भाव. । परैरन्यैरमात्यैरपि अपूर्वोपायप्रदर्शनेन हर्षात्, मूर्ध्नः शिरांसि परिधूनयद्भिः कम्पयद्भिः एष मन्त्रः विचारः प्राशंसि स्तुतः ॥३३७॥

सदः श्रितः सोऽपि समैः सदस्यैः सिंहाभिधस्यावनिवासवस्य ।
निवेश्यते स्माऽऽसन एव पूर्वं, मुक्ते व्यवस्थाप्य हतव्यवस्थम् ॥३३८॥

सदः श्रित इति स वत्सराजोऽपि सदः श्रितः सभां प्राप्तः सन् समैः सर्वै रेव सदस्यैः सभास्थैः सिंहाभिधस्यावनिवासवस्य सिंहनृपस्य पूर्वं मुक्ते सिंहनृपेण त्यक्ते आसन एव हता व्यवस्था-राजासने राज्ञ एवोपवेशनरूपा मर्यादा यथास्यात्तथा, मर्यादां विहायेत्यर्थः । व्यवस्थाप्य निर्धार्य निवेश्यते उपवेश्यते स्म ॥३३८॥

व्रजन्नसौ वेश्म नृसिंहसौधात् सिंहाङ्कितद्वारि कुमारसिंहः ।
अनुत्थितेन क्रुधया प्लुतेन श्रीसिंहराजेन युधे न्यरोधि ॥३३९॥

व्रजन्निति—असौ कुमारसिंहः वत्सराजः नृसिंहस्य नृपस्य सौधात्प्रासादाद्वेश्म स्वगृहं व्रजन् गच्छन् सिंहाङ्कितद्वारि सिंहद्वारे अनुत्थितेन पश्चादुत्थितेन, तथा क्रुधया प्लुतेन परीतेन नृसिंहराजेन युधे युद्धाय न्यरोधि अवरुद्धः ॥३३९॥

अरे ! वृथामानविडम्बितात्मन् मामप्यविज्ञाय ममासने त्वम् ।
निविश्य गन्तासि वराक ! कुत्र ताक्ष्यं समाक्रम्य यथा भुजङ्गः ॥३४०॥

अरे इति— अरे ! वृथामानेन दुरहङ्कारेण विडम्बितः उपहत आत्मा यस्य तादृश ! वराक! मामपि नृपमविज्ञाय ज्ञात्वैव ममासने निविश्य त्वम् ताक्ष्यं गरुडं समाक्रम्योल्लङ्घ्य भुजङ्गः तथा सर्प इव कुत्र गन्ता असि, ममासने तवोपवेशनम् भुजङ्गस्य गरुडातिक्रम इवेति भावः ॥३४०॥

निशम्य सिंहस्य वचः प्रपञ्चं शौर्येण सिंहः स कुमारसिंहः ।
युधं विधातुं ववले बलीयान् को वाऽपमानं सहतां समर्थः ॥३४१

निशम्येति—सिंहस्य तदाख्यनृपस्य वचः प्रपञ्चं वाग्विस्तरं निशम्य शौर्येण सिंहः सिंहदृशः बलीयान् स कुमारसिंहः वत्सराजः युधं विधातुं ववले परावृत्तवान् तदेव समर्थयति को वा समर्थः बलवान् सन् अपमानं सहताम् ? न कोऽपीत्यर्थः ॥३४१॥

नियुद्धमाविष्कुरुतः स्म किञ्चित्तौ दृग्विनोदाय विलोककानाम् ।
ततः कुमारोऽधिकलाघवेन सिंहं नरेन्द्रं सहसा व्युदासे ॥३४२॥

नियुद्धमिति—तौ सिंहवत्सौ विलोककानां दर्शकानां दृग्विनोदाय नेत्ररञ्जनाय किञ्चिन्नियुद्धं मल्लयुद्धमाविष्कुरुतः प्रकटयतः स्म, ततोऽनन्तरं कुमारः अधिकलाघवेन अतिशयशीघ्रतारूपकौशलेन सहसा सिंहं नरेन्द्रं व्युदासे परास्तवान् ॥३४२॥

समन्ततोऽपि स्वशिरः ससिंहं विभ्रम्य विभ्रम्य रुषाऽक्षिपद् द्राक् ।
स्वपौरुषन्युञ्छनकर्मवाञ्छा साफल्यनिर्माणतयेव वीरः ॥३४३॥

समेति—स वीरः वत्सराजः स्वस्य शिरः मूर्धानं समन्ततः अभितः विभ्रम्य विभ्रम्य पुनः पुनः भ्रमयित्वा रुषा सक्रोधम् स्वस्य पौरुषस्य पराक्रमस्य न्युञ्छनकर्मणः वाञ्छाया इच्छायाः साफल्यनिर्माणतया सफलत्वकसम्पादनेनेव द्राक् अक्षिपन्निरस्तवान् । कर्मसाफल्येहि दूर्वाक्षतादि समन्ततो भ्रमयित्वा क्षिपन्तीति न्युञ्छनं लोकाचार इति भावः ॥३४३॥

पुराददूरे पतितस्य तीव्रभूपातघातादसुभिः प्रयाणम् ।
अकारि सिंहस्य नरेश्वरस्य भूयोऽभिघातादिव जातशङ्कैः ॥३४५॥

पुरादिति—पुरान्नगराददूरे समीपे एव वत्सक्षेपणात्पतितस्य सिंहस्य नरेश्वरस्य भूयः पुनः अभिघातादिव, पुनरीदृशोऽभिघातो माभूदिति जातशङ्कैः सम्पन्नसंशयैरिव असुभिः प्राणैः तीव्रोऽसह्यो यो भुवि पातजन्यो घातस्तस्मात् प्रयाणमकारि सिंहो मृत इति यावत् । उत्प्रेक्षा ॥३४४

गृहं गतः सोऽपि च खेचरीभ्यामाभाष्यते स्म प्रिय भाषिताभ्याम् ।
पुरा निषिद्धोऽसि निमन्त्रयंस्त्वं प्राणप्रिय ! क्षौणिपतिं दुराशम् ॥३४४॥

गृहमिति—स वत्सराजोऽपि च गृहं गतः सन् प्रियभाषिताभ्याम् मधुरवाग्भ्यां खेचरीभ्यां विद्याधरीभ्यां स्त्रीभ्यामाभाष्यते कथ्यते स्म. किमित्याह—प्राणप्रिय ! दुराशम् दुराशयं क्षोणीपतिं नृपं निमन्त्रयन् त्वं पुरा प्रागेव अस्माभिः निषिद्धः निवारितोऽसि ॥३४५॥

कुमन्त्रितेन स्वविनिर्मितेन प्राप्तोऽसि किं जीवितसंशयं न ।
अवाप्स्यसेऽद्याप्यपरीक्षितद्रोरापाततोऽनर्थफलं विशालम् ॥३४६॥

कुमेति-- स्वविनिर्मितेन स्वकृतेन कुमन्त्रितेन दुर्विचारेण जीवितसंशयं प्राणसंशयं न प्राप्तोऽसि किम् ? अपि तु--अवश्यं प्राप्तोऽसि, अद्यापि अग्रेऽपि अपरीक्षितद्रोः अविचारितरूप-वृक्षस्य आपाततः अनुषङ्गतः विशालं महान्तमनर्थरूपं फलमवाप्स्यसे प्राप्स्यसि ॥३४६॥

परं च सिंहक्षितिपो विपेदेऽस्मद्घाततः स्थामसमाश्रयोऽपि ।
तथाऽऽर्य पुत्र ! प्रयतः प्रमादमुत्सार्य भूया इह सावधानः ॥३४७॥

परमिति—परं च किन्तु स्थाम्नो बलस्य समाश्रयोऽपि बलवानपि सिंहक्षितिपः अस्माकं घाततः प्रहाराद्विपेदे मृतः । आर्यपुत्र ! तथा पुनः इह प्रमादमुत्सार्य विमुच्य प्रयतः सज्जसावधानः भूयाः, अन्यथा अनर्थः सम्भाव्यते इति भावः ॥३४७॥

नृसिंहसिंहनिहतं निशम्य श्रीवत्सराजेन महाभुजेन ।
महीभुजाऽऽकार्य वितार्य पीठान् भूयोऽपि पृष्टा व्यमृशन्नमात्याः ॥३४८॥

नृसिंहेति—महाभुजेन भुजबलेन श्रीवत्सराजेन नृसिंहवत्पराक्रमिणं सिंहं निहतं निशम्य महीभुजा राज्ञा आकार्य आहूय पीठानासनानि वितार्य दापयित्वा अमात्याः भूयः पुनरपि पृष्टाः सन्तः व्यमृशन् विचारयामासुः ॥३४८॥

हतोऽमुना सिंहपराक्रमोऽपि, सिंहः कथञ्चिद् बलवत्तमेन ।
अनेन तद् मानमहाधनेन व्याघ्रीपयः साम्प्रतमानयामः ॥३४९॥

हत इति—अमुना बलवत्तमेन सिंहपराक्रमोऽपि सिंहः तदाख्यनृपः कथञ्चिद् हत', तत्ततः अनेन मानमहाधनेनाभिमानिना वत्सराजेन कृत्वा साम्प्रतम् व्याघ्र्याः पयोदुग्धमानयामः आनाययामः व्याघ्र्याचायमवश्यं हतः स्यादिति भावः ॥३४९॥

अवश्यमेवाश्रवचक्रवर्ती मा स्वामिशिष्टिं प्रतिपत्स्यते सः ।
चिरादुपायेन यमातिथिर्न संपत्स्यतेऽनेन विनिश्चयेन ॥३५०॥

अवश्यमिति—आश्रवस्य प्रतिज्ञायाः चक्रवर्तीप्रतिज्ञापालकः स्वीकृत आज्ञापालको वा स वत्सराजः इमामुक्तप्रकारां स्वामिनो नृपस्य शिष्टिमाज्ञाम् अवश्यमेव प्रतिपत्स्यते स्वीकरिष्यति, उपायेन प्रकारान्तरेण चिरादपि यमातिथिः मृतः न सम्पत्स्यते जायते, अनेनानुपदोक्तेनोपायेन तु विनिश्चयेन निश्चितमेव यमातिथिः सम्पत्स्यते ॥२५०॥

इति प्रयुक्तात् सचिवात्सुमन्त्रादन्येद्युरायातमिलावलरिः ।
पयः समानेतुममुं विनीतं व्याघ्र्याः समादिक्षदनामयाय ॥३५१॥

इतीति—सचिवात् इत्युक्तप्रकारेण प्रयुक्ताद्विचारितात्सुमन्त्रात् सुविचारात् सुविचारमाश्रित्येत्यर्थः इलायां पृथिव्यां बलारिरिन्द्रइव नृपः अन्येद्युः आयातं विनीतममुं वत्सराजम् अनामयाय स्वारोग्यनिमित्तम् व्याघ्रयाः पयोदुग्धं समानेतुम् समादिक्षदाज्ञप्तवान् ॥३५१॥

महीशितुः शासनमभ्युपेत्य वेश्माऽऽगतः शासितशत्रुवर्गः ।
अभाषिताभ्यामिति खेचरीभ्यां प्रापि प्रिय ! क्षुद्रतरो निदेशः ॥३५२॥

महीति— महीशितुः नृपस्य शासनमाज्ञामभ्युपेत्य स्वीकृत्य वेश्म गृहमागतः शासितशत्रुवर्गः जितशत्रुसमूहो वत्सराजः ताभ्यां खेचरीभ्यां प्रियाभ्यामित्यभाषि, इतीति किमित्याह—प्रिय ! क्षुद्रतरोऽतिनीचः लघुः सुकरत्वादिति भावः । निदेशः प्रापि त्वया प्राप्तः, नृपसकाशादिति भावः ॥३५२॥

इदं युवाभ्यामपि केन कान्ते ! वेगात् समागत्य निवेदितं तत् ? ।
अवादि ताभ्यामथ तं प्रतीदं, तत्र स्थिते शुश्रुवहे स्वयं नौ ॥३५३॥

इदमिति—कान्ते ! तदिदं वृत्तम् वेगात्समागत्य युवाभ्यां द्वाभ्यामपि केन निवेदितं कथितम् ? इति कथयेतिशेषः । ताभ्यां प्रियाभ्यां तं वत्सराजं प्रति इदमवादि कथितम्, इदमिति किमित्याह—नौ आवाम् तत्र राजसदसि स्थिते स्वयमात्मना एव शुश्रुवहे आवाभ्यां श्रुतम् । अत्र प्रथमैकमा द्विवचने अस्मदोनावादेशश्चिन्त्यः । यद्वाऽव्ययमिति समाधेयम्, यथा "गेयेकेन विनीतौ वामि" त्यत्र ॥३५३॥

यदीश ! भूमीश समागमस्य घस्रं समारभ्य कृताभिशङ्के ।
अदृश्यरूपे सततं भ्रमावोऽनुत्वाऽन्तरायप्रलयाय कान्त ! ॥३५४॥

यदीशेति—ईश ! स्वामिन् कान्त ! प्रिय ! भूमीशसमागमस्य स्वगृहेपागमनस्य घस्रं दिनं –'घस्रो दिनाहनी वातु" इत्यमरः समारभ्य कृताभिशङ्के जातशङ्के अदृश्यरूपे सत्यौ अन्तरायस्य उपसर्गस्य प्रलयाय नाशाय त्वा त्वामनु सततं भ्रमावः अत आवाभ्यां तद्वृत्तं श्रुतमिति भावः ॥३५४॥

निदेशसिद्ध्यै च व्रजाऽतिभीमां यक्षाश्वमारुह्य महाटवीं त्वम् ।
समस्ति या तत्र पवित्रगात्रा क्षेत्राधिपाऽस्मज्जननीसखी सा ॥३५५॥

निदेशेति—त्वम् निदेशसिद्ध्यै राजाज्ञासाधनाय, यक्षाश्वमारुह्य अतिभीमामतिभयङ्करां महाटवीं व्रज, गच्छ, तत्र पवित्रगात्रा सुन्दराकृतिः या क्षेत्राधिपा क्षेत्रेश्वरी समस्ति, सा अस्मज्जनन्याः, सखी समस्तीति, सम्बध्यते ॥३५५॥

अरण्यदेशेऽनिशमेव तत्र व्याघ्रीस्वरूपं दधती च साऽस्ति ।
तुरङ्गमेतं सहसोपलक्ष्य सा साधयिष्यत्यचिरात् तवार्थम् ॥३५६॥

अरण्येति—तत्रारण्यदेशे साऽनिशं सततमेव व्याघ्रीस्वरूपं दधती चास्ति, सा एतं यक्षरूपं तुरङ्गं अश्वमुपलक्ष्य परिचित्य तवार्थम् तव प्रयोजनमचिरात्साधयिष्यति ॥३५६॥

इति प्रियोक्तं प्रतिपद्य सद्यः, श्रीवत्सराजः प्रययौ स तत्र ।
पप्रच्छ तस्मा अमरी यथोक्ता सा स्वागतं दर्शनमात्रतोऽपि ॥३५७॥

इतीति—इत्युक्तप्रकारं प्रियाभ्यामुक्तं प्रतिपद्य स्वीकृत्य, स वत्सराजः सद्यस्तत्क्षणमेव तत्र प्रययौ, यथोक्ता उक्तप्रकारा सा अमरी देवी दर्शनमात्रतोऽपि दृष्ट्वैव, तस्मै, स्वागतं पप्रच्छ ॥३५७॥

किमागतोऽसीत्यनुयुक्त एष, क्ष्मापालकार्यं तदुवाच सत्यम् ? ।
कृताभ्यनुज्ञस्तयका च कर्णे, धृत्वा स तां राजसदः समागात् ॥३५८॥

किमिति—किं किमर्थमागतोऽसि इतीत्थमनुयुक्तः पृष्ट एष वत्सराजः तत्प्रस्तुतं सत्यं क्ष्मापालकार्यमुवाच, तयका तया व्याघ्रीरूपया देव्या कृताभ्यनुज्ञ आज्ञातः स वत्सराजश्च, तां कर्णे धृत्वा, कर्णग्राहमित्यर्थः राजसदः समागात् ॥३५८॥

यथेच्छमस्या निजदृक्समक्ष,-मादीयतां दुग्धमिति ब्रुवाणम् ।
इमामरण्ये लघु मुञ्च मुञ्च, व्यावृत्य चेत्याह धराधवस्तम् ॥३५९॥

यथेच्छमिति—यथेच्छम् इच्छामनतिक्रम्य निजदृक्समक्षमेव, परोक्षे हि कदाचित्संशयोऽपि सम्भाव्यते इति भावः, अस्या व्याघ्र्या दुग्धमादीयतां गृह्यतामितीत्थं ब्रुवाणं तं वत्सराजम् धराधवो नृप आह—किमित्याह— व्यावृत्य, च पुनः परावृत्य इमां व्याघ्रीं लघु शीघ्रमेव अन्यथाऽनर्थोऽपि सम्भाव्यते इति भावः । अरण्ये मुञ्च मुञ्च त्यज, सम्भ्रमाद्द्विरुक्तिः ॥३५९॥

प्रशस्यमानः सुभटैः स नीत्वा व्याघ्रीं सुरीं सद्मनि दारयुक्तः ।
कृतोपचारस्त्वकृतापराधं स्वस्थानगत्यै व्यसृजद् विशङ्कः ॥३६०॥

प्रशेति—सुभटैः प्रशस्यमानः व्याघ्रमपि वशीकृतवानित्येवं स्तूयमानः स वत्सराजः व्याघ्रीं तद्रूपां सुरीं सद्मनि नीत्वा दारयुक्तः स्त्रीसहितः कृतोपचारः कृतसत्कारस्तु विशङ्कः निर्भयः सन् अकृतोऽपराधो यथा स्यात्तथा स्वस्थानगत्यै निजस्थानगमनाय व्यसृजत् ॥३६०॥

दिनेषु केष्वेव गतेषु भूयः सस्मार ताः स स्मरविह्वलाङ्गः ।
नुनोद तल्लाभकृते तथैव सर्वानमात्यांश्च नृपोऽविनोदः ॥३६१॥

दिनेष्वेति—केषु कतिष्वेव दिनेषु गतेषु व्यतीतेषु भूयः पुनरपि स्मरेण कामेन विह्वलाङ्गः पीडिततनुः स नृपः ताः वत्सराजस्त्रीः सस्मार तथा अविनोदः खिन्नः नृपः तथैव पूर्ववदेव सर्वानमात्यान् तासां लाभकृते प्राप्त्यै नुनोद पप्रच्छ, प्रेरयामास वा ॥३६१॥

प्रतिक्षणं सङ्गमशैलयुग्ममध्याऽन्धुजं तोयमवार्यवीर्यः ।
अयं समानाय्यत इत्यमात्यैर्विज्ञप्त एषोऽपि तमादिदेश ॥३६२॥

प्रतीति—अवार्यवीर्यः अप्रतिहतपराक्रमोऽयं वत्सराजः प्रतिक्षणं सङ्गमः मेलनं ययोस्तयोः शैलयोः युग्मस्य मध्ये योऽन्धुः कूपस्तज्जं तोयम् समानाय्यत, अयमानयत्वित्यर्थः, इतीत्थममात्यैर्विज्ञप्तः निवेदितः एष नृपोऽपि तं वत्सराजमादिदेश ॥३६२॥

ममाङ्गनैरुज्यकृते कुमार ! युग्माद्रिकूपाम्बु समानयेति ।
स्ववाचया भूमिभुजा नियुक्तस्तमा नयामास स मानधुर्यः ॥३६३॥

ममेति—कुमार ! मम अङ्गानां नैरुज्यकृते आरोग्याय युग्माद्रिकूपस्याम्बु जलं समानय इति इत्थं भूमिभुजा स्ववाचया नियुक्तः प्रेषितः मानधुर्यः मानी स वत्सराजः तन्नृपोक्तं मानयामास प्रतिपन्नवान् ॥३६३॥

तदस्ति कुत्रेत्यमुना नियुक्तास्ते मन्त्रिणो वाचमिमामवोचन् ।
महीधरौ तुङ्गतमौ च मध्ये विन्ध्याटवि द्वौ प्रथिताविह स्तः ॥३६४॥

तदिति—तद्युग्माद्रिकूपं कुत्रास्तीतीत्थममुना वत्सराजेन नियुक्ताः पृष्टास्ते मन्त्रिणः इमां वाचमवोचन्, इमां काभित्याह– इह लोके मध्ये विन्ध्याटवि विन्ध्याटवीमध्ये तुङ्गतमावत्युच्चौ द्वौ महीधरौ पर्वतौ प्रसिद्धौ प्रथितौ स्तः ॥३६४॥

क्षणेन चैतौ मिलतः स्वतोऽपि स्निग्धौ वयस्याविव सानुरागौ ।
मिथो विरक्तौ पिशुनाविवैतौ, विश्लिष्यतस्तौ कठिनौ क्षणेन ॥३६५॥

क्षणेनेति—एतौ द्वौ पर्वतौ च स्वतोऽपि स्वत एव स्वभावादेवेत्यर्थः, नतु परप्रेरणया, स्निग्धौ मसृणौ सन्तौ सानुरागौ वयस्यौ मित्रे इव, क्षणेन मिलतः परस्परमाश्लिष्यतः तथा क्षणेनैव तौ एतौ द्वौ पर्वतौ विरक्तौ विभक्तौ अतएव कठिनौ च सन्तौ पिशुनौ खलौ इव, मिथः विश्लिष्यतः परस्परश्लेषपरिहारेण तिष्ठतः ॥उपमा॥३६५॥

तदन्तरेऽन्धुर्वसुधातलस्य, वक्त्रानुकारी रससंभृतोऽस्ति ।
जलैस्तदीयैर्भिषजोपदिष्टैर्भावी रुजायाः क्षय एव नूनम् ॥३६६॥

तदिति—तयोः पर्वतयोरन्तरे वसुधातलस्य पृथिव्याः वक्त्रानुकारी मुखमिव रसेन जलेन संभृतः पूर्णः अन्धुः कूपोऽस्ति "पुंस्ये वान्धुः प्रहि. कूप "इत्यमरः। भिषजा वैद्येन उपदिष्टैः कथितानुसारेण तदीयैः तत्कूपसम्बन्धिभिर्जलैः रुजायाः रोगस्य क्षयः उपशमः नूनमेव भावी भविष्यति ॥३६६॥

यदा वियुक्तौ स्त इमौ महीध्रौ कूपादुपादेयमरं तदाऽम्भः।
इतीरितं तन्मुखतोऽधिगम्य स्थानं प्रियाऽलङ्कृतमासदत् सः ॥३६५॥

यदेति—यदा इमौ कथितप्रकारौ महीध्रौ पर्वतौ वियुक्तौ पृथक्, स्थितौ भवतः, तदा अरं शीघ्रमेव अम्भो जलं कूपादुपादेयं ग्राह्यम् अन्यथा तयोर्मिलितयोस्तत्र भवेदिति भावः तस्य मन्त्रिणो मुखतः इत्युक्तप्रकारमीरितं कथितमधिगम्य स वत्सराजः प्रियाभिरलङ्कृतं स्थानमासदत्प्राप्तः ॥३६७॥

पुरैव विज्ञातमहीशनिदेशे भार्ये तमित्यूचतुरार्यपुत्र।
विभूष्य वाहं व्रज तत्र देवी, मातुः सखी नौ शिखरिद्वयेऽस्ति ॥३६८॥

पुरैवेति—पुरा वत्सराजकथनात्प्रागेव विज्ञातो महीशः नृपस्य निदेशो याभ्यां ते तादृशे भार्ये वत्सराजस्त्रियौ तं वत्सराजमित्यूचतुः, इतीति किमित्याह-आर्यपुत्र! वाहं यक्षाश्वं विभूष्य सज्जं कृत्वा व्रज गच्छ, तत्र प्रागुक्ते शिखरिद्वये पर्वतद्वये नौ आवयोः मातुः सखी देवी अस्ति ॥३६८॥

निरन्तरं सा शकुनिस्वरूपसंस्थानभाक् स्थानमधिश्रयन्ती।
विधास्यते तेऽपि समीहितं तत् संमत्यभिज्ञाय तुरङ्गमेतत् ॥३६९॥

निरेति—सा देवी निरन्तरं सदैव शकुनिस्वरूपसंस्थानभाक् पक्षिस्वरूपावयवा सम्प्रति तत्पर्वतात्मकं स्थानमधिश्रयन्ती अधिष्ठिता एतं तुरङ्गमं यक्षाश्वमभिज्ञाय लक्षयित्वा ते तव समीहितमिष्टं विधास्यतेऽपि करिष्यत्येव, नात्र संदेह इति भावः ॥३६९॥

तुरङ्गमारुह्य स वत्सराजः शैलद्वये तत्र ययौ जवेन।
जलं क्षणेनैव समानिनाय देव्या तयैवाऽर्पितमात्मनैव ॥३७०॥

तुरङ्गेति—स वत्सराजः तुरङ्गमारुह्य जवेन तत्र तस्मिन् शैलद्वये ययौ, तथा तया भार्यावर्णितया देव्या एव आत्मना स्वत एवाऽर्पितम्। दत्तं जलं क्षणेनैव समानिनायानीतवान् ॥३७०॥

यथापरीक्षं सचिवाधमैस्तद् पानीयमादायि विशेषदक्षैः।
विरञ्चिना स्पृष्टमभङ्गुरश्रि. भाग्यं तदस्येति विवर्णयद्भिः ॥३७१॥

यथेति—विशेषदक्षैःसुचतुरैः सचिवाधमैः, दुष्टैः सचिवैः यथापरीक्षं परीक्षा पुरस्सरम् तत्पानीयम्, अस्य वत्सराजस्य अभङ्गुरा श्रीर्यस्य तादृशमप्रतिहतं भाग्यं विरञ्चिना ब्रह्मणा स्पृष्टम् अतएव दुष्करेऽप्ययं नावसीदतीति इतीत्थं विवर्णयद्भिः स्तुवद्भिः आदायि गृहीतम् ॥३७१॥

**ततः प्रणुन्नाः पुनरेव राज्ञा सन्ताप्यमानेन मनोभवेन ।**
**उदीरयामासुरिमेऽप्यमात्या मन्त्रोऽपि नः स्फूर्तिमियर्ति नाऽत्र ॥३७२॥**

ततः इति—ततोऽनन्तरम् मनोभवेन कामेन, सन्ताप्यमानेन पीडितेन, कामार्त्तेनेति, यावत् राज्ञा पुनरेव प्रणुन्ना पृष्टा, इमे अमात्या अप्युदीरयामासुः कथयामासुः किमित्याह—अत्र वत्सराजस्त्रीप्राप्तिविषये नोऽस्माकं मन्त्रः विचारबुद्धिरपि स्फूर्तिमुन्मेषं नेयर्त्ति प्राप्नोति नितान्त-दुष्करमप्येष सम्पादयतीति हेतोरितोऽप्यधिकदुष्करमन्त्रणाय कुण्ठितेव बुद्धिर्जातेति भावः ॥३७२॥

**बिभर्ति सर्वोत्तमपौरुषं यत्, वाचस्पतिं न्यत्कुरुते धिया च ।**
**न शक्यते वञ्चयितुं तदेष वज्रेण वज्रं न हि विध्यते वा ॥३७३॥**

बिभर्त्तीति—यद्यतः एष वत्सराजः सर्वोत्तमं सर्वाधिकं पौरुषं बलं बिभर्त्ति, धिया बुद्ध्या च वाचस्पतिं बृहस्पतिमपि न्यत्कुरुते जयति । तत्ततः एष वञ्चयितुं न शक्यते, निर्बलो मन्दमति-श्चैव वञ्चनीयः नत्वेतादृश इति भावः तत्र दृष्टान्तमाह-या यथा वज्रेण तदाख्यास्त्रविशेषेण वज्रं न हि विध्यते भिद्यते, तथा बलबुद्धिवता तादृश एव न वञ्च्यते इति भावः ॥३७३॥

**तथाऽप्युपायः खलु कार्यसिद्धेरालोच्यतां कश्चन मन्त्रिवर्याः ।**
**इति क्षितीशस्य निदेशमाप्य, तैर्मन्त्र्यते स्मेति विचार्य मन्त्रः ॥३७४॥**

तथेति—तथापि वत्सराजस्य तादृशत्वेऽपि मन्त्रिवर्याः कार्यसिद्धेः कश्चन उपायः आलो-च्यतां विचार्यतां खल्विति निश्चये भवद्भिरित्यर्थबलाल्लभ्यते । क्षितीशस्येत्युक्तप्रकारं निदेशमाप्य तैः मन्त्रिभिः विचार्य मन्त्रः रहस्यं इति वक्ष्यमाणं प्रकारं मन्त्र्यते स्म ॥३७४॥

**विवाहसामग्र्यविधापनेन श्रीसुन्दरीनामकुमारिकायाः ।**
**विधीयतां भूमिपते ! नृपाणां दूतैः समाह्वानकमञ्जसाऽपि ॥३७५॥**

मन्त्रमेवाह—विवाहेति, भूमिपते ! राजन् ! अञ्जसा शीघ्रमेव श्रीसुन्दरीनाम कुमारि-कायाः विवाहसामग्र्यस्य विधापनेन सङ्कलनेन कृत्वा दूतैः नृपाणां समाह्वानकमाह्वानस्वयंवरार्थ-मिति शेषः विधीयताम् ॥३७५॥

ननु ततः किमित्याह—

**विधाप्यतां द्राग् दिशि दक्षिणस्यां श्रीदक्षिणाशाऽधिपतेर्निशान्तम् ।**
**प्रहीयतां तस्य निमन्त्रणाय श्रीवत्सराजोऽयमुदग्रबाहुः ॥३७६॥**

विधेति—दक्षिणस्यां दिशि श्रीदक्षिणाशाऽधिपते. दक्षिणदिक्पतेः यमराजस्य निशान्तं गृहम् चितारूपम् प्राक् शीघ्रं विधाप्यताम् निर्माप्यताम्, तस्य यमराजस्य निमन्त्रणाय उदग्रबाहुः बलवान् अयं वत्सराजः प्रहीयताम् प्रेष्यताम्, यमनिमन्त्रणाय गमनं हि मरणमेवेति भावः । ॥३७६॥

प्रशंसता साध्विति चातिवेलं, मन्त्रं तदीयं वसुधाधवेन ।
विवाह सामग्र्यपि तत्प्रयुक्ता, निर्देशमात्रेण विधापिता सा ॥३७७॥

प्रेति—वसुधाधवेन नृपेण तदीयं मन्त्रिदर्शितं मन्त्रं साध्वितीत्थमतिवेलमत्यन्तं प्रशंस च तत्प्रयुक्ता मन्त्रिविचारकल्पिता सा विवाहस्य सामग्र्यपि निर्देशमात्रेणाज्ञामात्रेण विधापिता सञ्चायिता ॥३७७॥

यदन्धकूपप्रतिरूपमारात् खात्वाऽभितः खातिकमिन्धनौघैः ।
भृतं तिलाद्यैश्च समिद्धवह्नि याम्यां यमागारमकारि तच्च ॥३७८॥

यदिति—यदारात् नातिदूरे याम्यां दक्षिणदिशि अन्धकूपप्रतिरूपमन्धकूपसदृशं खातिकं गर्तं खात्वा खनित्वा इन्धनानां काष्ठानामोघैः तिलाद्यैश्च समिद्धः दीप्तो वह्निः यस्मिन् कर्मणि तद्यथा स्यात्तथा भृतं पूरितम् तत्तदेव च यमागारं यमसदनंचित्तामकारि निरमायि ॥३७८॥

महीभुजाऽऽदिष्टतमः कुमारोऽप्यालोचयामास समं प्रियाभ्याम् ।
उपायमाधाय कमद्य कान्ते ! रक्षाम्यहं जीवितमस्वतन्त्र ? ॥३७९॥

महीति—महीभुजा राज्ञा आदिष्टतमः अतिशयेनाधप्तः कुमारो वत्सराजोऽपि प्रियाभ्यां समं सह आलोचयामास, किमित्याह—कान्ते ! अद्य अस्वतन्त्रः नृपाधीनोऽहं कमुपायमाधाय कृत्वा जीवितं रक्षामि ? तद्वदेत्यर्थः ॥३७९॥

उदीरितं कान्तमभीति ताभ्यां युष्मत्प्रतिच्छन्दममन्दबुद्धिः ।
विधाय यास्यत्ययमेव यक्षस्त्वं गुप्त एधि प्रिय ! मन्दिरान्तः ॥३८०॥

उदीति—ताभ्यां प्रियाभ्यां कान्तमभिप्रियं वत्सराजं प्रतीति उदीरितम् इतीति किमित्याह—अमन्दबुद्धि सुबुद्धिरयं यक्ष एव युष्मत्प्रतिच्छन्दं त्वत्समानाकृति विधाय यास्यति प्रिय ! त्वं मन्दिरान्तः गृहे एव गुप्तः एधि भव ॥३८०।

तदुक्तमङ्गीकुरुते स्म सोऽपि को वा हितं नाऽऽद्रियतां विदग्धः ।
व्यजिज्ञपद् भूपमुपेत्य यक्षस्तद्रूपतां प्राप्त इवाऽवतारात् ॥३८१॥

तदिति—स वत्सराजोऽपि ताभ्यां प्रियाभ्यामुक्तमङ्गीकुरुते स्वीकरोति स्म यत., को वा विदग्धः अवसरज्ञः हितं स्वहितकरं वचनं न आद्रियताम्, मन्यताम् अपि तु सर्व एवं

अन्यथा विदग्धतैव निर्मूला स्यादिति भावः । यक्षः अवतारादिव पुनर्जन्मवशादिव तस्य वत्सराजस्य रूपतां स्वरूपभावं प्राप्तः सन् भूपमुपेत्य व्यजिज्ञपत् ॥३८१॥

तद्विज्ञापनमेवाह—

**कृतान्तसद्माधिगतेन देव ! व्यावर्तनीयं दिवसैः कियद्भिः ।**
**मयेति तेनाभिहिते नरेन्द्रस्तं प्रत्यवादीद् वदतां पुरोगः ॥३८२॥**

कृतेति—देव ! राजन् ! कृतान्तस्य यमस्य सद्म गृहमधिगतेन मया कियद्भिः किङ्क्रस्यकैः दिवसैः कृत्वा व्यावर्त्तनीयमितीत्थं तेन वत्सरूपेण यक्षेण अभिहिते कथिते सति वदतां पुरोगः वाक्पटुः नरेन्द्रः तं यक्षं प्रत्यवादीत् ॥३८२॥

किं प्रत्यवादीदित्याह—

**त्वया निवास्यं ननु मासमात्रमित्युक्त एषोऽवनिवासवेन ।**
**समेषु लोकेषु विलोकयत्सु कीनाशवेश्म त्वरितं विवेश ॥३८३॥**

त्वयेति—त्वया वत्सराजेन ननु मासमात्रं नोनाधिकं निवास्यं यमगृहे वस्तव्यमितीत्थमवनिवासवेन नृपेणोक्तः एष वत्सरूपो यक्षः समेषु सर्वेषु लोकेषु विलोकयत्सु सत्स्वेव कीनाशस्य यमस्य वेश्म गृहं चितां त्वरितं विवेश ॥३८३॥

**तदाऽऽप पद्माकरवत् स पद्मैर्हर्षं नृपस्तैः सचिवैः सहैव ।**
**कलानिधौ तत्र तिरोहितेऽपि लोकः पुनः कैरववद् मिमील ॥३८४॥**

तदेति—तदा तस्मिन् काले पद्मैः सह पद्माकरः तडागः स इव तैः सचिवैः सहैव नृपो हर्षमाप वत्सराजस्त्रीप्राप्तिसम्भावनयेति भावः तत्र कलानिधौ चन्द्रे तिरोहितेऽपि अस्तंगते इव पुनः, लोकः कैरववत् कुमुदवत् मिमील खेदात् ग्लानोऽभवदित्यर्थः ॥३८४॥

**अदःप्रिया आनयताऽधुनैवेत्याज्ञापयद् मन्त्रिवरान् नरेशः ।**
**तमीदृशं व्यज्ञपयंस्ततस्ते पुष्पेषुमोहेन गलद्विवेकम् ॥३८५॥**

अद इति—नरेशः नृपः मन्त्रिवरान् अदः प्रिया. वत्सराजभार्याः अधुना एव आनयत इतीत्थम् आज्ञापयत् दिदेश, वत्सराजो मृत इति साम्प्रतम् नावरोधशङ्कालेशोऽपीति भावः । ततः ते मन्त्रिणः पुष्पेषुणा कामेन कृतेन मोहन वैचित्येन गलद्विवेकं विवेकभ्रष्टं तं नृपमीदृशं वक्ष्यमाणप्रकारं व्यज्ञपयन् ॥३८५॥

**समाहरिष्याम इमाः सलीलं लीलावतीः किन्तु समुत्सुकत्वम् ।**
**जहीहि, यन्नाथ ! जनापवादः स्फूर्जन् समस्त्यत्र सुदुर्निवारः ॥३८६॥**

तद्विज्ञापनमेवाह— इमाः त्वदिष्टाः लीलावतीः आनेष्यामः, किन्तु स्मुत्सुकत्वं त्वरा ज-हीहि त्यज ! नाथ ! यद्यतः अत्र विषये सुदुर्निवारः अप्रतिविधेयः जनापवादः नृपः वत्सराजस्त्रियं छलेन हृतवानित्येवं लोकापवादः स्फूर्जन् प्रकटः समस्ति भवति ॥३८६॥

पृथुः स भावी भुवनान्तरालेऽकार्यं विधातुं त्वयि धावतीश ।
ततोऽवनीवासव ! मासमात्रं तद्दत्तमेवाऽऽगमयस्व कीर्त्यै ॥३८७॥

ततः कालक्षेपो न्याय्य इत्याह—पृथुरिति ! ईश ! ततः स्वामिन् ! अकार्यं लोकापवाद-विषयत्वाद् दुष्कृतं विधातुं कर्त्तुं त्वयि धावति त्वरमाणे सति सोऽपवादः। भुवनान्तराले लोके पृथुरिति महीन् भावी भविष्यति, दुष्कृतमपि कालमपेक्ष्य क्रियते चेल्लोकापवादो मन्दायते अन्यथा तु महीयते इति भावः, ततस्तस्माद्धेतोः अवनीवासव ! नृप ! कीर्त्यै यशोनिमित्तम् यशोरक्षणार्थमिति यावत् तस्मै वत्सराजाय दत्तमवधीकृतं मासमात्रं कालमागमयस्व प्रतीक्षस्व ॥३८७॥

यशांसि येषां विमलानि नाथः कुर्वन्ति पीयूषमयूखबिम्बम् ।
बलेन तेषां किमनेन किं वा, बुद्ध्याऽनया किं बत जीवितेन ? ॥३८८॥

यशोमालिन्यमनिष्टमित्याह—येषां जनानाम् विमलानि कलङ्करहितत्वादुज्ज्वलानि यशांसि पीयूषमयूखस्य चन्द्रस्य बिम्बं मण्डलमधः सकलङ्कत्वात्स्वापकृष्टं न कुर्वन्ति, येषां यशांसि मलिनानीति सारार्थः, तेषां जनानाम् अनेन प्रस्तुतेन बलेन पराक्रमेण सेनादिरूपेण वा किम्? न किमपीत्यर्थः, बलस्य निर्मलयशः फलत्वादिति भावः। तथा अनया बुद्ध्या किम्? बत किञ्च जीवितेन किम्? यशोमालिन्ये सर्वमेतदकिञ्चित्करमिति भावः ॥३८८॥

समासहस्रेण समं स मासं भूपः स्मरार्तो गमयाम्बभूव ।
पुनः समानेतुमयं न्यदिक्षत्, तद्वल्लभा मन्त्रिचतुष्टयं तत् ॥३८९॥

समेति—स भूपः स्मरार्तः कामपीडितः सन् मासं मासात्मकं कालं समासहस्रेण वर्षसहस्रेण समं तुल्यं गमयाम्बभूव, पीडितस्य हि स्वल्पोऽपि कालो दीर्घ इव भासते इति भावः। अयं नृपः पुनः तत्प्रस्तुतं मन्त्रिचतुष्टयं तस्य वत्सराजस्य वल्लभाः तिस्रः प्रियाः समानेतुं न्यक्षदादिष्टवान् ॥३८९॥

इतश्च तास्तं स्नपितं विलिप्तं कृत्वा कुमारं प्रविभूषितं च ।
समाननं व्यन्तरनायकं स्म, यक्षेण दक्षेण समानयन्ति ॥३९०॥

इतश्चेति—इतः अस्यां दिशि च ताः वत्सराजस्त्रियः तं कुमारं वत्सराजम् स्नपितं कृतस्नानं विलिप्तं कृतचन्दनं प्रविभूषितं सुमण्डितं च कृत्वा दक्षेण कुशलेन यक्षेण, द्वारा समाननं ससत्कारं व्यन्तरनायकं कञ्चिद्व्यन्तरेशं समानयन्ति आह्वानीतवत्यः स्म ॥३९०॥

व्यन्तरानयनप्रयोजनमाह—

निवेद्य वृत्तान्तममुं यथार्थं स प्रार्थितः स्वाङ्गविभूषणानि ।
विभासमानानि महाद्भुतानि विश्राणयामास कुमारकाय ॥३९१॥

अमुं प्रस्तुतं यथार्थं वृत्तान्तं निवेद्य प्रार्थितः स व्यन्तरनायकः कुमारकाय वत्सराजाय विभासमानानि भास्वराणि महाद्भुतान्यलौकिकत्वादत्याश्चर्यकराणि स्वाङ्गविभूषणानि विश्राणयामास ददौ ॥३९१॥

कुमारमारोप्य च यक्षतार्क्ष्ये, हस्ताम्बुजस्थापितनालदण्डः ।
स्वयं प्रतीहारवदग्रयायी स प्रास्थित व्यन्तरनिर्जरेशः ॥३९२॥

कुमारेति—कुमारं वत्सराजं च यक्षरूपे तार्क्ष्ये अश्वे आरोप्य हस्ताम्बुजे करकमले स्थापितो नालदण्डः येन स तादृशः करे गृहीत नालदण्डः स्वयं स्वत एव हितबुद्ध्या न तु परप्रेरणया प्रतीहारवत् द्वारपालवदग्रयायी अग्रेसरः स व्यन्तराख्यस्य निर्जरस्य देवस्य ईशः पतिः प्रास्थित चचाल ॥३९२॥

अथ नागरोक्तिमाह—

यदेश कीनाशगृहं गतोऽपि भूयः समागादसमानमानः ।
तदत्र नूनं प्रवितर्कयामः प्रोज्जागरं नागरभाग्यमेव ॥३९३॥

असमानमानः अनुपममानः एष वत्सराजः कीनाशगृहं यमसदनं गतोऽपि भूयः पुनः यदतः समागादागतवान् तत्ततोऽत्र विषये प्रवितर्कयामोऽनुमिनुमः, किमित्याह—नागरभाग्यमेव प्रकर्षेणोज्जागरम् फलदानोन्मुखमस्तीति शेष. नागराणां भाग्यादेवासौ यमगृहगतोऽप्यागतः नह्यन्यथा यमगृहगतः समायातीति भावः ॥३९३॥

इति प्रमाणीकृतनागराणां शृण्वन् कथाः श्रोत्रसुखाः कुमारः ।
तुरङ्गसिंहादवतीर्य सिंहद्वारं प्रतीहारगिरा विवेश ॥३९४॥

इतीति—इत्युक्तप्रकाराः श्रोत्रसुखाः कर्णप्रियाः प्रमाणीकृतानामाप्तानां नागराणां कथाः वार्त्ताः शृण्वन् कुमारो वत्सराजः तुरङ्गसिंहादश्वश्रेष्ठादवतीर्य प्रतीहारस्य द्वारपालस्य गिरा वचनेन सिंहद्वारं विवेश ॥३९४॥

अथ भूपमनोवृत्तिचित्रतामाह—

प्रणम्य तस्मिन् पुरतो निषण्णे भूपस्य नानारससङ्करोऽभूत् ।
विलोकयत्स्वेव ममार योऽस्मासूज्जीवयामास कथं स्वमेषः ? ॥३९५॥

तस्मिन् वत्सराजे प्रणम्य, भूपमिति लभ्यते पुरतोऽग्रः निषण्णे उपविष्टे सति भूपस्य नाना बहूनां रसानां वितर्काश्चर्यादिभावानां सङ्करः एकत्र मनसि सन्निवेशोऽभूत् भूपमनोवृत्तिर्नानाप्रकाराऽननीत्यर्थः । तदेवाह क्रमशः यः वत्सराजः अस्मासु विलोकयत्सु सत्स्वेव ममार यमसदनप्रवेशेन कृत्वेत्यर्थ एष स वत्सराजः स्वं कथमुज्जीवयामास चित्रमेतद् यत अत्र हेतुं न पश्याम इति भाव. ॥३९५॥

गतः कथं वाऽयमुपागतोऽत्राऽस्तीत्यद्भुतं नाम रसं दधानः ? ।
प्रियास्मृतेस्तस्य च विप्रलम्भं प्राप्तेरभावाच्च पुनर्विषादम् ॥३९६॥

गत इति—वा अथवा तथा गतः यमगृहं गतः अयं वत्सराजः कथं केन प्रकारेण अत्रोपागतः अस्ति ? नहि यमगृहं गतः कोऽप्यद्यावधि निवृत्तो दृष्टः श्रुतोवेत्यद्भुतमेतदिति अद्भुतं नाम रसं मनोवृत्तिविशेषं दधानः तस्य वत्सराजस्य प्रियाणां स्मृतेश्च विप्रलम्भम् शृङ्गारभेदं रसम्, प्राप्तेः तत्प्रियाप्राप्तेरभावाच्च पुनः विषादं तदाख्यभावम्, दधान इति सम्बध्यते ॥३९६॥

विलोकनात्तस्य च वीरभावं दम्भप्रकर्षात् करुणं स्पृशंश्च ।
मनोभवाग्नेरपि रुद्रचर्यां वीभत्सतां तद्व्यथयोपतप्तः ॥३९७॥

विलोकेति—तस्य वत्सराजस्य विलोकनाच्च वीरभावम् स्पृशन् गच्छन् प्रतिपक्षं पृष्ट्वोत्साहवृद्धेरिति भावः । दम्भस्य वत्सराजवञ्चनस्य प्रकर्षादाधिक्यात्करुणं तदाख्यं रसम् हा, कथमीदृशो मया वञ्चित इति कृपाविर्भावादिति भावः स्पृशंश्च मनोभवाग्नेः कामज्वराच्च रुद्रचर्यां रौद्रभावम् , कामविघातेक्रोधोत्पत्तिरिति भावः, तद्व्यथया कामपीडया अपतप्तोऽतिग्लानः वीभत्सतां विवर्णभावत्वाद् घृणास्पदत्वम् ॥३९७॥

भयानकत्वं भिषजां कुलानां प्रोक्तोपचारव्यभिचारतोऽपि ।
समाश्रयन्नैकरसावकीर्णः स व्याजहाराऽवहितः कुमारम् ॥३९८॥

भिषजां वैद्यानां कुलानां समुदायानां प्रोक्तमन्त्रिरूपाणाम् प्रोक्तानां दर्शितानामुपचाराणां तत्स्त्रीप्राप्त्युपायानां व्यभिचारतः वैफल्यतोऽपि भयानकत्वम् दण्डशङ्कया भयजनकत्वादिति भावः। समाश्रयन् अतएव नैकैरनेकैरसैरवकीर्णः व्याप्तः स भूपः अवहितः स्वस्थः सन् कुमारं वत्सराजं व्याजहार जगाद ॥३९८॥

नृपोक्तिमेवाह—

समस्ति मित्रं मम वत्सराज ! श्रीधर्मराजः स शिवेन कच्चित् ।
न वर्तते देवलिपिर्भुवीति प्रीतः स किं किं मम संदिदेश ? ॥३९९॥

समस्तीति–वत्सराज ! मम मित्रं स प्रसिद्धः श्रीधर्मराजः यमराजः शिवेन सुखेन समस्ति वर्त्तते, कच्चिदिति कामप्रवेदने स सुखेन वर्त्ततामिति मम कामप्रवेदनेति भावः । भुवि पृथिव्यां देवलिपिः न वर्त्तते ततश्च तेन दत्तं पत्रं मम न कोऽपि वाचयेदिति तेन पत्रं तु नैव दत्तं स्यादित्यतः स प्रीतः प्रसन्नः सन् मम किं किं सन्दिदेश वाचिकं ददौ ? ॥३९९॥

स वत्सराजोऽपि जगौ जगत्त्र ! राजन् ! प्रतीहारनिवेदितं माम् ।
अनामयं ते परिपृच्छय पूर्वं नम्नं सखा पर्यनुयुक्त चैवम् ॥४००॥

सेति—स वत्सराजोऽपि जगौ, किमित्याह–जगन्ति त्रायते इति स तत्सम्बोधने, महीप ! राजन् ! नम्नं कृतप्रमाणं मां प्रतीहारेण द्वारपालेन निवेदितं ज्ञापितं सन्तं ते तव अनामयं नैरुज्यं पूर्वमादौ परिपृच्छय पृष्ट्वा सखा त्वन्मित्रं यमराजः एवं वक्ष्यमाणप्रकारेण पर्यनुयुक्त पृष्टवान् ॥४००॥

स्मृता वयं तेन सुहृत्तमेन वंहीयसो नेह स एव भव्यम् ।
अजर्यमस्माकमुपार्जितं यत् स्वर्णं सुमेरोरिव जीयते न ॥४०१॥

तत्प्रश्नमेवाह—स्मृता इति वयं तेन सुहृत्तमेन नृपेण वंहीयसः कालो दिष्टोऽप्यनेहापी" त्यमरः । भूयसः अनेहसः कालात्, बहून् दिनानतीत्येत्यर्थः । स्मृताः स्मृतिगोचरतां नीताः अस्माकम् उपार्जितं सम्पादितमजर्यं मैत्री भव्यम् वर्धिष्णु न तु कालव्यवधाने सति विनाशि, अतएव, यदजर्यं सुमेरोः स्वर्णमिवं न जीयते क्षीयते, सुमेरौ स्वर्णमिवास्माकं मैत्री सर्वदैव तिष्ठतीत्यर्थः ॥ उपमा ॥४०१॥

अकारि भूमीश्वर ! सान्वयत्वं सख्या स्वनाम्नः समवर्तिना ते ।
प्रदाय दिव्याभरणं विचित्रं त्योऽपि भृत्ये त्वमिवार्चितोऽस्मि ॥४०२॥

अकारीति—भूमीश्वर ! नृप ! ते तव सख्या मित्रेण समवर्तिना यमराजेन स्वनाम्नः सान्वयत्वं यथार्थत्वमकारि, तद्धेतुमाह—यद्यतः ते तव भृत्योऽपि तादृगादरापात्रमपि सन् विचित्रमलौकिकं दिव्याभरणं प्रदाय त्वमिव अर्चितः सत्कृतोऽस्मि, एवञ्च समं सर्वत्र भृत्ये नृपे च तुल्यभावे न वर्त्तते इति स समवर्तीति यथार्थं नाम तस्येति भावः ॥४०२॥

स्वकीयदौवारिक एष देव ! प्रत्यायनाय प्रहितोऽस्ति तेन।
विलोकयामास ततश्च साङ्गोपाङ्गं नराधीश इमं निविष्टम् ॥४०३॥

स्वेति—ननु त्वयाऽन्यतोऽपि लब्ध्वा वच्ये इति चेत्तत्राह—देव ! तेन तव मित्रेण यमेन प्रत्यायनया विश्वासाय एष पुरोऽवस्थितः स्वकीयदौवारिकः द्वारपालः प्रहितः प्रेषितोऽस्ति यद्यहं मिथ्यावाक् न तदा तद्दौवारिकस्यात्रागमनमुपपद्यते इति भावः ततोऽनन्तरञ्च नराधीशः निविष्टमुपविष्टमिमं वत्सराजनिर्दिष्टं दौवारिकं साङ्गोपाङ्गमाचूडं विलोकयामास ॥४०३॥

तद्विलोकनविषयमेवाह—

व्यचिन्तयच्च स्पृशतः क्रमौ न क्ष्मां लोचने यन्न निमीलतोऽस्य।
यदस्य न म्लायति पुष्पमाला तद् द्वाःस्थतामञ्चति तस्य सोऽयम् ॥४०४॥

व्यचिन्तयच्च विलोक्येतिशेषः, किमित्याह—अस्य दौवारिकस्य यद्यतः क्रमौ चरणौ क्ष्मां पृथ्वीं न स्पृशतः, लोचने नेत्रे न निमीलितः निमेषं गच्छतः तथा यद्यतोऽस्य पुष्पमाला न म्लायति शुष्कतां गच्छति तत्तस्माद्धेतोः अयं दावारिकः तस्य यमस्य द्वाःस्थतां द्वारपालकत्वमञ्चति अर्हति, मनुष्यश्चेदयं स्यात्तर्हि भूस्पृक्चरणः सनिमेषलोचनः म्लायमानमाल्यश्च स्यात् नहि देवादन्यत्र विशेषोऽयमिति सत्यम् वत्सोक्तमिति भावः ॥४०४॥

अथ दौवारिकोक्तिमाह—

स दम्भदौवारिक आललाप मत्स्वामिसंदेशमिमं शृणुष्व।
अनाप्तनिर्देशतया मघोनस्त्वत्सन्निधौ नैव समागतोऽस्मि ॥४०५॥

सेति—स दम्भेन न तु तत्त्वतः दौवारिकः व्यन्तरेश आललापोवाच, किमित्याह—इमं वक्ष्यमाणं मत्स्वामिनो यमराजस्य सन्देशं शृणुष्व स्वप्रामाणिकत्वमादौ प्रकाशयति मघोनः स्वस्वामिनः अनाप्तनिर्देशतया अनाज्ञातः स्वैरचर्यात एव त्वत्सनिधौ नैव आगतः अस्मि कथमन्यथा सन्देशं कथयामीति भावः ॥४०५॥

सन्देशमेवाह—

निजप्रधाना भवता सदाऽत्र तत् प्रेषणीयाः प्रवराः पुमांसः।
सखे ! स्वदृष्ट्यापि कदापि चाहं संभावनीयस्त्वयका विशिष्य ॥४०६॥

निजेति—तत् तस्माद्धेतोः अत्र यमपुरे तत् प्रसिद्धाः निजप्रधानाः स्वामात्याः प्रवराः उत्तमाः पुमांसश्च सदा प्रेषणीयाः किञ्च सखे ! त्वयका त्वया विशिष्य आवश्यकतया कदापि च स्वदर्शनेन स्वदृष्ट्याऽपि अहं यमः सम्भावनीयः अनुग्राह्यः, न केवलममात्यादीनां स्वस्यापि [illegible] ॥४०६॥

यमावलोकोत्सुकतां दधानं व्यालोक्य तं मध्यमलोकपालम् ।
उवाच मायाप्रतिहार एष स्वामिन्! यियासोपयमेऽस्ति ते किम् ? ॥४०७॥

यमेति—तं मध्यमलोकं पृथिवीं पालयतीति तं नृपं यमस्य अवलोकेऽवलोकने उत्सुकतां दधानं व्यालोक्य एव प्रस्तुतः मायाप्रतीहारः कपटद्वारपाल उवाच, किमित्याह-स्वामिन्! ते तव उपयमे यमसमीपं यियासा यातुमिच्छाऽस्ति किमिति प्रश्ने ॥४०७॥

मनोदिदृक्षाप्रवणं ममाऽस्तीत्युक्ते नृपं सोऽपि पुनर्बभाण ।
ममानुयानं कुरु देव ! तर्हि तद्दर्शये वर्त्म यथा यथास्थम् ॥४०८॥

मन इति—मम मनः दिदृक्षाप्रवणं यमावलोकनोन्मुखमस्ति इतीत्थं नृपेणोक्ते सति सः मायादौवारिकोऽपि नृपं बभाण किमित्याह-देव! तर्हि दिदृक्षासत्त्वे मम अनुपश्चात् यानं गमनं कुरु मम पृष्ठत आगच्छ, यथा येन प्रकारेण यथास्थम् यथावस्थितं तस्य यमस्य वर्त्म मार्गं दर्शये तज्ज्ञत्वान्ममेति भावः ॥४०८॥

स वेत्रभृद् भूमिभुजाऽनुयातः प्रासादमासाद्य परेतभर्तुः ।
अदत्त झम्पामपि पावकान्त-स्तत्पृष्ठतस्ते ददुरप्यमात्याः ॥४०९॥

सेति—स व्यन्तररूपः वेत्रभृद् दौवारिकः भूमिभुजा नृपेण अनुयातः अनुसृतः सन् परेतभर्तुः यमराजस्य पूर्वनिर्मितं प्रासादं यमसदनमासाद्यारुह्येत्यर्थः। पावकान्तः पूर्वकृतखात-प्रज्वलितानलमध्ये झम्पामपि ददौ झम्पापातं चकार, तस्य पृष्ठतः पश्चात् ते अमात्या अपि ददुः झम्पापातं चक्रुः ॥४०९॥

तदैव चत्वार इमेऽपि भूतास्ते भस्मसात् तेन धनञ्जयेन।
प्रवर्तका दुष्कृतसंचयस्य यथा प्ररूढास्तपसा कषायाः ॥४१०॥

तदैवेति—तदैव झम्पापातानन्तरमेव इमे प्रस्तुताः चत्वारोऽप्यमात्याः तेन यमसदन-स्थेन धनञ्जयेनानलेन भस्मसाद्भूताः दग्धाः इत्यर्थः। यथा यद्वत् दुष्कृतसञ्चयस्य पापराशेः प्रवर्त्तकाः वर्धकाः प्ररूढा उत्पन्नाः कषायाः कामक्रोधादयः तपसा तपोव्रतादिना भस्मसाद् भवन्तीत्यर्थाल्लभ्यते ॥४१०॥

अमूननुक्ष्मापतिरेव झम्पासंपातमाधातुमधीतयत्नः ।
बभूव यावत् सहसा स तावद् धृत्वा करे व्यञ्जपि वत्सकेन ॥४११॥

अमूनिति—अमून् कृतझम्पापातानमात्यानुपृष्ठतः झम्पासम्पातं झम्पापातमाधातुं कर्त्तु अधीतयत्नः कृतोद्योगः क्ष्मापतिः नृप एव यावद् बभूव, तावत् सहसा झटिति वत्सकेन वत्सराजेन करे धृत्वा व्यज्ञपि विज्ञापितः ॥४११॥

विज्ञापनमेवाह—

विशन् कथं जीवति देव ! कोऽपि जाज्ज्वल्यमानज्वलनान्तराले ? ।
मम द्विषोऽमी सचिवाः समस्ताः क्षिप्ता मया तेन च विप्रतार्य ॥४१२॥

देव ! कोऽपि जनः जाज्वल्यमानस्य समिद्धस्य ज्वलनस्याग्नेरन्तराले मध्ये विशन् प्रविशन् कथं जीवति ? कथमपि न जीवतीत्यर्थः । ननु तर्हि अमात्याः प्रविशन्तः कथं न वारिता ? इति चेत्तत्राह—अमी कृतानलप्रवेशाः समस्ताः सर्वे एव सचिवाः मम द्विषोऽहिताः तेन हेतुना च मया विप्रतार्य वञ्चयित्वा क्षिप्ताः वह्नौ प्रवेशिताः । शत्रूणां येन केनाप्युपायेनोन्मूलनमेव परमा नीतिरिति भावः ॥४१२॥

ननु तर्हि अहं कुतो वञ्चित इति चेतत्राह—

व्यधायि युष्माकमपीदमेवं यद्विप्रलम्भत्वमहो ! मयापि ।
मम स्वपत्तेरपि सह्यतां तत् सर्वंसहा यत् प्रभवो भवन्ति ॥४१३॥

अहो ! इति खेदे, मया वत्सराजेन युष्माकं मान्यानां नृपाणामपि एवमीदृक् ईदमुक्तप्रकारं विप्रलम्भत्वं वञ्चनं व्याधायि कृतम्, तन्मत्कृतवञ्चनरूपापराधम्, स्वस्य पत्तेः भृत्यस्यापि मम वत्सराजस्य सह्यतां क्षम्यताम् यद्यतः प्रभवः भवादृशाः समर्थाः सर्वंसहाः सर्वापराधक्षन्तारः भवन्ति, अत्र सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः ॥४१३॥

नृपस्ततोऽचिन्तयदस्य नूनं विश्वत्रयीसारमुदग्रभाग्यम् ।
प्रयुज्यमाना प्रतिकूलताऽपि सर्वानुकूलत्वमियाय येन ॥४१४॥

नृप इति—ततोऽनन्तरम् नृपोऽचिन्तयत् किमित्याह—नूनं ध्रुवम्, अस्य वत्सराजस्य उदग्रं उन्नतं भाग्यम् विश्वत्रय्यां सारं श्रेष्ठम्, ननु कुत एतदनुमानमिति चेत्तत्राह—येन हेतुना प्रतिकूलतानुकूलता प्रयुज्यमाना परेणापाद्यमानाऽपि सर्वप्रकारेणानुकूलत्वमनुगुणत्वमियाय प्राप, भाग्यत एवेत्थं भवतीति भावः ॥४१४॥

अतः स्फुरत्पुण्यसमृद्धयेऽस्मै श्रीसुन्दरीनामसुतां सुरूपाम् ।
समर्प्य नार्पत्यमिदं च हृद्यं सद्यस्तपस्यामि समाधिनिष्ठः ॥४१५॥

अत इति--अतो हेतोः स्फुरन्ती इष्टफलाभिमुखी पुण्यसमृद्धिर्यस्य तादृशाय शुभभाग्यायास्मै वत्सराजाय सुरूपां श्रीसुन्दरीनामसुताम् इदं स्वकीयं हृद्यं प्रियं नार्पत्यं राज्यं च समर्प्य दत्त्वा समाधिनिष्ठः समाहितः सन् सद्योऽविलम्बेन तपस्यामि तपः साधयामि ॥४१५॥

परप्रियासङ्गमकामतत्या यत् पापभागी विहितो निजात्मा ।
इतीद्धवैराग्यपरप्रकर्षाद्, ध्यायन्नयं सद्म समाससाद ॥४१६॥

ननु राज्यं सुतां ददतां, तपसः किं प्रयोजनमिति चेत्तत्राह—यद्यतः परस्य प्रियायाः भार्यायाः सङ्गमस्य कामतत्या इच्छाबाहुल्येन निजात्मा पापभागी विहितः अतः तपस्यामीति पूर्वेणान्वयः तपतोहि पापक्षय इति भावः इतीत्थं इद्धस्य प्रबुद्धस्य वैराग्यस्य परप्रकर्षादत्युग्रत्वाद्धेतोः ध्यायन् अयं नृपः सद्म स्वभवनं समाससाद प्राप ॥४१६॥

व्यवाहयत् तेन नृपः स्वपुत्रीं जवौषधीकान्तबले विलग्ने ।
महोत्सवे स्फूर्जति यौतकेऽदाद् राज्यं गजेन्द्रादिसमन्वितं च ॥४१७॥

व्यवेति—नृपः तेन वत्सराजेन सह जीवस्य बृहस्पतेः औषधीकान्तस्य चन्द्रस्य च बलं यस्मिन् तादृशे विशिष्टे लग्ने शुभमुहूर्ते महोत्सवे स्फूर्जति सहर्षं जायमाने सति स्वपुत्रीं श्री–सुन्दरीं व्यवाहयत् परिणायितवान्, यौतके पारितोषिके गजेन्द्रादि समन्वितं राज्यं चादात् ॥४१७॥

वने तपस्यां स्वयमादिताऽथ, द्वेधा नरेन्द्रो जितशत्रुरेषः ।
नयप्रकर्षेण विराजमानः श्रीवत्सराजस्तु शशास राज्यम् ॥४१८॥

वनेइति—अथानन्तरं द्वेधा द्विप्रकारेणान्तरोबाह्यश्चेति जितः शत्रुर्येन स एष नरेन्द्रः स्वयं वने तपस्यामादित स्वीकृतवान् । विराजमानः श्रीवत्सराजस्तु नयप्रकर्षेण चारु नीत्या राज्यं शशास ॥४१८॥

क्षितिप्रतिष्ठाख्यपुरात् परेद्युः प्रस्थापितो नागरमन्त्रिमुख्यैः ।
समर्पयामास नृपाय लेखं मर्त्यप्रधानः समुपेत्य कोऽपि ॥४१९॥

क्षितीति—परेद्युरेकदा क्षितिप्रतिष्ठाख्यपुरात् नागरैः मन्त्रिमुख्यैश्च प्रस्थापितः प्रहितः कोऽपि मर्त्यप्रधानः उत्तमः पुरुषः समुपेत्यागत्य नृपाय श्रीवत्सराजाय लेखं पत्रं समर्पयामास ददौ ॥४१९॥

नृपः परिज्ञाय तदिङ्गितैः स्वव्यापारिणः पूरुषतोऽतिगुप्तम् ।
अवाचयद् वर्णकभङ्गिचित्रं पत्रं विना लेख्यमिवागतं तम् ॥४२०॥

नृप इति— नृपो वत्सराजः तदिङ्गितैः तस्य मर्त्यप्रधानस्य अभिप्रायानुगुणचेष्टितैः अतिगुप्तं परिज्ञाय ज्ञात्वा स्वव्यापारिणः पुरुषतः स्वशासनवर्तिनः पुरुषाद्-वर्णकानां इत्यादि-नृपो वत्सराजः इङ्गितैः चेष्टितैः तत्पत्रं परिज्ञाय ज्ञात्वा गुप्तमेतत्पत्रमित्यनुमाप, स्वव्यापारिणः स्वकर्मकराद्विश्वासपात्रात्पूरुषतोऽतिगुप्तम् यथास्यात्तथा वर्णकानां वर्णानां भङ्गिभिः सुलेखनरचनाभिश्चित्रं चित्रवर्णलेख्यम् विना चित्रमालेख्यमिवागतं प्राप्तं तं लेखमवाचयत् ॥४२०॥

तथाहि सस्वस्ति पुरीपराद्ध्यांऽवन्त्याख्यपुर्यां समराजराजम् ।
समाश्रितश्रीपदवत्सराजं प्रौढप्रतापक्षतशत्रुजातम् ॥४२१॥

क्षितिप्रतिष्ठाख्यपुरादमात्याः पौरैर्युता योजितपाणिपद्माः ।
वसुन्धरापृष्ठमिलल्ललाटा नत्वा स्वयं विज्ञपयन्ति चैतत् ॥४२२॥युग्मम्॥

तद्वाचितमेवाह—तथा हि सस्वस्ति सकुशलं पुरीषु नगरीषु पराध्यां श्रेष्ठाया अवन्त्याख्यपुर्या समेषां सर्वेषां राज्ञां राजानं तं राजराजम्, समाश्रितं श्रियो राजलक्ष्म्याः पदं येन तादृशं वत्सराजम् प्रौढेनोग्रेण प्रतापेन क्षतं निहतं शत्रुजातं येन तादृशं वत्सराजम्—क्षितिप्रतिष्ठाख्यपुरात् पौरैः युताः सहिताः योजितानि बद्धानि पाणयः पद्मानीव-यैस्ते तादृशाः कृतकरसम्पुटाः वसुन्धरा पृष्ठे पृथिव्यां मिलन्तः प्रणामव्यापारेण स्थिताः ललाटा येषां ते तादृशा अमात्याः नत्वा स्वयं च स्वयमेव एतद्वक्ष्यमाणं विज्ञपयन्ति ॥४२१-४२२॥युग्मम्॥

यथा महाराज! नरोत्तमेन श्रीदेवराजेन विबाधिताः स्मः ।
न देवराजेन सुरोत्तमेन स्वामिंस्तथा न्यायपराङ्मुखेन ॥४२३॥

विज्ञापनमेवाह—यथेति निर्देशे, महाराज! स्वामिन्! सुरोत्तमेन देवराजेन न तथा किन्तु न्यायपराङ्मुखेन अन्यायिना नरोत्तमेन राज्ञा श्रीदेवराजेन तदाख्येन विबाधिताः नितान्तम् पीडिताः स्म, वयमितिशेषः ॥४२३॥

प्रजा परिम्लानमुखी समस्ता चन्द्रोदये चक्रवधूरिवैषा ।
वियोगविध्वस्तमनो विलासा सूरस्य ते दर्शनमिच्छतीह ॥४२४॥

प्रजा इति—अतः, इह क्षितिप्रतिष्ठाख्यपुरे चन्द्रोदये चक्रस्य चक्रवाकस्य वधूरिव समस्ता प्रजापरिम्लानमुखी उदासीना वियोगेन तद्विरहेण विध्वस्तः दूरीभूतो मनोविलासः हर्षः यस्याः सा तादृशी सति सूरस्य सूर्यरूपस्य ते तव वत्सराजस्य दर्शनमिच्छति, अत्रोपमानुप्राणितरूपकम् ॥४२४॥

तदीशपादा विहितप्रसादाः सद्यः समागत्य तथा विधद्ध्वम् ।
इमे जनानैव यथा स्मरन्ति श्रीवीरसेनस्य रसेश्वरस्य ॥४२५॥

तदीशेति— तत्ततः ईशपादाः स्वामिनो भवन्तः विहितप्रसादाः सन्तः प्रसद्येत्यर्थः, सद्यः तत्कालमेव समागत्य तथा कुरुध्वं यथा इमे अत्रत्या जनाः प्रजाः रसेश्वरस्य महीपतेः श्रीवीरसेनस्य तव पितुः नैव स्मरन्ति स्मृत्यर्थानां कर्मणि षष्ठी । श्रीवीरसेनं नैव स्मरन्तीत्यर्थः ॥४२५॥

तदेवमाकर्ण्य नरेश्वरः स्वतातस्य लोकानतिदुःखितांस्तान् ।
स्वराज्यसन्तोषितमानसोऽपि भम्भां तदा वादयति स्म धीरः ॥४२६॥

तदेवेति—तत्तत एवमुक्तप्रकारेण स्वतातस्य स्वपितुः तान् लोकान् प्रजाः अतिदुःखितान् समाकर्ण्य ज्ञात्वा तदा धीरः नरेश्वरः श्रीवत्सराजः स्वराज्येन सन्तोषितमन्यानभिलाषुकं मानसं यस्य तादृशोऽपरराज्यास्पृहोऽपि भम्भां पटहं प्रयाणसूचकं वाद्यविशेषं वादयति स्म ॥४२६॥

चरैर्विदित्वा सबलं समेतं कल्लोलजालैरिव सिन्धुराजम् ।
विरोधितां पौरजनस्य चाऽपि गत्वा वने तापसतां ललौ सः ॥४२७॥

चरैरिति—स देवराजश्च चरैः गुप्तचरैः कृत्वा कल्लोलजालैः तरङ्गसमूहैः सह सिन्धुराजं समुद्रमिवागम्यं सबलं ससैन्यं तं वत्सराजं समेतं समागतम् पौरजनस्य विरोधितां स्वस्मिन्नप्रीतिश्च विदित्वा वने गत्वा तापसतां मुनिवेषं ललौ, गत्यन्तराभावादिति भावः ॥४२७॥

विवर्णभावं सहसा प्रपन्ने दोषाकरे तत्र कलङ्कराजे ।
अनन्तलीलाः कलयन् प्रविश्य, प्रद्योतयामास पुरं स भास्वान् ॥४२८॥

विवर्णेति—तत्र तस्मिन् कलङ्केन रजते इति तस्मिन् कलङ्किनि देवराजे अथ च चन्द्रे दोषाणामाकरे अतिदुष्टे अथ च रात्रिकरे चन्द्रे सहसा झटित्येव विवर्णभावं विरूपतां सांसारिकरूपापेक्षया भिन्नरूपताम् मुनिरूपतामिति यावत् अथ च रात्रिशेषत्वान्निस्तेजस्कतां प्रपन्ने प्राप्ते सति भास्वान् सूर्यः तद्रूपः स वत्सराज. अनन्तलीलाः अपूर्वानल्पकतिपयमहोत्सवान् अथ च सहस्रभानून् कलयन् प्रविश्य पुरेमागत्य अथ चोदयं प्राप्य, पुरं नगरं विश्वञ्च्य प्रद्योतयामास तमोध्वंसात्सुखीचकार अत्र देवराजे चन्द्ररूपणे एव वत्सराजे सूर्यरूपणमिति । श्लेषमूलपरम्परित रूपकालङ्कारः ॥४२८॥

प्रभाकरस्याऽभ्युदयेऽपि तस्य सच्चक्रचित्तानि दधुः प्रमोदम् ।
निलिल्यिरे क्वापि चकोरचौरा व्याधूततृष्णाः करताप रीताः ॥४२९॥

प्रभेति—तस्य प्रभाकरस्य सूर्यरूपस्य वत्सराजस्य अभ्युदयेऽपि आगमनमात्रेऽपि सति सन्तश्च ते चक्राः चक्रवाकः चक्राणि प्रजाश्च तेषां चित्तानि प्रमोदं दधुः सूर्योदये चक्रवाका

